आनन्दाश्रमसंस्कृतग्रन्थावलिः ।



ग्रन्थाङ्कः ४२

पदपाठयुता

# कृष्णयजुर्वेदीयतैत्तिरीयसंहिता ।

श्रीमत्सायणाचार्यविरचितभाष्यसमेता ।



( तत्र पञ्चमकाण्डरूपः सप्तमो भागः ( ७ ) )

एतत्पुस्तकम्

वे० शा० रा० रा० " काशीनाथ शास्त्री आगाशे "

इत्येतैः संशोधितम् ।




तच्च

हरि नारायण आपटे

इत्यनेन

पुण्याख्यपत्तने

आनन्दाश्रममुद्रणालये

आयसाक्षरैर्मुद्रयित्वा

प्रकाशितम् ।

शालिवाहनशकाब्दाः १८२६

ख्रिस्ताब्दाः १९०४



मूल्यं ... कम् ( ५॥१२ ) ।

आनन्दाश्रमसंस्कृतग्रन्थावलिः ।




ग्रन्थाङ्कः ४२




पदपाठयुता

# कृष्णयजुर्वेदीयतैत्तिरीयसंहिता ।

श्रीमत्सायणाचार्यविरचितभाष्यसमेता ।

( तत्र पञ्चमकाण्डरूपः सप्तमो भागः ( ७ ))

एतत्पुस्तकम्

वे॰ शा॰ रा॰ रा॰ "काशीनाथ शास्त्री आगाशे"

इत्येतैः संशोधितम् ।

तच्च

हरि नारायण आपटे

इत्यनेन

पुण्याख्यपत्तने

आनन्दाश्रममुद्रणालये

आयसाक्षरैर्मुद्रयित्वा

प्रकाशितम् ।

शालिवाहनशकाब्दाः १८२६

खिस्ताब्दाः १९०४



मूल्यं पादोनरूपकषट्कम् ( ५।१२ ) ।

( अथ कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां पञ्चमोऽष्टकः । )

( तत्र प्रथमप्रपाठके प्रथमोऽनुवाकः )




हरिः ॐ ।

सा॒वि॒त्राणि॑ जुहोति॒ प्रसू॑त्यै चतुर्गृहीते॒न॑ जुहोति॒ चतु॑ष्पादः प॒शवः॑ प॒शूने॒वाव॑ रुन्धे॒ चत॑स्रो॒ दिशो॑ दि॒क्ष्वे॑व प्रति॑ तिष्ठति॒ छन्दा॑ꣳसि दे॒वेभ्योऽपा॑क्रामन्न॒ वोऽभा॒गानि॑ ह॒व्यं व॑क्ष्याम॒ इति॒ तेभ्य॑ ए॒तच्च॑तुर्गृही॒तम॑धारयन्पुरोनुवा॒क्यायै॑ या॒ज्यायै॑ दे॒वता॑यै वषट्का॒राय॒ यच्च॑तुर्गृही॒तं जु॒हो॒ति॒ छन्दा॑ꣳस्ये॒व तत्प्री॑णाति॒ तान्य॑स्य प्री॒तानि॑ दे॒वेभ्यो॑ ह॒व्यं व॑हन्ति॒ यं का॒मये॑त (१) पापी॑यान्त्स्या॒दित्ये॒कैकं॒ तस्य॑ जुहुया॒दा॒हुती॑भिरे॒वैन॒मप॑ गृह्णा॒ति॒ पापी॑यान्भवति॒ यं का॒मये॑त॒ वसी॑यान्त्स्या॒दिति॒ सर्वा॑णि॒ तस्या॑नु॒द्रुत्य॑ जुहुया॒दा॒हुत्यै॒वैन॑म॒भि क्र॑मयति॒ वसी॑यान्भवत्य॒थो॑ य॒ज्ञस्यै॒वैषाऽभिक्रा॑न्ति॒रेति॒ वा ए॒ष य॑ज्ञमु॒खादृद्ध्या॒ योऽग्नेर्दे॒वता॑या॒ एत्य॒ष्टावे॒तानि॑

* एतदाद्यनुवाकदशकं पूर्वमेव चतुर्थकाण्डप्रथमप्रपाठकसंहिताव्याख्यानेन सह व्याख्यातत्वादत्र पुनर्न व्याख्यातं भाष्यकृता । एतदनुवाकदशकस्थविषयाणां संक्षेपेण प्रदर्शनमेकादशानुवाकभाष्यारम्भे भाष्यकृतैव कृतमस्ति तत्तत्र द्रष्टव्यम् ।

सावित्राणि भवन्त्यष्टाक्षरा गायत्री गायत्रः (२) अग्निस्तेनैव यज्ञमुखादद्ध्यां अग्नेर्देवतायै नैत्यष्टौ सावित्राणि भवन्त्याहुतिर्नवमी त्रिवृतमेव यज्ञमुखे वि यातयति यदि कामयेत छन्दांसि यज्ञयशसेनार्पयेयमित्यृचमन्तमां कुर्याच्छन्दांस्येव यज्ञयशसेनार्पयति यदि कामयेत यजमानं यज्ञयशसेनार्पयेयमिति यजुरन्तमं कुर्याद्यजमानमेव यज्ञयशसेनार्पयत्यृचा स्तोमं समर्धयेति (३) आह समृद्ध्यै चतुर्भिरभ्रिमा दत्ते चत्वारि छन्दांसि छन्दोभिरेव देवस्य त्वा सवितुः प्रसव इत्याह प्रसूत्या अग्निर्देवेभ्यो निलायत स वेणुं प्राविशत्स एतामूतिमनु समचरद्यद्वेणोः सुषिरं सुषिराऽभ्रिर्भवति सयोनित्वाय स यत्रयत्रावसत्तत्कृष्णमभवत्कल्माषी भवति रूपसमृद्ध्या उभयतःक्ष्णूर्भवतीतश्चामुतश्चार्कस्यावरुद्ध्यै व्याममात्री भवत्येतावद्वै पुरुषे वीर्यं वीर्यसंमिताऽपरिमिता भवत्यपरिमितस्यावरुद्ध्यै यो वनस्पतीनां फलग्रहिः स एषां वीर्यावान्फलग्रहिर्वेणुर्वैणवी भवति वीर्यस्यावरुद्ध्यै (४) ॥

(सावित्राहुत्यग्निस्वीकारयोरभिधानम्)

(कामयेत गायत्रोऽर्धयेति च सप्तविंशतिश्च)

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां पञ्चमाष्टके प्रथमप्रपाठके प्रथमोऽनुवाकः ॥ १ ॥

---

(अथ कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे पञ्चमोऽष्टकः।)

---

(तत्र प्रथमप्रपाठके प्रथमोऽनुवाकः।)

---

हरिः ॐ।

सावित्राणि। जुहोति। प्रसूत्या इति प्र—सूत्यै। चतुर्गृहीतेनेति चतुः—गृहीतेन। जुहोति। चतुष्पाद् इति चतुः—पादः। पशवः। पशून्। एव। अवेति। रुन्धे। चतस्रः। दिशः। दिक्षु। एव। प्रतीति। तिष्ठति। छन्दांसि। देवेभ्यः। अपेति। अक्रामन्। न। वः। अभागानि। हव्यम्। वक्ष्यामः। इति। तेभ्यः। एतत्। चतुर्गृहीतमिति चतुः—गृहीतम्। अधारयन्। पुरोनुवाक्याया इति पुरः—अनुवाक्यायै। याज्यायै। देवतायै। वषट्कारायेति वषट्—काराय। यत्। चतुर्गृहीतमिति चतुः—गृहीतम्। जुहोति। छन्दांसि। एव। तत्। प्रीणाति। तानि। अस्य। प्रीतानि। देवेभ्यः। हव्यम्। वहन्ति। यम्। कामयेत (१)। पापीयान्। स्यात्। इति। एकैकमित्येकम्—एकम्। तस्य। जुहुयात्।

आहुतीभिरित्याहुति-भिः। एव। एनम्। अपेति। गृह्णाति। पापीयान्। भवति। यम्। कामयेत। वसीयान्। स्यात्। इति। सर्वाणि। तस्य। अनुद्रुत्येत्यनु-द्रुत्य। जुहुयात्। आहुत्येत्या-हुत्या। एव। एनम्। अभीति। क्रमयति। वसीयान्। भवति। अथो इति। यज्ञस्य। एव। एषा। अभिक्रान्तिरित्यभि-क्रान्तिः। एति। वै। एषः। यज्ञमुखादिति यज्ञ-मुखात्। ऋद्ध्याः। यः। अग्नेः। देवतायाः। एति। अष्टौ। एतानि। सावित्राणि। भवन्ति। अष्टाक्षरेत्यष्टा-अक्षरा। गायत्री। गायत्रः (२)। अग्निः। तेन। एव। यज्ञमुखादिति यज्ञ-मुखात्। ऋद्ध्याः। अग्नेः। देवतायै। न। एति। अष्टौ। सावित्राणि। भवन्ति। आहुतिरित्या-हुतिः। नवमी। त्रिवृतमिति त्रि-वृतम्। एव। यज्ञमुख इति यज्ञ-मुखे। वीति। यातयति। यदि। कामयेत। छन्दांसि। यज्ञयशसेनेति यज्ञ-यशसेन। अर्पयेयम्। इति। ऋचम्। अन्तमाम्। कुर्यात्। छन्दांसि। एव। यज्ञयशसेनेति यज्ञ-यशसेन। अर्पयति। यदि। कामयेत। यजमानम्। यज्ञयशसेनेति यज्ञ-यशसेन। अर्पयेयम्। इति। यजुः।

अन्तमम् । कुर्यात् । यजमानम् । एव । यज्ञयशसेनेति यज्ञ—यशसेन । अर्पयति । ऋचा । स्तोमम् । समिति । अर्धय । इति ( ३ )। आह । समृद्ध्या इति सम्—ऋद्ध्यै । चतुर्भिरिति चतुः—भिः । अभ्रिम् । एति । दत्ते । चत्वारि । छन्दांसि । छन्दोभिरिति छन्दः—भिः । एव । देवस्य । त्वा । सवितुः । प्रसव इति प्र—सवे । इति । आह । प्रसूत्या इति प्र—सूत्यै । अग्निः । देवेभ्यः । निलायत । सः । वेणुम् । प्रेति । अविशत् । सः । एताम् । ऊतिम् । अनु । समिति । अचरत् । यत् । वेणोः । सुषिरम् । सुषिरा । अभ्रिः । भवति । सयोनित्वायेति सयोनि—त्वाय । सः । यत्रयत्रेति यत्र—यत्र । अवसत् । तत् । कृष्णम् । अभवत् । कल्माषी । भवति । रूपसमृद्ध्या इति रूप—समृद्ध्यै । उभयतःक्ष्णूरित्युभयतः—क्ष्णूः । भवति । इतः । च । अमुतः । च । अर्कस्य । अवरुद्ध्या इत्यव—रुद्ध्यै । व्याममात्रीति व्याम—मात्री । भवति । एतावत् । वै । पुरुषे । वीर्यम् । वीर्यसंमितेति वीर्य—संमिता । अपरिमितेत्यपरि—मिता । भवति । अपरिमितस्येत्यपरि—मितस्य । अवरुद्ध्या इत्यव—रुद्ध्यै । यः । वनस्पतीनाम् ।

फलग्रहिरिति फल—ग्रहिः । सः । एषाम् । वीर्या-
वानिति वीर्य—वान् । फलग्रहिरिति फल—ग्रहिः ।
वेणुः । वैणवी । भवति । वीर्यस्य । अवरुद्ध्या इत्य-
व—रुद्ध्यै ( ४ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे पञ्चमाष्टके
प्रथमप्रपाठके प्रथमोऽनुवाकः ॥ १ ॥

---

( अथ पञ्चमाष्टके प्रथमप्रपाठके द्वितीयोऽनुवाकः । )

---

व्यृद्धं वा एतद्यज्ञस्य यदयजुष्केण क्रियत
इमामगृभ्णन्रशनामृतस्येत्यश्वाभिधानीमा दत्ते
यजुष्कृत्यै यज्ञस्य समृद्ध्यै प्रतूर्तं वाजिन्ना
द्रवेत्यश्वमभि दधाति रूपमेवास्यैतन्महिमानं
व्याचष्टे युञ्जाथाꣳ रासभं युवमिति गर्दभमस-
त्येव गर्दभं प्रति ष्ठापयति तस्मादश्वाद्गर्द-
भोऽसत्तरो योगेयोगे तवस्तरमित्याह ( १ )
योगेयोग एवैनं युङ्क्ते वाजेवाजे हवामह इत्या-
हान्नं वै वाजोऽन्नमेवाव रुन्धे सखाय इन्द्रमूतय
इत्याहेन्द्रियमेवाव रुन्धेऽग्निर्देवेभ्यो निलायत
तं प्रजापतिरन्वविन्दत्प्राजापत्योऽश्वोऽश्वेन सं
भरत्यनुवित्त्यै पापवस्यसं वा एतत्क्रियते
यच्छ्रेयसा च पापीयसा च समानं कर्म कुर्वन्ति

पापीयान् ( २ ) ह्यश्वाद्गर्दभोऽश्वं पूर्वं नयन्ति पापवस्यसस्य व्यावृत्त्यै तस्माच्छ्रेयाꣳसं पापीयान्पश्चादन्वेति बहुर्वै भवतो भ्रातृव्यो भवतीव खलु वा एष योऽग्निं चिनुते वज्र्यश्वः प्रतूर्वन्नेह्यवक्रामन्नशस्तीरित्याह वज्रेणैव पाप्मानं भ्रातृव्यमव क्रामति रुद्रस्य गाणपत्यादित्याह रौद्रा वै पशवो रुद्रादेव ( ३ ) पशून्निर्याच्याऽऽत्मने कर्म कुरुते पूष्णा सयुजा सहेत्याह पूषा वा अध्वनाꣳ संनेता समष्ट्यै पुरीषायतनो वा एष यदग्निरङ्गिरसो वा एतमग्रे देवतानाꣳ समभरन्पृथिव्याः सधस्थादग्निं पुरीष्यमङ्गिरस्वदच्छेहीत्याह सायतनमेवैनं देवताभिः सं भरत्यग्निं पुरीष्यमङ्गिरस्वदच्छेम इत्याह येन ( ४ ) संगच्छते वाजमेवास्य वृङ्क्ते प्रजापतये प्रतिप्रोच्याग्निः संभृत्य इत्याहुरियं वै प्रजापतिस्तस्या एतच्छ्रोत्रं यद्वल्मीकोऽग्निं पुरीष्यमङ्गिरस्वद्भरिष्याम इति वल्मीकवपामुप तिष्ठते साक्षादेव प्रजापतये प्रतिप्रोच्याग्निꣳ सं भरत्यग्निं पुरीष्यमङ्गिरस्वद्भराम इत्याह येन संगच्छते वाजमेवास्य वृङ्-

क्तेऽन्वग्निरुषसामग्रंम् ( ५ ) अख्यदित्याहा-
नुख्यात्या आगत्यं वाज्यध्वंन आक्रम्यं वाजि-
न्पृथिवीमित्यांहेच्छत्येवैनं पूर्वया विन्दत्युत्त-
रया द्वाभ्यामा क्रमयति प्रतिष्ठित्या अनुरू-
पाभ्यां तस्मादनुरूपाः पशवः प्र जायन्ते
द्यौस्ते पृष्ठं पृथिवी सधस्थमित्यांहैभ्यो वा
एतं लोकेभ्यः प्रजापतिः समैरयद्रूपमेवास्यैत-
न्महिमानं व्याचंष्टे वज्री वा एष यदश्वो दद्भि-
रन्यतोदभ्यो भूयाँल्लोमभिरुभयादद्भ्यो यं द्वि-
ष्यात्तमधस्पदं ध्यायेद्वज्रेणैवैनं स्तृणुते (६) ॥

( आह पापीयान्रुद्रादेव येनाग्रं वज्री वै सप्तदंश च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां पञ्चमाष्टके
प्रथमप्रपाठके द्वितीयोऽनुवाकः ॥ २ ॥

---

( अथ पञ्चमाष्टके प्रथमप्रपाठके द्वितीयोऽनुवाकः । )

---

व्यृद्धमिति वि—ऋद्धम् । वै । एतत् । यज्ञस्यं ।
यत् । अयजुष्केणेत्ययजुः—केन । क्रियते । इमाम् ।
अगृभ्णन् । रशनाम् । ऋतस्यं । इति । अश्वाभि-
धानीमित्यश्व—अभिधानीम् । एति । दत्ते । यजु-
ष्कृत्या इति यजुः—कृत्यै । यज्ञस्यं । समृद्ध्या
इति सम्—ऋद्ध्यै । प्रतूर्तमिति प्र—तूर्तम् ।

( मृत्खननगमनपूर्वकमश्वेन भूम्याक्रमणम् )

वाजिन्। एति। द्रव। इति। अश्वम्। अभीति। दधाति। रूपम्। एव। अस्य। एतत्। महिमानम्। व्याचष्ट इति वि—आचष्टे। युञ्जाथाम्। रासभम्। युवम्। इति। गर्दभम्। असति। एव। गर्दभम्। प्रतीति। स्थापयति। तस्मात्। अश्वात्। गर्दभः। असत्तर इत्यसत्—तरः। योगेयोग इति योगे—योगे। तवस्तरमिति तवः—तरम्। इति। आह (१)। योगेयोग इति योगे—योगे। एव। एनम्। युङ्क्ते। वाजेवाज इति वाजे—वाजे। हवामहे। इति। आह। अन्नम्। वै। वाजः। अन्नम्। एव। अवेति। रुन्धे। सखायः। इन्द्रम्। ऊतये। इति। आह। इन्द्रियम्। एव। अवेति। रुन्धे। अग्निः। देवेभ्यः। निलायत। तम्। प्रजापतिरिति प्रजा—पतिः। अन्विति। अविन्दत्। प्राजापत्य इति प्राजा—पत्यः। अश्वः। अश्वेन। समिति। भरति। अनुवित्त्या इत्यनु—वित्त्यै। पापवस्यसमिति पाप—वस्यसम्। वै। एतत्। क्रियते। यत्। श्रेयसा। च। पापीयसा। च। समानम्। कर्म। कुर्वन्ति। पापीयान् (२)। हि। अश्वात्। गर्दभः। अश्वम्। पूर्वम्। नयन्ति। पापवस्यसस्येति पाप—वस्य-

सस्यं। व्यावृत्त्या इति वि—आवृत्त्यै। तस्मात्। श्रेयांसम्। पापीयान्। पश्चात्। अन्विति। एति। बहुः। वै। भवतः। भ्रातृव्यः। भवति। इव। खलु। वै। एषः। यः। अग्निम्। चिनुते। वज्री। अश्वः। प्रतूर्वन्निति प्र—तूर्वन्। एति। इहि। अवक्रामन्नित्यव—क्रामन्। अशस्तीः। इति। आह। वज्रेण। एव। पाप्मानम्। भ्रातृव्यम्। अवेति। क्रामति। रुद्रस्य। गाणपत्यादिति गाण—पत्यात्। इति। आह। रौद्राः। वै। पशवः। रुद्रात्। एव (३)। पशून्। निर्याच्येति निः—याच्य। आत्मने। कर्म। कुरुते। पूष्णा। सयुजेति स—युजा। सह। इति। आह। पूषा। वै। अध्वनाम्। संनेतेति सं—नेता। समष्ट्या इति सम्—अष्ट्यै। पुरीषायतन इति पुरीष—आयतनः। वै। एषः। यत्। अग्निः। अङ्गिरसः। वै। एतम्। अग्रे। देवतानाम्। समिति। अभरन्। पृथिव्याः। सधस्थादिति सध—स्थात्। अग्निम्। पुरीष्यम्। अङ्गिरस्वत्। अच्छ। इहि। इति। आह। सायतनमिति स—आयतनम्। एव। एनम्। देवताभिः। समिति। भराति। अग्निम्। पुरीष्यम्। अङ्गिरस्वत्।

अच्छं । इमः । इतिं । आह । येनं (४) । संगच्छंत इतिं सं—गच्छंते । वाजंम् । एव । अस्य । वृङ्क्ते । प्रजापंतय इतिं प्रजा—पतये । प्रतिप्रोच्येतिं प्रति—प्रोच्यं । अग्निः । संभृत्य इतिं सं—भृत्यं: । इतिं । आहुः । इयम् । वै । प्रजापंतिरितिं प्रजा—पतिः । तस्यांः । एतत् । श्रोत्रंम् । यत् । वल्मीकः । अग्निम् । पुरीष्यंम् । अङ्गिरस्वत् । भरिष्यामः । इतिं । वल्मीकवपामितिं वल्मीक—वपाम् । उपेतिं । तिष्ठते । साक्षादितिं स—अक्षात् । एव । प्रजापंतय इतिं प्रजा—पतये । प्रतिप्रोच्येतिं प्रति—प्रोच्यं । अग्निम् । सम् इतिं । भरति । अग्निम् । पुरीष्यंम् । अङ्गिरस्वत् । भरामः । इतिं । आह । येनं । संगच्छंत इतिं सं—गच्छंते । वाजंम् । एव । अस्य । वृङ्क्ते । अन्विति । अग्निः । उषसांम् । अग्रंम् (५) । अख्यत् । इतिं । आह । अनुंख्यात्या इत्यनु—ख्यात्यै । आगत्येत्यां—गत्यं । वाजी । अध्वंनः । आक्रम्येत्यां—क्रम्यं । वाजिन् । पृथिवीम् । इतिं । आह । इच्छतिं । एव । एनम् । पूर्वंया । विन्दतिं । उत्तंरयेत्युत्—तरया । द्वाभ्यांम् । एतिं । क्रमयति । प्रतिंष्ठित्या इति

प्रति॑—स्थि॒त्यै॒ । अनु॑रूपाभ्या॒मित्यनु॑—रू॒पा॒भ्या॒म् । तस्मा॑त् । अनु॑रूपा॒ इत्यनु॑—रू॒पाः॒ । प॒शव॑ः । प्रेति॑ । जा॒य॒न्ते॒ । द्यौः । ते॒ । पृ॒ष्ठम् । पृ॒थि॒वी । स॒धस्थ॒मिति॑ स॒ध—स्थ॒म् । इति॑ । आ॒ह॒ । ए॒भ्यः । वै । ए॒तम् । लो॒केभ्य॑ः । प्र॒जाप॑ति॒रिति॑ प्र॒जा—प॒तिः॒ । समिति॑ । ऐ॒र॒य॒त् । रू॒पम् । ए॒व । अ॒स्य॒ । ए॒तत् । म॒हि॒मान॑म् । व्याच॑ष्ट॒ इति॑ वि—आच॑ष्टे । व॒ज्री । वै । ए॒षः । यत् । अश्व॑ः । द॒द्भिरिति॑ दत्—भिः । अ॒न्यतो॑दभ्य॒ इत्य॒न्यतो॑ दत्—भ्यः । भूया॑न् । लोम॑भि॒रिति॒ लोम॑—भिः॒ । उ॒भ॒याद॑भ्य॒ इत्यु॒भ॒याद॑त्—भ्यः॒ । यम् । द्वि॒ष्यात् । तम् । अ॒ध॒स्प॒दमित्य॑धः—प॒दम् । ध्या॒ये॒त् । वज्रे॑ण । ए॒व । ए॒न॒म् । स्तृ॒णु॒ते॒ ॥ ६ ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे पञ्चमाष्टके प्रथमप्रपाठके द्वितीयोऽनुवाकः ॥ २ ॥

---

( अथ पञ्चमाष्टके प्रथमप्रपाठके तृतीयोऽनुवाकः । )

---

उत्क्रा॒मोद॑क्रमी॒दि॒ति॒ द्वाभ्या॒मुत्क्र॑मयति॒ प्रति॑ष्ठित्या॒ अनु॑रूपाभ्या॒ं तस्मा॒दनु॑रूपाः प॒शव॑ः प्र जा॑यन्ते॒ऽप उप॑ सृजति॒ यत्र॒ वा आप॑ उप॒गच्छ॑न्ति॒ तदोष॑धय॒ः प्रति॑ तिष्ठ॒न्त्योष॑धीः प्रति॒तिष्ठ॑न्तीः प॒शवो॒ऽनु॒ प्रति॑ तिष्ठन्ति प॒शून्य॒ज्ञो

यज्ञं यजमानो यजमानं प्रजास्तस्मादप उपं सृजति प्रतिष्ठित्यै यदध्वर्युरनग्नावाहुतिं जुहुयादन्धोऽध्वर्युः (१) स्याद्रक्षाꣳसि यज्ञꣳ हन्युर्हिरण्यमुपास्य जुहोत्यग्निवत्येव जुहोति नान्धोऽध्वर्युर्भवति न यज्ञꣳ रक्षाꣳसि घ्नन्ति जिघर्म्यग्निं मनसा घृतेनेत्याह मनसा हि पुरुषो यज्ञमभिगच्छति प्रतिक्ष्यन्तं भुवनानि विश्वेत्याह सर्वꣳ ह्येष प्रत्यङ्क्षेति पृथुं तिरश्चा वयसा बृहन्तमित्याहाल्पो ह्येष जातो महान् ( २ ) भवति व्यचिष्ठमन्नꣳ रभसं विदानमित्याहान्नमेवास्मै स्वदयति सर्वमस्मै स्वदते य एवं वेदाऽऽ त्वा जिघर्मि वचसा घृतेनेत्याह तस्माद्यत्पुरुषो मनसाऽभिगच्छति तद्वाचा वदत्यरक्षसेत्याह रक्षसामपहत्यै मर्यश्रीः स्पृहयद्वर्णो अग्निरित्याहापचितिमेवास्मिन्दधात्यपचितिमान्भवति य एवम् ( ३ ) वेद मनसा त्वै तामाप्तुमर्हति यामध्वर्युरनग्नावाहुतिं जुहोति मनस्वतीभ्यां जुहोत्याहुत्योराप्त्यै द्वाभ्यां प्रतिष्ठित्यै यज्ञमुखेयज्ञमुखे वै क्रियमाणे यज्ञꣳ रक्षाꣳसि जिघाꣳसन्त्येतर्हि खलु वा एतद्यज्ञमुखं यर्ह्येनदाहुति-

रश्नुते परि लिखति रक्षसामपहत्यै तिसृभिः परि लिखति त्रिवृद्वा अग्निर्यावानेवाग्निस्तस्माद्रक्षाꣳस्यप हन्ति ( ४ ) गायत्रिया परि लिखति तेजो वै गायत्री तेजसैवैनं परि गृह्णाति त्रिष्टुभा परि लिखतीन्द्रियं वै त्रिष्टुगिन्द्रियेणैवैनं परि गृह्णात्यनुष्टुभा परि लिखत्यनुष्टुप्सर्वाणि छन्दाꣳसि परिभूः पर्याप्त्यै मध्यतोऽनुष्टुभा वाग्वा अनुष्टुप्तस्मान्मध्यतो वाचा वदामो गायत्रिया प्रथमया परि लिखत्यथानुष्टुभाऽथ त्रिष्टुभा तेजो वै गायत्री यज्ञोऽनुष्टुगिन्द्रियं त्रिष्टुप्तेजसा चैवेन्द्रियेण चोभयतो यज्ञं परि गृह्णाति ( ५ )॥

( अन्धोऽध्वर्युर्महान्भवति य एवꣳ हन्ति त्रिष्टुभा तेजो वै गायत्री त्रयोदश च।)

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां पञ्चमाष्टके प्रथमप्रपाठके तृतीयोऽनुवाकः ॥ ३ ॥

---

( अथ पञ्चमाष्टके प्रथमप्रपाठके तृतीयोऽनुवाकः ।)

---

उदिति । क्राम । उदिति । अक्रमीत् । इति । द्वाभ्याम् । उदिति । क्रमयति । प्रतिष्ठित्या इति—प्रति—स्थित्यै । अनुरूपाभ्यामित्यनु—रूपाभ्याम् । तस्मात् । अनुरूपा इत्यनु—रूपाः । पशवः । प्रेति ।

जायन्ते । अपः । उपेति । सृजति । यत्र । वै । आपः । उपगच्छन्तीत्युप--गच्छन्ति । तत् । ओषधयः । प्रतीति । तिष्ठन्ति । ओषधीः । प्रतितिष्ठन्तीरिति प्रति--तिष्ठन्तीः । पशवः । अनु । प्रतीति । तिष्ठन्ति । पशून् । यज्ञः । यज्ञम् । यजमानः । यजमानम् । प्रजा इति प्र—जाः । तस्मात् । अपः । उपेति । सृजति । प्रतिष्ठित्या इति प्रति—स्थित्यै । यत् । अध्वर्युः । अनग्नौ । आहुतिमित्या—हुतिम् । जुहुयात् । अन्धः । अध्वर्युः (१) । स्यात् । रक्षांसि । यज्ञम् । हन्युः । हिरण्यम् । उपास्येत्युप—अस्य । जुहोति । अग्निवतीत्यग्नि—वति । एव । जुहोति । न । अन्धः । अध्वर्युः । भवति । न । यज्ञम् । रक्षांसि । घ्नन्ति । जिघर्मि । अग्निम् । मनसा । घृतेन । इति । आह । मनसा । हि । पुरुषः । यज्ञम् । अभिगच्छतीत्यभि—गच्छति । प्रतिक्ष्यन्तमिति प्रति-क्ष्यन्तम् । भुवनानि । विश्वा । इति । आह । सर्वम् । हि । एषः । प्रत्यङ् । क्षेति । पृथुम् । तिरश्चा । वयसा । बृहन्तम् । इति । आह । अल्पः । हि । एषः । जातः । महान् (२) । भवति । व्यचिष्ठम् । अन्नम् । रभसम् । विदानम् ।

इति । आह । अन्नम् । एव । अस्मै । स्वदयति । सर्वम् । अस्मै । स्वदते । यः । एवम् । वेद । एति । त्वा । जिघर्मि । वचसा । घृतेन । इति । आह । तस्मात् । यत् । पुरुषः । मनसा । अभिगच्छतीत्यभि—गच्छति । तत् । वाचा । वदति । अरक्षसा । इति । आह । रक्षसाम् । अपहत्या इत्यप—हत्यै । मर्यश्रीरिति मर्य—श्रीः । स्पृहयद्वर्ण इति स्पृहयत्—वर्णः । अग्निः । इति । आह । अपचितिमित्यप—चितिम् । एव । अस्मिन् । दधाति । अपचितिमानित्यपचिति—मान् । भवति । यः । एवम् ( ३ ) । वेद । मनसा । तु । वै । ताम् । आप्तुम् । अर्हति । याम् । अध्वर्युः । अनग्नौ । आहुतिमित्या—हुतिम् । जुहोति । मनस्वतीभ्याम् । जुहोति । आहुत्योरित्या—हुत्योः । आप्त्यै । द्वाभ्याम् । प्रतिष्ठित्या इति प्रति—स्थित्यै । यज्ञमुखेयज्ञमुख इति यज्ञमुखे—यज्ञमुखे । वै । क्रियमाणे । यज्ञम् । रक्षाꣳसि । जिघाꣳसन्ति । एतर्हि । खलु । वै । एतत् । यज्ञमुखमिति यज्ञ—मुखम् । यर्हि । एनत् । आहुतिरित्या—हुतिः । अश्नुते । परीति । लिखति । रक्षसाम् । अपहत्या इत्यप—हत्यै । तिसृभिरिति

तिसृ—भिः। परीति। लिखति। त्रिवृदिति त्रि—वृत्। वै। अग्निः। यावान्। एव। अग्निः। तस्मात्। रक्षांसि। अपेति। हन्ति (४)। गायत्रिया। परीति। लिखति। तेजः। वै। गायत्री। तेजसा। एव। एनम्। परीति। गृह्णाति। त्रिष्टुभा। परीति। लिखति। इन्द्रियम्। वै। त्रिष्टुक्। इन्द्रियेण। एव। एनम्। परीति। गृह्णाति। अनुष्टुभेत्यनु—स्तुभा। परीति। लिखति। अनुष्टुबित्यनु—स्तुप्। सर्वाणि। छन्दांसि। परिभूरिति परि—भूः। पर्याप्त्या इति परि—आप्त्यै। मध्यतः। अनुष्टुभेत्यनु—स्तुभा। वाक्। वै। अनुष्टुबित्यनु—स्तुप्। तस्मात्। मध्यतः। वाचा। वदामः। गायत्रिया। प्रथमया। परीति। लिखति। अथ। अनुष्टुभेत्यनु—स्तुभा। अथ। त्रिष्टुभा। तेजः। वै। गायत्री। यज्ञः। अनुष्टुगित्यनु—स्तुक्। इन्द्रियम्। त्रिष्टुप्। तेजसा। च। एव। इन्द्रियेण। च। उभयतः। यज्ञम्। परीति। गृह्णाति (५)॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे पञ्चमाष्टके प्रथमप्रपाठके तृतीयोऽनुवाकः॥ ३॥

---

( अथ पञ्चमाष्टके प्रथमप्रपाठके चतुर्थोऽनुवाकः । )

देवस्य त्वा सवितुः प्रसव इति खनति प्रसूत्या अथो धूममेवैतेन जनयति ज्योतिष्मन्तं त्वाऽग्ने सुप्रतीकमित्याह ज्योतिरेवैतेन जनयति सोऽग्निर्जातः प्रजाः शुचाऽर्पयत्तं देवा अर्धर्चेनाशमयञ्छिवं प्रजाभ्योऽहिंसन्तमित्याह प्रजाभ्य एवैनं शमयति द्वाभ्यां खनति प्रतिष्ठित्या अपां पृष्ठमसीति पुष्करपर्णमा (१) हरत्यपां वा एतत्पृष्ठं यत्पुष्करपर्णं रूपेणैवैनदा हरति पुष्करपर्णेन सं भरति योनिर्वा अग्नेः पुष्करपर्णं सयोनिमेवाग्निं सं भरति कृष्णाजिनेन सं भरति यज्ञो वै कृष्णाजिनं यज्ञेनैव यज्ञं सं भरति यद्ग्राम्याणां पशूनां चर्मणा संभरेद्ग्राम्यान्पशूञ्छुचाऽर्पयेत्कृष्णाजिनेन सं भरत्यारण्यानेव पशून् (२) शुचाऽर्पयति तस्मात्समावत्पशूनां प्रजायमानानामारण्याः पशवः कनीयांसः शुचा ह्यृता लोमतः सं भरत्यतो ह्यस्य मेध्यं कृष्णाजिनं च पुष्करपर्णं च सं स्तृणातीयं वै कृष्णाजिनमसौ पुष्करपर्णमाभ्यामेवैनमुभयतः परि गृह्णात्यग्नि-

( मृदः खननपूर्वकं घर्मपत्रयोः संभरणम् )

देवेभ्यो निलायत तमथर्वाऽन्वपश्यदथर्वा त्वा प्रथमो निरमन्थदग्न इति ( ३ ) आह य एवैनमन्वपश्यत्तेनैवैनꣳ सं भरति त्वामग्ने पुष्करादधीत्याह पुष्करपर्णे ह्येनमुपश्रितमविन्दत्तमु त्वा दध्यङ्ङृषिरित्याह दध्यङ्वा आथर्वणस्तेजस्व्यासीत्तेज एवास्मिन्दधाति तमु त्वा पाथ्यो वृषेत्याह पूर्वमेवोदितमुत्तरेणाभि गृणाति (४) चतसृभिः सं भरति चत्वारि छन्दाꣳसि छन्दोभिरेव गायत्रीभिर्ब्राह्मणस्य गायत्रो हि ब्राह्मणस्त्रिष्टुग्भी राजन्यस्य त्रैष्टुभो हि राजन्यो यं कामयेत वसीयान्स्यादित्युभयीभिस्तस्य सं भरेत्तेजश्चैवास्मा इन्द्रियं च समीची दधात्यष्टाभिः सं भरत्यष्टाक्षरा गायत्री गायत्रोऽग्निर्यावानेवाग्निस्तꣳ सं भरति सीद होतरित्याह देवता एवास्मै सꣳ सादयति नि होतेति मनुष्यान्त्सꣳ सीदस्वेति वयाꣳसि जनिष्वा हि जेन्यो अग्रे अह्नामित्याह देवमनुष्यानेवास्मै सꣳसन्नान्प्र जनयति ( ५ ) ॥

( ऐव पशूनिति गृणाति होतरिति सप्तविꣳशतिश्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां पञ्चमाष्टके प्रथमप्रपाठके चतुर्थोऽनुवाकः ॥ ४ ॥

( मृदः खननपूर्वकं चर्मपत्रयोः संभरणम् )

( अथ पञ्चमाष्टके प्रथमप्रपाठके चतुर्थोऽनुवाकः । )

---

देवस्यं । त्वा । सवितुः । प्रसव इतिं प्र—सवे । इतिं । खनति । प्रसूंत्या इति प्र—सूत्यै । अथो इतिं । धूमम् । एव । एतेनं । जनयति । ज्योतिंष्मन्तम् । त्वा । अग्ने । सुप्रतीकमितिं सु—प्रतींकम् । इतिं । आह । ज्योतिंः । एव । एतेनं । जनयति । सः । अग्निः । जातः । प्रजा इतिं प्र—जाः । शुचा । आर्पयत् । तम् । देवाः । अर्धर्चेनेत्यंर्ध—ऋचेनं । अशमयन् । शिवम् । प्रजाभ्य इतिं प्र—जाभ्यंः । अहिंꣳसन्तम् । इतिं । आह । प्रजाभ्य इतिं प्र—जाभ्यंः । एव । एनम् । शमयति । द्वाभ्यांम् । खनति । प्रतिंष्ठित्या इति प्रतिं—स्थित्यै । अपाम् । पृष्ठम् । असि । इतिं । पुष्करपर्णमितिं पुष्कर—पर्णम् । एतिं ( १) । हरति । अपाम् । वै । एतत् । पृष्ठम् । यत् । पुष्करपर्णमितिं पुष्कर—पर्णम् । रूपेणं । एव । एनत् । एतिं । हरति । पुष्करपर्णेनेतिं पुष्कर—पर्णेनं । सम् । इतिं । भरति । योनिंः । वै । अग्नेः । पुष्करपर्णमितिं पुष्कर—पर्णम् । सयोंनिमिति स—योंनिम् । एव । अग्निम् । समितिं । भरति । कृष्णाजिनेनेतिं कृष्ण—अजिनेनं । समितिं । भरति । यज्ञः । वै । कृष्णाजिन-

( मृदः खननपूर्वकं चर्मपत्रयोः संभरणम् )

मिति कृष्ण—अजिनम् । यज्ञेन । एव । यज्ञम् । समिति । भरति । यत् । ग्राम्याणाम् । पशूनाम् । चर्मणा । संभरेदिति सं—भरेत् । ग्राम्यान् । पशून् । शुचा । अर्पयेत् । कृष्णाजिनेनेति कृष्ण—अजिनेन । समिति । भरति । आरण्यान् । एव । पशून् ( २ )। शुचा । अर्पयति । तस्मात् । समावत् । पशूनाम् । प्रजायमानानामिति प्र-जायमानानाम् । आरण्याः । पशवः । कनीयांसः । शुचा । हि । ऋताः । लोमतः । समिति । भरति । अतः । हि । अस्य । मेध्यम् । कृष्णाजिनमिति कृष्ण—अजिनम् । च । पुष्करपर्णमिति पुष्कर—पर्णम् । च । समिति । स्तृणाति । इयम् । वै । कृष्णाजिनमिति कृष्ण—अजिनम् । असौ । पुष्करपर्णमिति पुष्कर—पर्णम् । आभ्याम् । एव । एनम् । उभयतः । परीति । गृह्णाति । अग्निः । देवेभ्यः । निलायत । तम् । अथर्वा । अन्विति । अपश्यत् । अथर्वा । त्वा । प्रथमः । निरिति । अमन्थत् । अग्ने । इति ( ३ )। आह । यः । एव । एनम् । अन्वपश्यदित्यनु—अपश्यत् । तेन । एव । एनम् । समिति । भरति । त्वाम् । अग्ने । पुष्करात् । अधीति ।

इति । आह । पुष्करपर्ण इति पुष्कर—पर्णे । हि । एनम् । उपश्रितमित्युप—श्रितम् । अविन्दत् । तम् । उ । त्वा । दध्यङ् । ऋषिः । इति । आह । दध्यङ् । वै । आथर्वणः । तेजस्वी । आसीत् । तेजः । एव । अस्मिन् । दधाति । तम् । उ । त्वा । पाथ्यः । वृषा । इति । आह । पूर्वम् । एव । उदितम् । उत्तरेणेत्युत्—तरेण । अभीति । गृणाति (४) । चतसृभिरिति चतसृ—भिः । समिति । भरति । चत्वारि । छन्दांसि । छन्दोभिरिति छन्दः—भिः । एव । गायत्रीभिः । ब्राह्मणस्य । गायत्रः । हि । ब्राह्मणः । त्रिष्टुग्भिरिति त्रिष्टुक्—भिः । राजन्यस्य । त्रैष्टुभः । हि । राजन्यः । यम् । कामयेत । वसीयान् । स्यात् । इति । उभयीभिः । तस्य । समिति । भरेत् । तेजः । च । एव । अस्मै । इन्द्रियम् । च । समीची इति । दधाति । अष्टाभिः । समिति । भरति । अष्टाक्षरेत्यष्टा—अक्षरा । गायत्री । गायत्रः । अग्निः । यावान् । एव । अग्निः । तम् । समिति । भरति । सीद । होतः । इति । आह । देवताः । एव । अस्मै । समिति । सादयति । नीति । होता । इति । मनुष्यान् । समिति । सीदस्व । इति ।

(संभृतमृदो यज्ञभूमौ समाहरणम्)

वयांसि । जनिष्व । हि । जेन्यः । अग्रे । अह्नाम् । इति । आह । देवमनुष्यानिति देव—मनुष्यान् । एव । अस्मै । सꣳसन्नानिति सं—सन्नान् । प्रेति । जनयति ॥ ५ ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे पञ्चमाष्टके प्रथमप्रपाठके चतुर्थोऽनुवाकः ॥ ४ ॥

---

(अथ पञ्चमाष्टके प्रथमप्रपाठके पञ्चमोऽनुवाकः ।)

---

क्रूरमिव वा अस्या एतत्करोति यत्खनत्यप उप सृजत्यापो वै शान्ताः शान्ताभिरेवास्यै शुचꣳ शमयति सं ते वायुर्मातरिश्वा दधात्वित्याह प्राणो वै वायुः प्राणेनैवास्यै प्राणꣳ सं दधाति सं ते वायुरित्याह तस्माद्वायुप्रच्युता दिवो वृष्टिरीर्त्ते तस्मै च देवि वषडस्तु ( १ ) तुभ्यमित्याह षड्वा ऋतव ऋतुष्वेव वृष्टिं दधाति तस्मात्सर्वानृतून्वर्षति यद्वषट्कुर्याद्यातयामाऽस्य वषट्कारः स्याद्यन्न वषट्कुर्याद्रक्षाꣳसि यज्ञꣳ हन्युर्वडित्याह परोक्षमेव वषट्करोति नास्य यातयामा वषट्कारो भवति न यज्ञꣳ रक्षाꣳसि घ्नन्ति सुजातो ज्योतिषा सहेत्यनुष्टुभोप नह्यत्यनुष्टुप् ( २ ) सर्वाणि छन्दाꣳसि

छन्दा॑ꣳसि खलु॒ वा अ॒ग्नेः प्रि॒या त॒नूः प्रि॒यये॒वैनं॑ त॒नुवा॒ परि॑ दधाति वे॒दुको॒ वासो॑ भवति॒ य ए॒वं वेद॒ वारु॒णो वा अ॒ग्निरुप॑नद्ध॒ उदु॑ तिष्ठ स्वध्वरो॒र्ध्व ऊ॒ षु णं ऊ॒तय॒ इति॑ सावि॒त्रीभ्या॒मुत्ति॑ष्ठति सवि॒तृप्र॑सूत ए॒वास्यो॒र्ध्वां व॑रुणमे॒निमु॒त्सृ॑जति॒ द्वाभ्यां॒ प्रति॑ष्ठित्यै॒ स जा॒तो गर्भो॑ असि (३) रोद॑स्यो॒रित्या॑हे॒मे वै रोद॑सी॒ तयो॑रे॒ष गर्भो॒ यद॒ग्निस्तस्मा॑दे॒वमा॑हा॒ग्ने॒ चारु॒र्विभृ॑त॒ ओष॑धी॒ष्वित्या॑ह य॒दा ह्ये॑तं वि॒भर॒न्त्यथ॒ चारु॑तरो॒ भव॑ति॒ प्र मा॒तृभ्यो॒ अधि॒ कनि॑क्रदद्गा॒ इत्या॒हौष॑धयो॒ वा अ॑स्य मा॒तर॒स्ताभ्य॑ ए॒वैनं॒ प्र च्या॑वयति स्थि॒रो भ॑व वी॒ड्वङ्ग॒ इति॑ गर्द॒भ आ सा॑दयति (४) सं न॑ह्यत्ये॒वैनं॑मे॒तया॑ स्थे॒म्ने गर्द॒भेन॒ सं भ॑रति॒ तस्मा॑द्॒गर्द॒भः प॑शू॒नां भा॑रभा॒रित॑मो गर्द॒भेन॒ सं भ॑रति॒ तस्मा॑द्गर्द॒भोऽप्यं॑नाले॒शेऽत्य॒न्यान्प॒शून्मे॑द्यत्य॒न्नꣳ ह्ये॑नेना॒र्कꣳ सं॒भर॑न्ति गर्द॒भेन॒ सं भर॑ति॒ तस्मा॑द्गर्द॒भो द्वि॒रेता॒ः सन्कनि॑ष्ठं पशू॒नां प्र जा॑यते॒ऽग्निर्ह्य॑स्य॒ योनि॑ं नि॒र्दह॑ति प्र॒जासु॒ वा ए॒ष ए॒तर्ह्या॑रूढः (५) स ई॑श्व॒रः प्र॒जाः शु॒चा प्र॒दह॒ः शि॒वो

भ्य॑ प्र॒जाभ्य॒ इत्या॑ह प्र॒जाभ्य॑ ए॒वैनꣳ॑ शमयति॒ मानु॑षीभ्य॒स्त्वम॑ङ्गिर॒ इत्या॑ह मान॒व्यो॑ हि प्र॒जा मा द्यावा॑पृथि॒वी अ॒भि शू॑शुचो॒ माऽन्त॑रि॑क्ष॒ं मा वन॒स्पती॒नित्या॑है॒भ्य ए॒वैनं॑ लो॒केभ्यः॑ शमयति॒ प्रैतु॑ वा॒जी कनि॑क्रद॒दित्या॑ह वा॒जी ह्ये॑ष नान॑द॒द्रास॑भ॒ः पत्वेति॑ ( ६ ) आ॒ह॒ रास॑भ॒ इति॒ ह्येतमृष॒योऽव॑द॒न्भर॑न्न॒ग्निं पुरी॒ष्य॑मित्या॑हा॒ग्निꣳ॒ ह्ये॑ष भर॑ति॒ मा पा॒द्यायु॑षः पु॒रेत्या॒हाऽऽयु॑रे॒वास्मि॒न्दधाति॒ तस्मा॑द्गर्द॒भः सर्व॒मायु॑रेति॒ तस्मा॑द्गर्द॒भे पु॒राऽऽयु॑ष॒ः प्रमी॑ते बिभ्यति॒ वृषा॒ऽग्निं वृष॑ण॒ं भर॒न्नित्या॑ह॒ वृषा॒ ह्ये॑ष वृषा॒ऽग्निर॒पां गर्भ॑म् ( ७ ) स॒मु॒द्रिय॒मित्या॑हा॒पाꣳ॒ ह्ये॑ष गर्भो॒ यद॒ग्निर॒ग्न आ या॑हि वी॒तय॒ इति॒ वा इ॒मौ लो॒कौ व्यै॒ता॒मग्न आ या॑हि वी॒तय॒ इति॒ यदा॒हान॒यो॑र्लो॒कयो॒र्वीत्यै॒ प्रच्यु॑तो॒ वा ए॒ष आ॒यत॑नाद॒ग॑तः प्रति॒ष्ठाꣳ स ए॒तर्ह्य॑ध्व॒र्युं च॒ यज॑मानं च ध्याय॒त्यृत॒ꣳ स॒त्यमित्या॑हे॒यं वा ऋ॒तम॒सौ (८) स॒त्यम॒न॒यो॒रे॒वैनं॒ प्रति॑ ष्ठापयति॒ नाऽऽर्ति॒मार्च्छ॑त्य॒ध्व॒र्युर्न यज॑मानो॒ वरु॑णो॒ वा ए॒ष यज॑मानम॒भ्यैति॒ यद॒ग्निरु॒प॑नद्ध॒ ओष॑धय॒ः प्रति॑ गृह्णीता॒-

ग्निमेतमित्याह शान्त्यै व्यस्यन्विश्वा अमतीरराँतीरित्याह रक्षसामपहत्यै निषीदन्नो अप दुर्मतिꣳ हनदित्याह प्रतिष्ठित्या ओषधयः प्रति मोदध्वम् ( ९ ) एनमित्याहौषधयो वा अग्नेर्भागधेयं ताभिरेवैनꣳ समर्धयति पुष्पावतीः सुपिप्पला इत्याह तस्मादोषधयः फलं गृह्णन्त्ययं वो गर्भ ऋत्वियः प्रत्नꣳ सधस्थमाऽसंददित्याह याभ्य एवैनं प्रच्यावयति तास्वेवैनं प्रति ष्ठापयति द्वाभ्यामुपावहरति प्रतिष्ठित्यै ( १० ) ॥

( अस्त्वनुष्टुबसि सादयत्यारूढः पत्वेति गर्भमसौ मोदध्वं द्विचत्वारिꣳशच्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां पञ्चमाष्टके प्रथमप्रपाठके पञ्चमोऽनुवाकः ॥ ५ ॥

---

( अथ पञ्चमाष्टके प्रथमप्रपाठके पञ्चमोऽनुवाकः । )

---

क्रूरम् । इव । वै । अस्याः । एतत् । करोति । यत् । खनति । अपः । उपेति । सृजति । आपः । वै । शान्ताः । शान्ताभिः । एव । अस्यै । शुचम् । शमयति । समिति । ते । वायुः । मातरिश्वा । दधातु । इति । आह । प्राण इति प्र—

( संभृतमृदो यज्ञभूमौ समाहरणम् )

अनः। वै। वायुः। प्राणेनेति प्र—अनेन। एव। अस्यै। प्राणमिति प्र—अनम्। समिति। दधाति। समिति। ते। वायुः। इति। आह। तस्मात्। वायुप्रच्युतेति वायु—प्रच्युता। दिवः। वृष्टिः। ईत। तस्मै। च। देवि। वषट्। अस्तु (१)। तुभ्यम्। इति। आह। षट्। वै। ऋतवः। ऋतुषु। एव। वृष्टिम्। दधाति। तस्मात्। सर्वान्। ऋतून्। वर्षति। यत्। वषट्कुर्यादिति वषट्—कुर्यात्। यातयामेति यात—यामा। अस्य। वषट्कार इति वषट्—कारः। स्यात्। यत्। न। वषट्कुर्यादिति वषट्—कुर्यात्। रक्षांसि। यज्ञम्। हन्युः। वट्। इति। आह। परोक्षमिति परः—अक्षम्। एव। वषट्। करोति। न। अस्य। यातयामेति यात—यामा। वषट्कार इति वषट्—कारः। भवति। न। यज्ञम्। रक्षांसि। घ्नन्ति। सुजात इति सु—जातः। ज्योतिषा। सह। इति। अनुष्टुभेत्यनु—स्तुभा। उपेति। नह्यति। अनुष्टुबित्यनु—स्तुप् (२)। सर्वाणि। छन्दांसि। छन्दांसि। खलु। वै। अग्नेः। प्रिया। तनूः। प्रियया। एव। एनम्।

तनुवां । परीति । दधाति । वेदुकः । वासः । भवति । यः । एवम् । वेद । वारुणः । वै । अग्निः । उपनद्ध इत्युप—नद्धः । उदिति । उ । तिष्ठ । स्वध्वरेति सु—अध्वर । ऊर्ध्वः । उ । स्विति । नः । ऊतये । इति । सावित्रीभ्याम् । उदिति । तिष्ठति । सवितृप्रसूत इति सवितृ—प्रसूतः । एव । अस्य । ऊर्ध्वाम् । वरुणमेनिमिति वरुण—मेनिम् । उदिति । सृजति । द्वाभ्याम् । प्रतिष्ठित्या इति प्रति—स्थित्यै । सः । जातः । गर्भः । असि ( ३ ) । रोदस्योः । इति । आह । इमे इति । वै । रोदसी इति । तयोः । एषः । गर्भः । यत् । अग्निः । तस्मात् । एवम् । आह । अग्ने । चारुः । विभृत इति वि—भृतः । ओषधीषु । इति । आह । यदा । हि । एतम् । विभरन्तीति वि—भरन्ति । अथ । चारुतर इति चारु—तरः । भवति । प्रेति । मातृभ्य इति मातृ—भ्यः । अधीति । कनिक्रदत् । गाः । इति । आह । ओषधयः । वै । अस्य । मातरः । ताभ्यः । एव । एनम् । प्रेति । च्यावयति । स्थिरः । भव । वीड्वङ्ग इति वीडु—अङ्गः । इति । गर्दभे । एति । सादयति ( ४ ) । समिति । नह्यति । एव । एनम् । एतया । स्थेम्ने ।

( संभृतमृदो यज्ञभूमौ समाहरणम् )

गर्दभेन । समिति । भरति । तस्मात् । गर्दभः । पशूनाम् । भारभारितम इति भारभारि-तमः । गर्दभेन । समिति । भरति । तस्मात् । गर्दभः । अपीति । अनालेश इत्यना-लेशे । अतीति । अन्यान् । पशून् । मेद्यति । अन्नम् । हि । एनेन । अर्कम् । संभरन्तीति सं-भरन्ति । गर्दभेन । समिति । भरति । तस्मात् । गर्दभः । द्विरेता इति द्वि-रेताः । सन् । कनिष्ठम् । पशूनाम् । प्रेति । जायते । अग्निः । हि । अस्य । योनिम् । निर्दहतीति निः-दहति । प्रजास्विति प्र-जासु । वै । एषः । एतर्हि । आरूढ इत्या-रूढः ( ५ ) । सः । ईश्वरः । प्रजा इति प्र-जाः । शुचा । प्रदह इति प्र-दहः । शिवः । भव । प्रजाभ्य इति प्र-जाभ्यः । इति । आह । प्रजाभ्य इति प्र-जाभ्यः । एव । एनम् । शमयति । मानुषीभ्यः । त्वम् । अङ्गिरः । इति । आह । मानव्यः । हि । प्रजा इति प्र-जाः । मा । द्यावापृथिवी इति द्यावा-पृथिवी । अभीति । शूशुचः । मा । अन्तरिक्षम् । मा । वनस्पतीन् । इति । आह । एभ्यः । एव । एनम् । लोकेभ्यः । शमयति । प्रेति । एतु । वाजी । कनिक्रदत् । इति ।

आह । वाजी । हि । एषः । नानंदत् । रासंभः ।
पत्वा । इति ( ६ )। आह । रासंभः । इति । हि ।
एतम् । ऋषंयः । अवंदन् । भरंन् । अग्निम् ।
पुरीष्यंम् । इति । आह । अग्निम् । हि । एषः ।
भरंति । मा । पादि । आयुंषः । पुरा । इति ।
आह । आयुंः । एव । अस्मिन् । दधाति । तस्मात् ।
गर्दभः । सर्वम् । आयुंः । एति । तस्मात् । गर्दभे ।
पुरा । आयुंषः । प्रमीत इति प्र—मीते । बिभ्यति ।
वृषा । अग्निम् । वृषंणम् । भरंन् । इति । आह ।
वृषा । हि । एषः । वृषा । अग्निः । अपाम् । गर्भम्
( ७ ) समुद्रियंम् । इति । आह । अपाम् । हि ।
एषः । गर्भः । यत् । अग्निः । अग्ने । एति । याहि ।
वीतये । इति । वै । इमौ । लोकौ । वीति । ऐताम् ।
अग्ने । एति । याहि । वीतये । इति । यत् । आह ।
अनयोः । लोकयोः । वीत्या इति वि—इत्यै । प्रच्युंत
इति प्र—च्युतः । वै । एषः । आयतंनादित्या—
यतंनात् । अगंतः । प्रतिष्ठामिति प्रति—स्थाम् । सः ।
एतर्हि । अध्वर्युम् । च । यजंमानम् । च । ध्यायति ।
ऋतम् । सत्यम् । इति । आह । इयम् । वै । ऋतम् ।
असौ ( ८ )। सत्यम् । अनयोः । एव । एनम् ।

( संभृतमृदो यज्ञभूमौ समाहरणम् )

प्रतीति। स्थापयति। न। आर्तिम्। एति। ऋच्छति। अध्वर्युः। न। यजमानः। वरुणः। वै। एषः। यजमानम्। अभि। एति। एति। यत्। अग्निः। उपनद्ध इत्युप—नद्धः। ओषधयः। प्रतीति। गृह्णीत। अग्निम्। एतम्। इति। आह। शान्त्यै। व्यस्यन्निति वि—अस्यन्। विश्वाः। अमतीः। अरातीः। इति। आह। रक्षसाम्। अपहत्या इत्यप—हत्यै। निषीदन्निति नि—सीदन्। नः। अपेति। दुर्मतिमिति दुः—मतिम्। हनत्। इति। आह। प्रतिष्ठित्या इति प्रति—स्थित्यै। ओषधयः। प्रतीति। मोदध्वम् ( ९ )। एनम्। इति। आह। ओषधयः। वै। अग्नेः। भागधेयमिति भाग—धेयम्। ताभिः। एव। एनम्। समिति। अर्धयति। पुष्पावतीरिति पुष्प—वतीः। सुपिप्पला इति सु—पिप्पलाः। इति। आह। तस्मात्। ओषधयः। फलम्। गृह्णन्ति। अयम्। वः। गर्भः। ऋत्वियः। प्रत्नम्। सधस्थमिति सध—स्थम्। एति। असदत्। इति। आह। याभ्यः। एव। एनम्। प्रच्यावयतीति प्र—च्यावयति। तासु। एव। एनम्। प्रतीति। स्थाप-

यति । द्वाभ्यांम् । उपावंहरतीत्युंप—अवंहरति । प्रतिंष्ठित्या इति प्रतिं—स्थित्यै ( १० ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे पञ्चमाष्टके प्रथमप्रपाठके पञ्चमोऽनुवाकः ॥ ५ ॥

---

( अथ पञ्चमाष्टके प्रथमप्रपाठके षष्ठोऽनुवाकः । )

---

वारुणो वा अग्निरुपंनद्धो वि पाजसेति वि स्रंꣳसयति सवितृप्रंसूत एवास्य विषूंचीं वरुणमेनिं वि मृंजत्यप उपं सृजत्यापो वै शान्ताः शान्ताभिंरेवास्य शुचंꣳ शमयति तिसृभिरुपं सृजति त्रिवृद्वा अग्निर्यावांनेवाग्निस्तस्य शुचंꣳ शमयति मित्रः सꣳसृज्यं पृथिवीमित्यांह मित्रो वै शिवो देवानां तेनैव ( १ ) एनꣳ सꣳ सृंजति शान्त्यै यद्ग्राम्याणां पात्रांणां कपालैंः सꣳसृजेद्ग्राम्याणि पात्रांणि शुचाऽर्पयेदर्मकपालैंः सꣳ सृंजत्येतानि वा अंनुपजीवनीयानि तान्येव शुचाऽर्पयति शर्कराभिः सꣳ सृंजति धृत्या अथों शंत्वायांजलोमैः सꣳ सृंजत्येषा वा अग्नेः प्रिया तनूर्यदजा प्रिययैवैनं तनुवा सꣳ सृंजत्यथो तेजंसा कृष्णाजिनस्य लोमंभिः सम् ( २ ) सृजति यज्ञो वै कृष्णाजिनं यज्ञे-

नैव यज्ञꣳ सꣳ सृजति रुद्राः संभृत्यं पृथिवी-
मित्यांहैता वा एतं देवता अग्रे समंभरन्ता-
भिरेवैनꣳ संभरति मखस्य शिरोऽसीत्यांह
यज्ञो वै मखस्तस्यैतच्छिरो यदुखा तस्मांदेव-
मांह यज्ञस्यं पदे स्थ इत्यांह यज्ञस्य ह्येते(३)
पदे अथो प्रतिष्ठित्यै प्रान्याभिर्यच्छत्यन्वन्यै-
र्मन्त्रयते मिथुनत्वाय त्र्युद्धिं करोति त्रयं इमे
लोका एषां लोकानामाप्त्यै छन्दोभिः करोति
वीर्यं वै छन्दांꣳसि वीर्येणैवैनां करोति यजुषा
बिलं करोति व्यावृत्त्या इयंतीं करोति प्रजापं-
तिना यज्ञमुखेन संमितां द्विस्तनां करोति
द्यावांपृथिव्योर्दोहांय चतुंस्तनां करोति पशूनां
दोहांयाष्टास्तंनां करोति छन्दंसां दोहांय नवां-
श्रिमभिचरंतः कुर्यात्त्रिवृतंमेव वज्रꣳ संभृत्य
भ्रातृंव्याय प्र हंरति स्तृत्यै कृत्वाय सा महीं-
मुखामिति नि दंधाति देवतांस्वेवैनां प्रतिं
ष्ठापयति ( ४ )॥

( तेनैव लोमंभिः समेते अंभिचरंत एकंविꣳशतिश्च )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां पञ्चमाष्टके
प्रथमप्रपाठके षष्ठोऽनुवाकः ॥ ६ ॥

---

( अथ पञ्चमाष्टके प्रथमप्रपाठके षष्ठोऽनुवाकः । )

---

वारुणः । वै । अग्निः । उपंनद्ध इत्युपं—नद्धः । वीतिं । पाजंसा । इतिं । वीतिं । स्रंसय॑ति । सवितृप्रंसूत इतिं सवितृ—प्रसूतः । एव । अस्य । विषूंचीम् । वरुणमेनिमितिं वरुण—मेनिम् । वीतिं । सृजति । अपः । उपेतिं । सृजति । आपंः । वै । शान्ताः । शान्ताभिंः । एव । अस्य । शुचंम् । शमयति । तिसृभिरितिं तिसृ—भिः । उपेतिं । सृजति । त्रिवृदितिं त्रि—वृत् । वै । अग्निः । यावांन् । एव । अग्निः । तस्यं । शुचंम् । शमयति । मित्रः । सꣳसृज्येतिं सं—सृज्यं । पृथिवीम् । इतिं । आह । मित्रः । वै । शिवः । देवानांम् । तेनं । एव ( १ ) । एनम् । समितिं । सृजति । शान्त्यै । यत् । ग्राम्याणांम् । पात्रांणाम् । कपालैंः । सꣳसृजेदितिं सं—सृजेत् । ग्राम्याणिं । पात्रांणि । शुचा । अर्पयेत् । अर्मकपालैरित्यर्म—कपालैः । समितिं । सृजति । एतानि । वै । अनुपजीवनीयानीत्यंनुप—जीवनीयानिं । तानिं । एव । शुचा । अर्पयति । शर्कराभिः । समितिं । सृजति । धृत्यै । अथो इतिं । शंत्वायेतिं शं—त्वायं । अजलोमैरित्यंज—लोमैः । समितिं । सृजति ।

एषा। वै। अग्नेः। प्रिया। तनूः। यत्। अजा। प्रियया। एव। एनम्। तनुवा। समिति। सृजति। अथो इति। तेजसा। कृष्णाजिनस्येति कृष्ण—अजिनस्य। लोमभिरिति लोम—भिः। समिति (२)। सृजति। यज्ञः। वै। कृष्णाजिनमिति कृष्ण—अजिनम्। यज्ञेन। एव। यज्ञम्। समिति। सृजति। रुद्राः। संभृत्येति सं—भृत्य। पृथिवीम्। इति। आह। एताः। वै। एतम्। देवताः। अग्रे। समिति। अभरन्। ताभिः। एव। एनम्। समिति। भरति। मखस्य। शिरः। असि। इति। आह। यज्ञः। वै। मखः। तस्य। एतत्। शिरः। यत्। उखा। तस्मात्। एवम्। आह। यज्ञस्य। पदे इति। स्थः। इति। आह। यज्ञस्य। हि। एते इति (३)। पदे इति। अथो इति। प्रतिष्ठित्या इति प्रति—स्थित्यै। प्रेति। अन्याभिः। यच्छति। अन्विति। अन्यैः। मन्त्रयते। मिथुनत्वायेति मिथुन—त्वाय। त्र्युद्धिमिति त्रि—उद्धिम्। करोति। त्रयः। इमे। लोकाः। एषाम्। लोकानाम्। आप्त्यै। छन्दोभिरिति छन्दः—भिः। करोति। वीर्यम्। वै। छन्दांसि। वीर्येण। एव। एनाम्। करोति।

यजुषा । बिलम् । करोति । व्यावृत्त्या इति वि-आवृत्त्यै । इयतीम् । करोति । प्रजापतिनेति प्रजा-पतिना । यज्ञमुखेनेति यज्ञ—मुखेन । संमितामिति सं—मिताम् । द्विस्तनामिति द्वि—स्तनाम् । करोति । द्यावापृथिव्योरिति द्यावा—पृथिव्योः । दोहाय । चतुःस्तनामिति चतुः—स्तनाम् । करोति । पशूनाम् । दोहाय । अष्टास्तनामित्यष्टा—स्तनाम् । करोति । छन्दसाम् । दोहाय । नवाश्रिमिति नव—अश्रिम् । अभिचरत इत्यभि—चरतः । कुर्यात् । त्रिवृतमिति त्रि—वृतम् । एव । वज्रम् । संभृत्येति सं—भृत्य । भ्रातृव्याय । प्रेति । हरति । स्तृत्यै । क्रुरवाय । सा । महीम् । उखाम् । इति । नीति । दधाति । देवतासु । एव । एनाम् । प्रतीति । स्थापयति ( ४ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे पञ्चमाष्टके प्रथमप्रपाठके षष्ठोऽनुवाकः ॥ ६ ॥

---

( अथ पञ्चमाष्टके प्रथमप्रपाठके सप्तमोऽनुवाकः । )

---

सप्तभिर्धूपयति सप्त वै शीर्षण्याः प्राणाः शिर एतद्यज्ञस्य यदुखा शीर्षन्नेव यज्ञस्य प्राणान्दधाति तस्मात्सप्त शीर्षन्प्राणा अश्वशकेन धूपयति प्राजापत्यो वा अश्वः सयोनि-

खायादितिस्त्वेत्याहेयं वा अदितिरदित्यैवादित्यां खनत्यस्या अक्रूरंकाराय न हि स्वः स्वꣳ हिनस्ति देवानां त्वा पत्नीरित्याह देवानाम् (१) वा एतां पत्नयोऽग्रेऽकुर्वन्ताभिरेवैनां दधाति धिषणास्त्वेत्याह विद्या वै धिषणा विद्याभिरेवैनामभीन्धे ग्नास्त्वेत्याह छन्दांꣳसि वै ग्नाश्छन्दोभिरेवैनाꣳ श्रपयति वरूत्रयस्त्वेत्याह होत्रा वै वरूत्रयो होत्राभिरेवैनां पचति जनयस्त्वेत्याह देवानां वै पत्नीः (२) जनयस्ताभिरेवैनां पचति षड्भिः पचति षड्वा ऋतव ऋतुभिरेवैनां पचति द्विः पचन्त्वित्याह तस्माद्द्विः संवत्सरस्य सस्यं पच्यते वारुण्युखाऽभीद्धा मैत्रियोपैति शान्त्यै देवस्त्वा सवितोद्वपत्वित्याह सवितृप्रसूत एवैनां ब्रह्मणा देवताभिरुद्वपत्यपद्यमाना पृथिव्याशा दिश आ पृण (३) इत्याह तस्मादग्निः सर्वा दिशोऽनु वि भात्युत्तिष्ठ बृहती भवोर्ध्वा तिष्ठ ध्रुवा त्वमित्याह प्रतिष्ठित्या असुर्यं पात्रमनाच्छृण्णमा च्छृणत्ति देवत्राऽकरजक्षीरेणाऽऽच्छृणत्ति परमं वा एतत्पयो यदजक्षीरं परमेणै-

वैनां पयसाऽऽ च्छृणत्ति यजुषा व्यावृत्त्यै छन्दोंभिरा च्छृणत्ति छन्दोंभिर्वा एषा क्रियते छन्दोंभिरेव छन्दाꣳस्या च्छृणत्ति ( ४ ) ॥

( आह देवानां वै पत्नीः पृणैषा षट्चं )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां पञ्चमाष्टके प्रथमप्रपाठके सप्तमोऽनुवाकः ॥ ७ ॥

---

( अथ पञ्चमाष्टके प्रथमप्रपाठके सप्तमोऽनुवाकः । )

---

सप्तभिरिति सप्त—भिः । धूपयति । सप्त । वै । शीर्षण्याः । प्राणा इति प्र—अनाः । शिरः । एतत् । यज्ञस्य । यत् । उखा । शीर्षन् । एव । यज्ञस्य । प्राणानिति प्र—अनान् । दधाति । तस्मात् । सप्त । शीर्षन् । प्राणा इति प्र—अनाः । अश्वशकेनेत्यश्व—शकेन । धूपयति । प्राजापत्य इति प्राजा—पत्यः । वै । अश्वः । सयोनित्वायेति सयोनि—त्वाय । अदितिः । त्वा । इति । आह । इयम् । वै । अदितिः । अदित्या । एव । अदित्याम् । खनति । अस्याः । अक्रूंकारायेत्यक्रूर—काराय । न । हि । स्वः । स्वम् । हिनस्ति । देवानाम् । त्वा । पत्नीः । इति । आह । देवानाम् ( १ ) । वै । एताम् । पत्नयः । अग्रे । अकुर्वन् । ताभिः । एव ।

एनाम् । दधाति । धिषणाः । त्वा । इति । आह । विद्याः । वै । धिषणाः । विद्याभिः । एव । एनाम् । अभीति । इन्धे । ग्नाः । त्वा । इति । आह । छन्दांसि । वै । ग्नाः । छन्दोभिरिति छन्दः—भिः । एव । एनाम् । श्रपयति । वरूत्रयः । त्वा । इति । आह । होत्राः । वै । वरूत्रयः । होत्राभिः । एव । एनाम् । पचति । जनयः । त्वा । इति । आह । देवानाम् । वै । पत्नीः (२) । जनयः । ताभिः । एव । एनाम् । पचति । षड्भिरिति षट्—भिः । पचति । षट् । वै । ऋतवः । ऋतुभिरित्यृतु—भिः । एव । एनाम् । पचति । द्विः । पचन्तु । इति । आह । तस्मात् । द्विः । संवत्सरस्येति सं—वत्सरस्य । सस्यम् । पच्यते । वारुणी । उखा । अभीद्धेत्यभि—इद्धा । मैत्रियां । उपेति । एति । शान्त्यै । देवः । त्वा । सविता । उदिति । वपतु । इति । आह । सवितृप्रसूत इति सवितृ—प्रसूतः । एव । एनाम् । ब्रह्मणा । देवताभिः । उदिति । वपति । अपद्यमाना । पृथिवि । आशाः । दिशः । एति । पृण (३) । इति । आह । तस्मात् । अग्निः । सर्वाः । दिशः । अनु । वीति । भाति । उदिति ।

तिष्ठ । बृहती । भव । ऊर्ध्वा । तिष्ठ । ध्रुवा । त्वम् । इति । आह । प्रतिष्ठित्या इति प्रति—स्थित्यै । असुर्यम् । पात्रम् । अनाच्छृण्णमित्यना—च्छृण्णम् । एति । छृणत्ति । देवत्रेति देव—त्रा । अकः । अजक्षीरेणेत्यज—क्षीरेण । एति । छृणत्ति । परमम् । वै । एतत् । पयः । यत् । अजक्षीरमित्यज—क्षीरम् । परमेण । एव । एनाम् । पयसा । एति । छृणत्ति । यजुषा । व्यावृत्त्या इति वि—आवृत्त्यै । छन्दोभिरिति छन्दः—भिः । एति । छृणत्ति । छन्दोभिरिति छन्दः—भिः । वै । एषा । क्रियते । छन्दोभिरिति छन्दः—भिः । एव । छन्दांसि । एति । छृणत्ति ( ४ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे पञ्चमाष्टके प्रथमप्रपाठके सप्तमोऽनुवाकः ॥ ७ ॥

---

( अथ पञ्चमाष्टके प्रथमप्रपाठकेऽष्टमोऽनुवाकः । )

---

एकविंशत्या माषैः पुरुषशीर्षमच्छैत्यमेध्या वै माषा अमेध्यं पुरुषशीर्षममेध्यैरेवास्यामेध्यं निरवदाय मेध्यं कृत्वाऽऽहरत्येकविंशतिर्भवन्त्येकविंशो वै पुरुषः पुरुषस्याऽऽप्त्यै व्यृद्धं वा एतत्प्राणैरमेध्यं यत्पुरुषशीर्षं सप्तधा

वितृण्णां वल्मीकवपां प्रति नि दधाति सप्त वै शीर्षण्याः प्राणाः प्राणैरेवैनत्समर्धयति मेध्यत्वाय यावन्तः ( १ ) वै मृत्युबन्धवस्तेषां यम आधिपत्यं परीयाय यमगाथाभिः परि गायति यमादेवैनंद्वृङ्क्ते तिसृभिः परि गायति त्रयं इमे लोका एभ्य एवैनंल्लोकेभ्यो वृङ्क्ते तस्माद्गायते न देयं गाथा हि तद्वृङ्क्तेऽग्निभ्यः पशूना लभते कामा वा अग्नयः कामानेवाव रुन्धे यत्पशूनाऽऽलभेतानवरुद्धा अस्य ( २ ) पशवः स्युर्यत्पर्यग्निकृतानुत्सृजेद्यज्ञवेशसं कुर्याद्यत्संस्थापयेद्यातयामानि शीर्षाणि स्युर्यत्पशूनालभते तेनैव पशूनवं रुन्धे यत्पर्यग्निकृतानुत्सृजति शीर्ष्णामयातयामत्वाय प्राजापत्येन सꣳस्थापयति यज्ञो वै प्रजापतिर्यज्ञ एव यज्ञं प्रति ष्ठापयति प्रजापतिः प्रजा असृजत स रिरिचानोऽमन्यत स एता आप्रीरपश्यत्ताभिर्वै स मुखतः ( ३ ) आत्मानमाऽप्रीणीत यदेता आप्रियो भवन्ति यज्ञो वै प्रजापतिर्यज्ञमेवैताभिर्मुखत आ प्रीणात्यपरिमितछन्दसो भवन्त्यपरिमितः प्रजापतिः प्रजापते-

रात्र्यां ऊनातिरिक्ता मिथुनाः प्रजात्यै लोमशं वै नामैतच्छन्दः प्रजापतेः पशवो लोमशाः पशूनेवाव रुन्धे सर्वाणि वा एता रूपाणि सर्वाणि रूपाण्यग्नौ चित्ये क्रियन्ते तस्मादेता अग्नेश्चित्यस्य ( ४ ) भवन्त्येकविंशतिं सामिधेनीरन्वाह रुग्वा एकविंशो रुचमेव गच्छत्यथो प्रतिष्ठामेव प्रतिष्ठा ह्येकविंशश्चतुर्विंशतिमन्वाह चतुर्विंशतिरर्धमासाः संवत्सरः संवत्सरोऽग्निर्वैश्वानरः साक्षादेव वैश्वानरमव रुन्धे पराचीरन्वाह पराङिव हि सुवर्गो लोकः समास्त्वाऽग्न ऋतवो वर्धयन्त्वित्याह समाभिरेवाग्निं वर्धयति ( ५ ) ऋतुभिः संवत्सरं विश्वा आ भाहि प्रदिशः पृथिव्या इत्याह तस्मादग्निः सर्वा दिशोऽनु वि भाति प्रत्यौहतामश्विना मृत्युमस्मादित्याह मृत्युमेवास्मादप नुदत्युद्वयं तमसस्परीत्याह पाप्मा वै तमः पाप्मानमेवास्मादप हन्त्यगन्म ज्योतिरुत्तममित्याहासौ वा आदित्यो ज्योतिरुत्तममादित्यस्यैव सायुज्यं गच्छति न संवत्सरस्तिष्ठति नास्य श्रीस्तिष्ठति यस्यैताः क्रियन्ते ज्योति-

ष्मतीमुत्तमामन्वाह ज्योतिरेवास्मा उपरिष्टाद्द-
धाति सुवर्गस्य लोकस्यानुख्यात्यै ( ६ )।
( यावन्तोऽस्य मुखतश्चित्यस्य वर्धयत्यादित्योऽष्टाविंशतिश्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां पञ्चमाष्टके
प्रथमप्रपाठकेऽष्टमोऽनुवाकः ॥ ८ ॥

( अथ पञ्चमाष्टके प्रथमप्रपाठकेऽष्टमोऽनुवाकः । )

एकविंशत्येत्येक—विंशत्या । माषैः । पुरुषशी-
र्षमिति पुरुष—शीर्षम् । अच्छ । एति । अमेध्याः ।
वै । माषाः । अमेध्यम् । पुरुषशीर्षमिति पुरुष—
शीर्षम् । अमेध्यैः । एव । अस्य । अमेध्यम् । नि-
रवदायेति निः—अवदाय । मेध्यम् । कृत्वा । एति ।
हरति । एकविंशतिरित्येक—विंशतिः । भवन्ति ।
एकविंश इत्येक—विंशः । वै । पुरुषः । पुरुषस्य ।
आप्त्यै । व्यृद्धमिति वि—ऋद्धम् । वै । एतत् । प्रा-
णैरिति प्र—अनैः । अमेध्यम् । यत् । पुरुषशी-
र्षमिति पुरुष—शीर्षम् । सप्तधेति सप्त—धा । वितृ-
ण्णामिति वि—तृण्णाम् । वल्मीकवपामिति वल्मी-
क—वपाम् । प्रति । नीति । दधाति । सप्त । वै ।
शीर्षण्याः । प्राणा इति प्र—अनाः । प्राणैरिति प्र—
अनैः । एव । एनत् । समिति । अर्धयति । मेध्य-

त्वायेति मेध्य—त्वायं । यावन्तः ( १ ) । वै । मृत्युबंन्धव इति मृत्यु—बन्धवः । तेषाम् । यमः । आधिपत्यमित्याधि—पत्यम् । परीति । इयाय । यमगाथाभिरिति यम—गाथाभिः । परीति । गायति । यमात् । एव । एनत् । वृङ्क्ते । तिसृभिरिति तिसृ—भिः । परीति । गायति । त्रयः । इमे । लोकाः । एभ्यः । एव । एनत् । लोकेभ्यः । वृङ्क्ते । तस्मात् । गायते । न । देयम् । गाथा । हि । तत् । वृङ्क्ते । अग्निभ्य इत्यग्नि—भ्यः । पशून् । एति । लभते । कामाः । वै । अग्नयः । कामान् । एव । अवेति । रुन्धे । यत् । पशून् । न । आलभेतेत्या—लभेत । अनवरुद्धा इत्यनव—रुद्धाः । अस्य ( २ ) । पशवः । स्युः । यत् । पर्यग्निकृतानिति पर्यग्नि—कृतान् । उत्सृजेदित्युत्—सृजेत् । यज्ञवेशसमिति यज्ञ—वेशसम् । कुर्यात् । यत् । संस्थापयेदिति सं—स्थापयेत् । यातयामानीति यात—यामानि । शीर्षाणि । स्युः । यत् । पशून् । आलभत इत्या—लभते । तेन । एव । पशून् । अवेति । रुन्धे । यत् । पर्यग्निकृतानिति पर्यग्नि—कृतान् । उत्सृजतीत्युत्—सृजति । शीर्ष्णाम् । अ-

यातयामत्वायेत्ययातयाम—त्वाय । प्राजापत्येनेति प्राजा—पत्येन । समिति । स्थापयति । यज्ञः । वै । प्रजापतिरिति प्रजा—पतिः । यज्ञे । एव । यज्ञम् । प्रतीति । स्थापयति । प्रजापतिरिति प्रजा—पतिः । प्रजा इति प्र—जाः । असृजत । सः । रिरिचानः । अमन्यत । सः । एताः । आप्रीरित्या—प्रीः । अपश्यत् । ताभिः । वै । सः । मुखतः (३) । आत्मानम् । एति । अप्रीणीत । यत् । एताः । आप्रिय इत्या—प्रियः । भवन्ति । यज्ञः । वै । प्रजापतिरिति प्रजा—पतिः । यज्ञम् । एव । एताभिः । मुखतः । एति । प्रीणाति । अपरिमितछन्दस इत्यपरिमित—छन्दसः । भवन्ति । अपरिमित इत्यपरि—मितः । प्रजापतिरिति प्रजा—पतिः । प्रजापतेरिति प्रजा—पतेः । आप्त्यै । ऊनातिरिक्ता इत्यून—अतिरिक्ताः । मिथुनाः । प्रजात्या इति प्र—जात्यै । लोमशम् । वै । नाम । एतत् । छन्दः । प्रजापतेरिति प्रजा—पतेः । पशवः । लोमशाः । पशून् । एव । अवेति । रुन्धे । सर्वाणि । वै । एताः । रूपाणि । सर्वाणि । रूपाणि । अग्नौ । चित्ये । क्रियन्ते । तस्मात् ।

एताः । अग्नेः । चित्यस्य ( ४ ) । भवन्ति । एकविंशतिमित्येकं—विंशतिम् । सामिधेनीरिति साम्—इधेनीः । अन्विति । आह । रुक् । वै । एकविंश इत्येक—विंशः । रुचम् । एव । गच्छति । अथो इति । प्रतिष्ठामिति प्रति—स्थाम् । एव । प्रतिष्ठेति प्रति—स्था । हि । एकविंश इत्येक—विंशः । चतुर्विंशतिमिति चतुः—विंशतिम् । अन्विति । आह । चतुर्विंशतिरिति चतुः—विंशतिः । अर्धमासा इत्यर्ध—मासाः । संवत्सर इति सं—वत्सरः । संवत्सर इति सं—वत्सरः । अग्निः । वैश्वानरः । साक्षादिति स—अक्षात् । एव । वैश्वानरम् । अवेति । रुन्धे । पराचीः । अन्विति । आह । पराङ् । इव । हि । सुवर्ग इति सुवः—गः । लोकः । समाः । त्वा । अग्ने । ऋतवः । वर्धयन्तु । इति । आह । समाभिः । एव । अग्निम् । वर्धयति ( ५ ) । ऋतुभिरित्यृतु—भिः । संवत्सरमिति सं—वत्सरम् । विश्वाः । एति । आहि । प्रदिश इति प्र—दिशः । पृथिव्याः । इति । आह । तस्मात् । अग्निः । सर्वाः । दिशः । अनु । वीति । भाति । प्रतीति । औहताम् । अश्विना । मृत्युम् । अस्मात् । इति । आह ।

मृत्युम् । एव । अस्मात् । अपेति । नुदति । उदिति । वयम् । तमसः । परीति । इति । आह । पाप्मा । वै । तमः । पाप्मानम् । एव । अस्मात् । अपेति । हन्ति । अगन्म । ज्योतिः । उत्तममित्युत्—तमम् । इति । आह । असौ । वै । आदित्यः । ज्योतिः । उत्तममित्युत्—तमम् । आदित्यस्य । एव । सायुज्यम् । गच्छति । न । संवत्सर इति सं—वत्सरः । तिष्ठति । न । अस्य । श्रीः । तिष्ठति । यस्य । एताः । क्रियन्ते । ज्योतिष्मतीम् । उत्तमामित्युत्—तमाम् । अन्विति । आह । ज्योतिः । एव । अस्मै । उपरिष्टात् । दधाति । सुवर्गस्येति सुवः—गस्य । लोकस्य । अनुख्यात्या इत्यनु—ख्यात्यै (६) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे पञ्चमाष्टके प्रथमप्रपाठकेऽष्टमोऽनुवाकः ॥ ८ ॥

---

( अथ पञ्चमाष्टके प्रथमप्रपाठके नवमोऽनुवाकः । )

---

षड्भिर्दीक्षयति षड्वा ऋतवं ऋतुभिरेवैनं दीक्षयति सप्तभिर्दीक्षयति सप्त छन्दांसि छन्दोभिरेवैनं दीक्षयति विश्वे देवस्य नेतुरित्यनुष्टुभोत्तमया जुहोति वाग्वा अनुष्टुप्तस्मात्प्राणानां वागुत्तमैकस्मादक्षरादनाप्तं प्रथमं पदं

तस्माद्यद्वाचोऽनाप्तं तन्मनुष्या उप जीवन्ति पूर्णया जुहोति पूर्ण इव हि प्रजापतिः ( १ ) प्रजापतेराप्त्यै न्यूनया जुहोति न्यूनाद्धि प्रजापतिः प्रजा असृजत प्रजानाꣳ सृष्ट्यै यदर्चिषि प्रवृञ्ज्याद्भूतमव रुन्धीत यदङ्गारेषु भविष्यदङ्गारेषु प्र वृणक्ति भविष्यदेवाव रुन्धे भविष्यद्धि भूयो भूताद्द्वाभ्यां प्र वृणक्ति द्विपाद्यजमानः प्रतिष्ठित्यै ब्रह्मणा वा एषा यजुषा संभृता यदुखा सा यद्भिद्येताऽऽर्तिमार्छेद् (२) यजमानो हन्येतास्य यज्ञो मित्रैतामुखां तपेत्याह ब्रह्म वै मित्रो ब्रह्मन्नेवैनां प्रति ष्ठापयति नाऽऽर्तिमार्छति यजमानो नास्य यज्ञो हन्यते यदि भिद्येत तैरेव कपालैः सꣳ सृजेत्सैव ततः प्रायश्चित्तिर्यो गतश्रीः स्यान्मथित्वा तस्याव दध्याद्भूतो वा एष स स्वाम् ( ३ ) देवतामुपैति यो भूतिकामः स्याद्य उखायै संभवेत्स एव तस्य स्यादतो ह्येष संभवत्येष वै स्वयंभूर्नाम भवत्येव यं कामयेत भ्रातृव्यमस्मै जनयेयमित्यन्यतस्तस्याऽऽहृत्याव दध्यात्साक्षादेवास्मै भ्रातृव्यं जनयत्यम्बरीषादन्नकामस्याव

दध्यादम्बरीषे वा अन्नं भ्रियते सयोन्येवान्नम् (४) अवं रुन्धे मुञ्जानवं दधात्यूर्ग्वै मुञ्जा ऊर्जमेवास्मा अपिं दधात्यग्निर्देवेभ्यो निलांयत स क्रुमुकं प्राविंशत्क्रुमुकमवं दधाति यदेवास्य तत्र न्यंक्तं तदेवावं रुन्ध आज्येन सं यौत्येतद्वा अग्नेः प्रियं धाम यदाज्यं प्रियेणैवैनं धाम्ना समंर्धयत्यथो तेजंसा (५) वैकंङ्कतीमा दंधाति भा एवावं रुन्धे शमीमयीमा दंधाति शान्त्यै सीद त्वं मातुरस्या उपस्थ इतिं तिसृभिर्जात-मुपं तिष्ठते त्रयं इमे लोका एष्वेव लोकेष्वा-विदं गच्छत्यथो प्राणानेवाऽऽत्मन्धंत्ते (६) ॥

(प्रजापंतिर्ऋच्छेत्स्वामेवान्नं तेजंसा चतुंस्त्रिꣳशच्च।)

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां पञ्चमाष्टके प्रथमप्रपाठके नवमोऽनुवाकः ॥ ९ ॥

---

(अथ पञ्चमाष्टके प्रथमप्रपाठके नवमोऽनुवाकः।)

---

षड्भिरितिं षट्—भिः। दीक्षयति। षट्। वै। ऋतवंः। ऋतुभिरित्यृतु—भिः। एव। एनम्। दीक्षयति। सप्तभिरितिं सप्त—भिः। दीक्षयति। सप्त। छन्दांꣳसि। छन्दोंभिरिति छन्दंः—भिः। एव। एनम्। दीक्षयति। विश्वें। देवस्यं। नेतुः। इतिं।

अनुष्टुभेत्यनु—स्तुभा । उत्तमयेत्युत्—तमया । जुहोति । वाक् । वै । अनुष्टुबित्यनु—स्तुप् । तस्मात् । प्राणानामिति प्र—अनानाम् । वाक् । उत्तमेत्युत्—तमा । एकस्मात् । अक्षरात् । अनाप्तम् । प्रथमम् । पदम् । तस्मात् । यत् । वाचः । अनाप्तम् । तत् । मनुष्याः । उपेति । जीवन्ति । पूर्णया । जुहोति । पूर्णः । इव । हि । प्रजापतिरिति प्रजा—पतिः । ( १ ) । प्रजापतेरिति प्रजा—पतेः । आप्त्यै । न्यूनयेति नि—ऊनया । जुहोति । न्यूनादिति नि—ऊनात् । हि । प्रजापतिरिति प्रजा—पतिः । प्रजा इति प्र—जाः । असृजत । प्रजानामिति प्र—जानाम् । सृष्ट्यै । यत् । अर्चिषि । प्रवृञ्ज्यादिति प्र—वृञ्ज्यात् । भूतम् । अवेति । रुन्धीत । यत् । अङ्गारेषु । भविष्यत् । अङ्गारेषु । प्रेति । वृणक्ति । भविष्यत् । एव । अवेति । रुन्धे । भविष्यत् । हि । भूयः । भूतात् । द्वाभ्याम् । प्रेति । वृणक्ति । द्विपादिति द्वि—पात् । यजमानः । प्रतिष्ठित्या इति प्रति—स्थित्यै । ब्रह्मणा । वै । एषा । यजुषा । संभृतेति सं—भृता । यत् । उखा । सा । यत् । भिद्येत । आर्तिम् । एति । ऋच्छेत् ( २ ) । यज-

मानः। हन्येत। अस्य। यज्ञः। मित्र। एताम्। उखाम्। तप। इति। आह। ब्रह्म। वै। मित्रः। ब्रह्मन्। एव। एनाम्। प्रतीति। स्थापयति। न। आर्तिम्। एति। ऋच्छति। यजमानः। न। अस्य। यज्ञः। हन्यते। यदि। भिद्येत। तैः। एव। कपालैः। समिति। सृजेत्। सा। एव। ततः। प्रायश्चित्तिः। यः। गतश्रीरिति गत—श्रीः। स्यात्। मथित्वा। तस्य। अवेति। दध्यात्। भूतः। वै। एषः। सः। स्वाम् ( ३ )। देवताम्। उपेति। एति। यः। भूतिकाम इति भूति—कामः। स्यात्। यः। उखायै। संभवेदिति सं—भवेत्। सः। एव। तस्य। स्यात्। अतः। हि। एषः। संभवतीति सं—भवति। एषः। वै। स्वयंभूरिति स्वयं—भूः। नाम। भवति। एव। यम्। कामयेत। भ्रातृव्यम्। अस्मै। जनयेयम्। इति। अन्यतः। तस्य। आहृत्येत्या—हृत्य। अवेति। दध्यात्। साक्षादिति स—अक्षात्। एव। अस्मै। भ्रातृव्यम्। जनयति। अम्बरीषात्। अन्नकामस्येत्यन्न—कामस्य। अवेति। दध्यात्। अम्बरीषे। वै। अन्नम्। भ्रियते। सयोनीति स—योनि। एव। अन्न-

म् ( ४ ) । अवेति॑ । रु॒न्धे॒ । मुञ्जान् । अवेति॑ । द॒धा॒ति॒ । ऊर्क् । वै । मुञ्जाः॑ । ऊर्ज॑म् । ए॒व । अ॒स्मै॒ । अपीति॑ । द॒धा॒ति॒ । अ॒ग्निः । दे॒वेभ्यः॑ । निला॑यत । सः । क्रु॒मुक॒म् । प्रेति॑ । अ॒वि॒श॒त् । क्रु॒मु॒कम् । अवेति॑ । द॒धा॒ति॒ । यत् । ए॒व । अ॒स्य॒ । तत्रा॑ । न्यक्त॒मिति॒ नि—अ॒क्तम् । तत् । ए॒व । अवेति॑ । रु॒न्धे॒ । आज्ये॑न । समिति॑ । यौ॒ति॒ । ए॒तत् । वै । अ॒ग्नेः । प्रि॒यम् । धाम॑ । यत् । आज्य॑म् । प्रि॒येण॑ । ए॒व । ए॒नम् । धाम्ना॑ । समिति॑ । अ॒र्ध॒य॒ति॒ । अथो॑ इति॑ । तेज॑सा ( ५ ) । वैक॑ङ्कतीम् । एति॑ । द॒धा॒ति॒ । भाः । ए॒व । अवेति॑ । रु॒न्धे॒ । श॒मी॒म॒यी॒मिति॑ शमी—मयी॑म् । एति॑ । द॒धा॒ति॒ । शान्त्यै॑ । सीद॑ । त्वम् । मा॒तुः । अ॒स्याः । उ॒पस्थ॒ इत्यु॒प—स्थे॒ । इति॑ । ति॒सृ॒भिरिति॑ ति॒सृ—भिः॒ । जा॒तम् । उ॒पेति॑ । ति॒ष्ठ॒ते॒ । त्रयः॑ । इ॒मे । लो॒काः । ए॒षु । ए॒व । लो॒केषु॑ । आ॒वि॒दमि॒त्या—वि॒द॑म् । ग॒च्छ॒ति॒ । अथो॑ इति॑ । प्रा॒णानिति॑ प्र—अ॒ना॒न् । ए॒व । आ॒त्मन् । ध॒त्ते॒ ( ६ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे पञ्चमाष्टके
प्रथमप्रपाठके नवमोऽनुवाकः ॥ ९ ॥

(अथ पञ्चमाष्टके प्रथमप्रपाठके दशमोऽनुवाकः ।)

न ह स्म वै पुराऽग्निरपरशुवृक्णं दहति तदस्मै प्रयोग एवर्षिरस्वदयद्यदग्ने यानि कानि चेति समिधमा दधात्यपरशुवृक्णमेवास्मै स्वदयति सर्वमस्मै स्वदते य एवं वेदौदुम्बरीमा दधात्यूर्ग्वा उदुम्बर ऊर्जमेवास्मा अपि दधाति प्रजापतिरग्निमसृजत तꣳ सृष्टꣳ रक्षाꣳसि (१) अजिघाꣳसन्त्स एतद्राक्षोघ्नमपश्यत्तेन वै स रक्षाꣳस्यपाहत यद्राक्षोघ्नं भवत्यग्नेरेव तेन जाताद्रक्षाꣳस्यप हन्त्याश्वत्थीमा दधात्यश्वत्थो वै वनस्पतीनाꣳ सपत्नसाहो विजित्यै वैकङ्कतीमा दधाति भा एवाव रुन्धे शमीमयीमा दधाति शान्त्यै सꣳशितं मे ब्रह्मोदेषां बाहू अतिरमित्युत्तमे औदुम्बरी (२) वाचयति ब्रह्मणैव क्षत्रꣳ सꣳ श्यति क्षत्रेण ब्रह्म तस्माद्ब्राह्मणो राजन्यवानत्यन्यं ब्राह्मणं तस्माद्राजन्यो ब्राह्मणवानत्यन्यꣳ राजन्यं मृत्युर्वा एष यदग्निरमृतꣳ हिरण्यꣳ रुक्ममन्तरं प्रति मुञ्चतेऽमृतमेव मृत्योरन्तर्धत्त एकविꣳशतिनिर्बाधो भवत्येकविꣳशतिर्वै देवलोका द्वादश

मासाः पञ्चर्तवस्त्रय इमे लोका असावादित्य
( ३ ) एकविꣳश एतावन्तो वै देवलोकास्ते-
भ्य एव भ्रातृव्यमन्तरेति निर्बाधैर्वै देवा असु-
रान्निर्बाधेऽकुर्वत तन्निर्बाधानां निर्बाधत्वं नि-
र्बाधी भवति भ्रातृव्यानेव निर्बाधे कुरुते सा-
वित्रिया प्रति मुञ्चते प्रसूत्यै नक्तोषासेत्युत्तर-
याऽहोरात्राभ्यामेवैनमुद्यच्छते देवा अग्निं धा-
रयन्द्रविणोदा इत्याह प्राणा वै देवा द्रविणोदा
अहोरात्राभ्यामेवैनमुद्यत्य ( ४ ) प्राणैर्दाधा-
राऽऽसीनः प्रति मुञ्चते तस्मादासीनाः प्रजाः
प्र जायन्ते कृष्णाजिनमुत्तरं तेजो वै हिरण्यं
ब्रह्म कृष्णाजिनं तेजसा चैवैनं ब्रह्मणा चोभ-
यतः परि गृह्णाति षडुद्यामꣳ शिक्यं भवति
षड्वा ऋतव ऋतुभिरेवैनमुद्यच्छते यद्द्वादशो-
द्यामꣳ संवत्सरेणैव मौञ्जं भवत्यूर्ग्वै मुञ्जा
ऊर्जैवैनꣳ समर्धयति सुपर्णोऽसि गरुत्मानित्य-
वेक्षते रूपमेवास्यैतन्महिमानं व्याचष्टे दिवं
गच्छ सुवः पतेत्याह सुवर्गमेवैनं लोकं गम-
यति ( ५ ) ।

( रक्षाꣳस्यौदुम्बरी आदित्य उद्यत्य सं चतुर्विꣳशतिश्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां पञ्चमाष्टके
प्रथमप्रपाठके दशमोऽनुवाकः ॥ १० ॥

( अथ पञ्चमाष्टके प्रथमप्रपाठके दशमोऽनुवाकः । )

---

न । ह । स्म । वै । पुरा । अग्निः । अपरशुवृक्णमित्यपरशु—वृक्णम् । दहति । तत् । अस्मै । प्रयोग इति प्र—योगः । एव । ऋषिः । अस्वदयत् । यत् । अग्ने । यानि । कानि । च । इति । समिधमिति सम्—इधम् । एति । दधाति । अपरशुवृक्णमित्यपरशु—वृक्णम् । एव । अस्मै । स्वदयति । सर्वम् । अस्मै । स्वदते । यः । एवम् । वेद । औदुम्बरीम् । एति । दधाति । ऊर्क् । वै । उदुम्बरः । ऊर्जम् । एव । अस्मै । अपीति । दधाति । प्रजापतिरिति प्रजा—पतिः । अग्निम् । असृजत । तम् । सृष्टम् । रक्षाꣳसि ( १ ) । अजिघाꣳसन् । सः । एतत् । राक्षोघ्नमिति राक्षः—घ्नम् । अपश्यत् । तेन । वै । सः । रक्षाꣳसि । अपेति । अहत । यत् । राक्षोघ्नमिति राक्षः—घ्नम् । भवति । अग्नेः । एव । तेन । जातात् । रक्षाꣳसि । अपेति । हन्ति । आश्वत्थीम् । एति । दधाति । अश्वत्थः । वै । वनस्पतीनाम् । सपत्नसाह इति सपत्न—साहः । विजित्या इति वि—जित्यै । वैकङ्कतीम् । एति । दधाति । भाः । एव । अवेति । रुन्धे । शमीमयीमिति शमी—

मयींम् । एतिं । दधाति । शान्त्यैं । सꣳशिंतमिति सं—शितम् । मे । ब्रह्मं । उदितिं । एषाम् । बाहू इतिं । अतिरम् । इतिं । उत्तमे इत्युंत्—तमे । औदुंम्बरी इतिं ( २ ) । वाचयति । ब्रह्मंणा । एव । क्षत्रम् । समितिं । श्यति । क्षत्रेणं । ब्रह्मं । तस्मांत् । ब्राह्मणः । राजन्यंवानितिं राजन्यं—वान् । अतीतिं । अन्यम् । ब्राह्मणम् । तस्मांत् । राजन्यंः । ब्राह्मणवानितिं ब्राह्मण—वान् । अतीतिं । अन्यम् । राजन्यंम् । मृत्युः । वै । एषः । यत् । अग्निः । अमृतंम् । हिरंण्यम् । रुक्मम् । अन्तंरम् । प्रतीतिं । मुञ्चते । अमृतंम् । एव । मृत्योः । अन्तः । धत्ते । एकंविꣳशतिनिर्बाध इत्येकंविꣳशति—निर्बाधः । भवति । एकंविꣳशतिरित्येकं—विꣳशतिः । वै । देवलोका इतिं देव—लोकाः । द्वादंश । मासाः । पञ्च । ऋतवंः । त्रयंः । इमे । लोकाः । असौ । आदित्यः । एकविꣳश इत्येक—विꣳशः । एतावंन्तः । वै । देवलोका इतिं देव—लोकाः । तेभ्यंः । एव । भ्रातृंव्यम् । अन्तः । एति । निर्बाधैरितिं निः—बाधैः । वै । देवाः । असुंरान् । निर्बाध इतिं निः—बाधे । अकुर्वत । तत् । निर्बाधानामितिं निः—बाधानांम् ।

निर्बाधत्वमिति निर्बाध—त्वम्। निर्बाधीति निः—बाधी। भवति। भ्रातृव्यान्। एव। निर्बाध इति निः—बाधे। कुरुते। सावित्रिया। प्रतीति। मुञ्चते। प्रसूत्या इति प्र—सूत्यै। नक्तोषासा। इति। उत्तरयेत्युत्—तरया। अहोरात्राभ्यामित्यहः—रात्राभ्याम्। एव। एनम्। उदिति। यच्छते। देवाः। अग्निम्। धारयन्। द्रविणोदा इति द्रविणः—दाः। इति। आह। प्राणा इति प्र—अनाः। वै। देवाः। द्रविणोदा इति द्रविणः—दाः। अहोरात्राभ्यामित्यहः—रात्राभ्याम्। एव। एनम्। उद्यत्येत्युत्—यत्य (४)। प्राणैरिति प्र—अनैः। दाधार। आसीनः। प्रतीति। मुञ्चते। तस्मात्। आसीनाः। प्रजा इति प्र—जाः। प्रेति। जायन्ते। कृष्णाजिनमिति कृष्ण—अजिनम्। उत्तरमित्युत्—तरम्। तेजः। वै। हिरण्यम्। ब्रह्म। कृष्णाजिनमिति कृष्ण—अजिनम्। तेजसा। च। एव। एनम्। ब्रह्मणा। च। उभयतः। परीति। गृह्णाति। षडुद्याममिति षट्—उद्यामम्। शिक्यम्। भवति। षट्। वै। ऋतवः। ऋतुभिरित्यृतु—भिः। एव। एनम्। उदिति। यच्छते। यत्। द्वादशोद्याममिति द्वादश—उद्यामम्। संवत्सरेणेति सं—व-

त्सरेण । एव । मौञ्जम् । भवति । ऊर्क् । वै । मुञ्जाः । ऊर्जा । एव । एनम् । समिति । अर्धयति । सुपर्ण इति सु—पर्णः । असि । गरुत्मान् । इति । अवेति । ईक्षते । रूपम् । एव । अस्य । एतत् । महिमानम् । व्याचष्ट इति वि—आचष्टे । दिवम् । गच्छ । सुवः । पत । इति । आह । सुवर्गमिति सुवः—गम् । एव । एनम् । लोकम् । गमयति ( ५ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे पञ्चमाष्टके प्रथमप्रपाठके दशमोऽनुवाकः ॥ १० ॥

( अथ पञ्चमाष्टके प्रथमप्रपाठक एकादशोऽनुवाकः । )

समिद्धो अञ्जन्कृदरं मतीनां घृतमग्ने मधुमत्पिन्वमानः । वाजी वहन्वाजिनं जातवेदो देवानां वक्षि प्रियमा सधस्थम् । घृतेनाञ्जन्त्सं पथो देवयानान्प्रजानन्वाज्यप्येतु देवान् । अनु त्वा सप्ते प्रदिशः सचन्ताꣳ स्वधामस्मै यजमानाय धेहि । ईड्यश्चासि वन्द्यश्च वाजिन्नाशुश्चासि मेध्यश्च सप्ते । अग्निष्ट्वा ( १ ) देवैर्वसुभिः सजोषाः प्रीतं वह्निं वहतु जातवेदाः । स्तीर्णं बर्हिः सुष्टरीमा जुषाणोरु पृथु प्रथमानं पृथिव्याम् । देवेभिर्युक्तमदितिः सजोषाः

स्योनं कृण्वाना सुविते दधातु । एता उ वः सुभगा विश्वरूपा वि पक्षोभिः श्रयमाणा उदातैः । ऋष्वाः सतीः कवषः शुम्भमाना द्वारो देवीः सुप्रायणा भवन्तु । अन्तरा मित्रावरुणा चरन्ती मुखं यज्ञानामभि संविदाने । उषासा वाम् ( २ ) सुहिरण्ये सुशिल्पे ऋतस्य योनाविह सादयामि । प्रथमा वाꣳ सरथिना सुवर्णा देवौ पश्यन्तौ भुवनानि विश्वा । अपिप्रयं चोदना वां मिमाना होतारा ज्योतिः प्रदिशा दिशन्ता । आदित्यैर्नो भारती वष्टु यज्ञꣳ सरस्वती सह रुद्रैर्न आवीत् । इडोपहूता वसुभिः सजोषा यज्ञं नो देवीरमृतेषु धत्त । त्वष्टा वीरं देवकामं जजान त्वष्टुरर्वा जायत आशुरश्वः ( ३ ) त्वष्टेदं विश्वं भुवनं जजान बहोः कर्तारमिह यक्षि होतः । अश्वो घृतेन त्मन्या समक्त उप देवाꣳ ऋतुशः पाथ एतु । वनस्पतिर्देवलोकं प्रजानन्नग्निना हव्या स्वदितानि वक्षत् । प्रजापतेस्तपसा वावृधानः सद्यो जातो दधिषे यज्ञमग्ने । स्वाहाकृतेन

हविषां पुरोगा याहि साध्या हविरदन्तु देवाः ( ४ ) ॥

( अग्निष्ठां वामश्वो द्विचत्वारिंशच्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां पञ्चमाष्टके प्रथमप्रपाठक एकादशोऽनुवाकः ॥ ११ ॥

---

सावित्राणि व्यृद्धमुत्क्राम देवस्य खनति क्रूरं वारुणः सप्तभिरेकविंशत्या षड्भिर्न ह स्म समिद्धो अञ्जन्नेकादश ॥ ११ ॥

सावित्राण्युत्क्राम क्रूरं वारुणः पशवः स्युर्न ह स्म नवपञ्चाशत् ॥ ५९ ॥

हरिः ॐ ।

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां पञ्चमाष्टके प्रथमः प्रपाठकः ॥ १ ॥

---

( अथ पञ्चमाष्टके प्रथमप्रपाठक एकादशोऽनुवाकः । )

---

समिद्ध इति सम्—इद्धः । अञ्जन् । कृदरम् । मतीनाम् । घृतम् । अग्ने । मधुमदिति मधु—मत् । पिन्वमानः । वाजी । वहन् । वाजिनम् । जातवेद इति जात—वेदः । देवानाम् । वक्षि । प्रियम् । एति । सधस्थमिति सध—स्थम् । घृतेन । अञ्जन् । समिति । पथः । देवयानानिति देव—यानान् । प्रजानन्निति प्र—जानन् । वाजी । अपीति । एतु । देवान् । अन्विति । त्वा । सप्ते । प्रदिश इति प्र—

दिशः। सचन्ताम्। स्वधामिति स्व—धाम्। अस्मै। यजमानाय। धेहि। ईड्यः। च। असि। वन्द्यः। च। वाजिन्। आशुः। च। असि। मेध्यः। च। सप्ते। अग्निः। त्वा (१)। देवैः। वसुभिरिति वसु—भिः। सजोषा इति स—जोषाः। प्रीतम्। वह्निम्। वहतु। जातवेदा इति जात—वेदाः। स्तीर्णम्। बर्हिः। सुष्टरीमेति सु—स्तरीम। जुषाणा। उरु। पृथु। प्रथमानम्। पृथिव्याम्। देवेभिः। युक्तम्। अदितिः। सजोषा इति स—जोषाः। स्योनम्। कृण्वाना। सुविते। दधातु। एताः। उ। वः। सुभगा इति सु—भगाः। विश्वरूपा इति विश्व—रूपाः। वीति। पक्षोभिरिति पक्षः—भिः। श्रयमाणाः। उदिति। आतैः। ऋष्वाः। सतीः। कवषः। शुम्भमानाः। द्वारः। देवीः। सुप्रायणा इति सु—प्रायणाः। भवन्तु। अन्तरा। मित्रावरुणेति मित्रा—वरुणा। चरन्ती इति। मुखम्। यज्ञानाम्। अभीति। संविदाने इति सं—विदाने। उषासा। वाम् (२)। सुहिरण्ये इति सु—हिरण्ये। सुशिल्पे इति सु—शिल्पे। ऋतस्य। योनौ। इह। सादयामि। प्रथमा। वाम्। सर-

थिनेति स—रथिना । सुवर्णेति सु—वर्णा । देवौ । पश्यन्तौ । भुवनानि । विश्वा । अपिप्रयम् । चोदना । वाम् । मिमाना । होतारा । ज्योतिः । प्रदिशेति प्र—दिशा । दिशन्ता । आदित्यैः । नः । भारती । वष्टु । यज्ञम् । सरस्वती । सह । रुद्रैः । नः । आवीत् । इडा । उपहूतेत्युप—हूता । वसुभिरिति वसु—भिः । सजोषा इति स—जोषाः । यज्ञम् । नः । देवीः । अमृतेषु । धत्त । त्वष्टा । वीरम् । देवकाममिति देव—कामम् । जजान । त्वष्टुः । अर्वा । जायते । आशुः । अश्वः ( ३ ) । त्वष्टा । इदम् । विश्वम् । भुवनम् । जजान । बहोः । कर्तारम् । इह । यक्षि । होतः । अश्वः । घृतेन । त्मन्या । समक्त इति सम्—अक्तः । उपेति । देवान् । ऋतुश इत्यृतु—शः । पाथः । एतु । वनस्पतिः । देवलोकमिति देव—लोकम् । प्रजानन्निति प्र—जानन् । अग्निना । हव्या । स्वदितानि । वक्षत् । प्रजापतेरिति प्रजा—पतेः । तपसा । वावृधानः । सद्यः । जातः । दधिषे । यज्ञम् । अग्ने । स्वाहाकृतेनेति स्वाहा—कृतेन । हविषा ।

( अश्वमेधसंबन्धिप्रयाजयाज्याभिधानम् )

पुरोगा इति पुरः—गाः । याहि । साध्या । हविः । अदन्तु । देवाः ( ४ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे पञ्चमाष्टके प्रथमप्रपाठक एकादशोऽनुवाकः ॥ ११ ॥

---

हरिः ॐ ।

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां पञ्चमाष्टके प्रथमः प्रपाठकः ॥ १ ॥

---

अथ कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये

## पञ्चमः काण्डः ।

---

(तत्र प्रथमप्रपाठके प्रथमाद्येकादशान्ता अनुवाकाः ।)

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥
चतुर्थकाण्डे चित्यर्थमन्त्राः सर्वत्र वर्णिताः ।
ब्राह्मणं पञ्चमे काण्डे तत्र सप्त प्रपाठकाः ॥ २ ॥
मन्त्रव्याख्या चतुर्थादौ शिष्टमौपानुवाक्यगम् ।
एकादशानुवाकाः स्युराद्येऽर्थास्त्वेवमीरिताः ॥ ३ ॥
सावित्राहुतिरभ्रेश्च स्वीकारः प्रथमे भवेत् ।
द्वितीये मृत्खनं गच्छन्नश्वेनाऽऽक्रमयेद्ध्रुवम् ॥ ४ ॥
तृतीये तूत्क्रमय्याश्वं भूसंस्कारो जलादिभिः ।
चतुर्थे तु मृदं खात्वा संभरेच्चर्मपत्रयोः ॥ ५ ॥
पञ्चमे संभृतामेतां यज्ञभूमौ समाहरेत् ।
षष्ठे तूखां निर्मिमीत सप्तमे संस्करोति ताम् ॥ ६ ॥
अष्टमे पशवो वह्नेरुख्यस्य नवमे जनिः ।
उख्यं दधीत दशमे स्यादन्त्यश्चाऽऽश्वमेधिकः ॥ ७ ॥

अध्येतुमनुवाकोऽत्र प्रोक्त उत्कृष्यतां ततः ।
समिद्ध इत्येवमाद्या अश्वस्याऽऽप्रिय ईरिताः ॥ ८ ॥
आप्रियः स्युः प्रयाजानां याज्या एकादशात्र ताः ।
अश्वमेधाख्यकाण्डे ता विनियुक्ताः स्फुटं श्रुतम् ॥ ९ ॥

एवं हि श्रूयते ‘ समिद्धो अञ्जन्कृदरं मतीनामित्यश्वस्याऽऽप्रियो भवन्ति सरूपत्वाय ’ इति ।

तत्र प्रथमामृचमाह—

समिद्धो अञ्जन्कृदरं मतीनां घृतमग्ने मधुमत्पिन्वमानः । वाजी वहन्वाजिनं जातवेदो देवानां वक्षि प्रियमा सधस्थम् ।, इति ।

हे जातवेदोऽग्ने वाजिनमश्वं वहन्वह देवान्प्रापयेत्यर्थः । कीदृशोऽग्निः, समिद्धः सम्यक्प्रदीप्तः । वाज्यन्नवानन्नसंपादक इत्यर्थः । किं कुर्वन्, मतीनां कृदरमञ्जन् । कृदरशब्दो धान्यानामावापनं कुसूलादिकमाचष्टे । मतीनामभिज्ञानां कृदरं कुसूलस्थानीयं स्वकस्वरूपमञ्जन्प्रकाशयन् । मधुमन्मधुरं घृतं पिन्वमानः पिबन् । तथा देवार्थं सर्वाणि हवींषि वहन् । कीदृशं वाजिनं, देवानां प्रियं प्रीतिहेतुम् । आसधस्थं सर्वतः पश्वन्तरैः सह स्थितम् । अत एवाश्वमेधकाण्डे समाम्नास्यते—“आग्नेयं कृष्णग्रीवं पुरस्ताल्ललाटे” इत्यादि ॥

अथ द्वितीयामृचमाह—

घृतेनाञ्जन्त्सं पथो देवयानान्प्रजानन्वाज्यप्येतु देवान् । अनु त्वा सप्ते प्रदिशः सचन्ताꣳ स्वधामस्मै यजमानाय धेहि ।, इति ।

अयं वाजी देवानप्येतु प्राप्नोतु । किं कुर्वन्, घृतेन स्वस्योपरिभूतेनाऽऽज्येन देवयानान्पथो देवलोकस्थितान्मार्गान्समञ्जन्सम्यग्द्रवीकुर्वन्, प्रजानंस्तेन घृतलाञ्छनेन मार्गो यथा ज्ञायते तथा कुर्वन् । हे सप्तेऽश्व प्रदिशः प्रकृष्टाः सर्वा दिशस्त्वा त्वामनुसृत्य सचन्तां सर्वत्रेत्रयो भवन्तु देवप्राप्तावानुकूल्यमेव कुर्वन्तु । त्वं चास्मै यजमानाय स्वधां स्वधाकारोपलक्षितमन्नं धेहि संपादय ॥

अथ तृतीयामृचमाह—

ईड्यश्चासि वन्द्यश्च वाजिन्नाशुश्चासि मेध्यश्च

( अश्वमेधसंबन्धिप्रयाजयाज्याभिधानम् )

सप्ते । अग्निष्ट्वा देवैर्वसुभिः सजोषाः प्रीतं वह्निं वहतु जातवेदाः । , इति ।

हे वाजिन्नश्व त्वमस्माभिरीड्यश्च स्तोतव्यश्च वन्द्यश्च नमस्कार्यश्चासि । हे सप्तेऽश्वाऽऽशुश्च शीघ्रगामी च मेध्यश्च यागयोग्यश्चासि । जातवेदा अग्निस्त्वा त्वां वहतु देवान्प्रापयतु । कीदृशोऽग्निः, वसुभिर्जगन्निवासहेतुभिर्देवैः सजोषाः समानप्रीतिः । कीदृशं त्वां, प्रीतं प्रीतिविषयं वह्निं वोढारम् ॥

अथ चतुर्थीमृचमाह—

स्तीर्णं बर्हिः सुष्टरीमा जुषाणोरु पृथु प्रथमानं पृथिव्याम् । देवेभिर्युक्तमदितिः सजोषाः स्योनं कृण्वाना सुविते दधातु । , इति ।

अदितिर्भूमिदेवी सुविते शोभनप्राप्तियोग्ये स्थाने दधात्वश्वं स्थापयतु । कीदृश्यदितिः । बर्हिर्जुषाणा दर्भं पूर्णं सेवमाना । कीदृशं बर्हिः, स्तीर्णं संज्ञपनायाश्वं शाययितुमास्तीर्णं सुष्टरीम सुष्ठु स्तरणयोग्यं, पृथिव्यां भूमावुरु बहुलं यथा भवति तथा, पृथ्वतिविस्तृतं यथा भवति तथा प्रथमानं प्रसारितम् । तथेयमदितिर्देवेभिः सर्वैर्देवैः सजोषाः समानप्रीतिः । तथा युक्तं योग्यं स्योनं सुखकरं स्थानं कृण्वाना कुर्वती ॥

अथ पञ्चमीमृचमाह—

एता उ वः सुभगा विश्वरूपा वि पक्षोभिः श्रयमाणा उदातैः । ऋष्वाः सतीः कवषः शुम्भमाना द्वारो देवीः सुप्रायणा भवन्तु । , इति ।

एता अपि द्वारो देवीर्द्वाराख्या देव्यः सुप्रायणा भवन्तु सुष्ठ्वस्याश्वस्य प्रापिका भवन्तु । कीदृश्यो देव्यः, वो युष्माकमृत्विग्यजमानानां सुभगाः सौभाग्यप्रदा विश्वरूपा बहुविधरूपयुक्ता आतैरातानि सततगमनसाधनानि वाहनानि तैः पक्षोभिः पक्षस्थानीयैर्गतैर्विशेषेणोच्छ्रयमाणा ऊर्ध्वं गच्छन्त्य ऋष्वाः सतीर्गमनागमनयोग्याः सत्यः कवषः कवाटैः शुम्भमानाः शोभमानाः । द्वाराभिमानिन्यो हि देव्यः कपाटसमीपे वर्तमानाः शोभन्ते ॥

अथ षष्ठीमृचमाह—

अन्तरा मित्रावरुणा चरन्ती मुखं यज्ञा-

नामभि संविदाने । उषासा वां
सुहिरण्ये सुशिल्पे ऋतस्य
योनाविह सादयामि । , इति ।

हे उषासोषःशब्दोपलक्षिते अहोरात्रे देवते वां युवामृतस्य योनौ यज्ञस्य कारण इहाश्वे सादयामि स्थापयामि । कीदृश्यावहोरात्रदेवते, मित्रावरुणरूपे । अत एवान्यत्राऽऽम्नातम्—" मैत्रं वा अहः । वारुणी रात्रिः । " इति । अन्तरा चरन्ती ब्रह्माण्डस्य मध्ये वर्तमाने यज्ञानां मुखमभि संविदाने यज्ञप्रारम्भमभिलक्ष्य परस्परमैकमत्ययुक्ते सुहिरण्ये शोभनहिरण्यवत्सूर्यचन्द्र-प्रकाशयुक्ते सुशिल्पे सर्वव्यवहारहेतुत्वेन शोभनैः शिल्पैरुपेते ॥

अथ सप्तमीमृचमाह—

प्रथमा वाꣳ सरथिना सुवर्णा देवौ पश्यन्तौ
भुवनानि विश्वा । अपिप्रयं चोदना वां मिमा-
ना होतारा ज्योतिः प्रदिशा दिशन्ता । , इति ।

हे दंपती यजमानपत्न्यौ वां युवयोरर्थे होतारा देवानां मध्ये यौ होतारौ तावुभावपिप्रयं प्रीणयामि । कीदृशौ, प्रथमा प्रथमौ मुख्यौ, सरथिना समान एको रथः सरथस्तद्वन्तौ, सुवर्णा शोभनवर्णोपेतौ, देवौ दीप्यमानौ, विश्वा भुवनानि सर्वाँल्लोकान्पश्यन्तौ, वां चोदना मिमाना युवयोर्विहितानि कर्माणि प्रमितवन्तौ, प्रदिशा प्रकृष्टासु दिक्षु ज्योतिर्दिशन्ता स्वकीयं प्रकाशं प्रसा-रयन्तौ ॥

अथाष्टमीमृचमाह—

आदित्यैर्नो भारती वष्टु यज्ञꣳ सरस्वती सह
रुद्रैर्न आवीत् । इडोपहूता वसुभिः
सजोषा यज्ञं नो देवीरमृतेषु धत्त । , इति ।

भारती भारत्याख्या देव्यादित्यैः सह नोऽस्मदीयं यज्ञं वष्टु कामयताम् । सरस्वती सरस्वत्याख्या देवी रुद्रैः सह नोऽस्मानावीद्रक्षतु । इडाख्या देवी वसुभिः सह सजोषाः समानप्रीतिरुपहूताऽनुज्ञाता सत्यस्मानवतु । देवीर्हे देव्यः सर्वं नोऽस्मदीयं यज्ञममृतेषु मरणरहितेषु देवेषु धत्त स्थापयत ॥

अथ नवमीमृचमाह—

त्वष्टा वीरं देवकामं जजान त्वष्टुरर्वा जायत आशुरश्वः। त्वष्टेदं विश्वं भुवनं जजान बहोः कर्तारमिह यक्षि होतः।, इति।

त्वष्टा त्वष्टृनामको देवो देवकामं देवान्कामयमानं वीरं कर्मसु शूरं पुत्रं जजानोत्पादयामास। स त्वष्टुः सकाशादर्वा गमनकुशल आशुः शीघ्रगाम्यश्वो जायते। किं बहुना, त्वष्टेदं विश्वं भुवनं सर्वमपि लोकं जजान जनयामास। हे होतर्बहोर्बहुलस्य जगतः कर्तारं स्रष्टारमिहास्मिन्कर्मणि यक्षि यज॥

अथ दशमीमृचमाह—

अश्वो घृतेन त्मन्या समक्त उप देवाꣳ ऋतुशः पाथ एतु। वनस्पतिर्देवलोकं प्रजानन्नग्निना हव्या स्वदितानि वक्षत्।, इति।

अयमश्वस्त्मन्याऽऽत्मना स्वयमेव घृतेन समक्तो घृताक्त इव रुचिकरः सन्पाथो देवानामन्नं भूत्वर्तुशस्तत्तदृतुकाले देवानुपैतु प्राप्नोतु। वनस्पतिरेतन्नामको देवो देवलोकं प्रजानन्प्रकर्षेणावगच्छन्नग्निना सह स्वदितानि हव्या स्वादुभूतानि हवींषि वक्षद्वहतु देवान्प्रापयतु॥

अथैकादशीमृचमाह—

प्रजापतेस्तपसा वावृधानः सद्यो जातो दधिषे यज्ञमग्ने। स्वाहाकृतेन हविषा पुरोगा याहि साध्या हविरदन्तु देवाः॥, इति॥

हेऽग्ने त्वं प्रजापतेर्जगदीश्वरस्य तपसा पर्यालोचनेन वावृधानो वर्धमानस्त्वं जात उत्पन्नमात्रः सद्यस्तदानीमेव यज्ञं दधिषे धारयसि। स्वाहाकृतेन स्वाहाकारसमर्पितेन हविषा सह पुरोगा अग्रतो गच्छन्याहि देवान्प्राप्नुहि। साध्या अस्माभिः साधनीयाः पूजनीया देवा इदमस्माभिः समर्पितं हविरदन्तु भक्षयन्तु॥

अत्र विनियोगसंग्रहः—

समिद्ध इत्याप्रियः स्युरश्वस्यैकादशोदिताः।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये पञ्चमकाण्डे प्रथमप्रपाठके प्रथमाद्येकादशान्ता अनुवाकाः॥ १–११॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ॥
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥ १ ॥

इति श्रीमद्विद्यातीर्थमहेश्वरापरावतारस्य श्रीमद्राजाधिराजपरमेश्वरस्य श्रीवीरबुक्कमहाराजस्याऽऽज्ञापरिपालकेन माधवाचार्येण विरचिते वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये पञ्चमकाण्डे प्रथमः प्रपाठकः ॥ १ ॥

---

( अथ पञ्चमाष्टके द्वितीयः प्रपाठकः । )

---

( तत्र प्रथमोऽनुवाकः । )

---

हरिः ॐ ।

*विष्णुमुखा वै देवाश्छन्दोभिरिमाँल्लोकाननपजय्यमभ्यजयन्यद्विष्णुक्रमान्क्रमते विष्णुरेव भूत्वा यजमानश्छन्दोभिरिमाँल्लोकाननपजय्यमभि जयति विष्णोः क्रमोऽस्यभिमातिहेत्याह गायत्री वै पृथिवी त्रैष्टुभमन्तरिक्षं जागती द्यौरानुष्टुभीर्दिशश्छन्दोभिरेवेमाँल्लोकान्यथापूर्वमभि जयति प्रजापतिरग्निमसृजत सोऽस्मात्सृष्टः ( १ ) पराङैत्तमेतयाऽन्वैदक्रन्ददिति तया वै सोऽग्नेः प्रियं धामावारुन्ध यदेतामन्वाहाग्नेरेवैतया प्रियं धामाव रुन्ध ईश्वरो वा एष पराङ्प्रदघो यो विष्णुक्रमान्क्रमते चत-

---

* एतदाद्यनुवाकदशकं चतुर्थकाण्डगद्वितीयप्रपाठकतृतीयप्रपाठकस्थानुवाकत्रयव्याख्यानेन सह व्याख्यातत्वादत्र पुनर्न व्याख्यातं भाष्यकृता । अतस्तद्व्याख्यानं तत्रैव द्रष्टव्यम् । एतदनुवाकदशकविषयाणां संक्षेपेण प्रदर्शनमेकादशानुवाकभाष्यारम्भे भाष्यकृतैव कृतमस्ति तदग्रे तत्र द्रष्टव्यम् ।

( आसन्द्यां वहिस्थापनं वात्सप्रेणोपस्थानं च )

सृभिरा वर्तते चत्वारि छन्दांꣳसि छन्दांꣳसि
खलु वा अग्नेः प्रिया तनूः प्रियामेवास्य तनु-
वमभि ( २ ) पर्यावर्तते दक्षिणा पर्यावर्तते
स्वमेव वीर्यमनु पर्यावर्तते तस्माद्दक्षिणोऽर्ध
आत्मनो वीर्यावत्तरोऽथो आदित्यस्यैवाऽऽवृ-
तमनु पर्यावर्तते शुनःशेपमाजीगर्तिं वरुणोऽ-
गृह्णात्स एतां वारुणीमपश्यत्तया वै स आ-
त्मानं वरुणपाशादमुञ्चद्वरुणो वा एतं गृह्णाति
य उखां प्रतिमुञ्चत उदुत्तमं वरुण पाशमस्म-
दित्याहाऽऽत्मानमेवैतया ( ३ ) वरुणपाशा-
न्मुञ्चत्या त्वाऽहार्षमित्याहाऽऽ ह्येनꣳ हरति
ध्रुवस्तिष्ठाविचाचलिरित्याह प्रतिष्ठित्यै विश-
स्त्वा सर्वा वाञ्छन्त्वित्याह विशैवैनꣳ समर्ध-
यत्यस्मिन्राष्ट्रमधि श्रयेत्याह राष्ट्रमेवास्मिन्ध्रु-
वमकर्य कामयेत राष्ट्रꣳ स्यादिति तं मनसा
ध्यायेद्राष्ट्रमेव भवति ( ४ ) अग्रे बृहन्नुषसा-
मूर्ध्वो अस्थादित्याहाग्रमेवैनꣳ समानानां क-
रोति निर्जग्मिवान्तमस इत्याह तम एवास्मा-
दप हन्ति ज्योतिषाऽगादित्याह ज्योतिरेवा-
स्मिन्दधाति चतसृभिः सादयति चत्वारि छ-

न्दा॑ꣳसि॒ छन्दो॑भिरे॒वाति॑च्छन्दसो॒त्तमया॒ वर्ष्म॒ वा ए॒षा छन्द॑सां॒ यदति॑च्छन्दा॒ वर्ष्मै॒वैनꣳ॑ समा॒नानां॑ करोति॒ सद्व॑ती ( ५ ) भ॒व॒ति॒ स॒त्त्वमे॒वैनं॑ गमयति वात्स॒प्रेणोपं॑ तिष्ठत ए॒तेन॒ वै व॑त्स॒प्रीर्भा॑लन्द॒नो॑ऽग्नेः प्रि॒यं धामावा॑रुन्धा॒ग्नेरे॒वैतेन॑ प्रि॒यं धामाव॑ रुन्ध एकाद॒शं भ॑वत्येक॒धैव यज॑माने वी॒र्यं॑ दधाति॒ स्तोमे॑न॒ वै दे॒वा अ॒स्मिꣳल्लो॒क आ॑र्ध्नु॒वन्छन्दो॑भिर॒मुष्मि॒न्त्स्तोम॑स्यै॒व खलु॒ वा ए॒तद्रूपं॑ यद्वा॑त्स॒प्रं यद्वा॑त्स॒प्रेणो॑प॒तिष्ठ॑ते ( ६ ) इ॒ममे॒व तेनं॑ लो॒कम॒भि जय॑ति॒ यद्वि॑ष्णुक्र॒मान्क्रम॑ते॒ऽमुमे॒व तैर्लो॒कम॒भि जय॑ति पूर्वे॒द्युः प्र क्रा॑मत्युत्त॒रेद्युरुपं॑ तिष्ठते॒ तस्मा॒द्योगे॒ऽन्यासां॑ प्र॒जानां॒ मनः॒ क्षेमे॒ऽन्यासां॒ तस्मा॑द्यायाव॒रः क्षे॒म्यस्ये॑शे॒ तस्मा॑द्यायाव॒रः क्षे॒म्यम॒ध्यव॑स्यति मु॒ष्टी क॑रोति॒ वाचं॑ यच्छति य॒ज्ञस्य॒ धृत्यै॑ (७)॥

( सृष्टो॑ऽ१भ्यैत॒यां भवति॒ सद्व॑त्युप॒तिष्ठ॑ते॒ द्विच॑त्वारिꣳशच्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां पञ्चमाष्टके द्वितीयप्रपाठके प्रथमोऽनुवाकः ॥ १ ॥

---

(आसन्द्यां वह्निस्थापनं वात्सप्रेणोपस्थानं च)

( अथ पञ्चमाष्टके द्वितीयः प्रपाठकः । )

( तत्र प्रथमोऽनुवाकः । )

विष्णुमुखा इति विष्णु—मुखाः । वै । देवाः । छन्दोभिरिति छन्दः—भिः । इमान् । लोकान् । अनपजय्यमित्यनप—जय्यम् । अभीति । अजयन् । यत् । विष्णुक्रमानिति विष्णु—क्रमान् । क्रमते । विष्णुः । एव । भूत्वा । यजमानः । छन्दोभिरिति छन्दः—भिः । इमान् । लोकान् । अनपजय्यमित्यनप—जय्यम् । अभीति । जयति । विष्णोः । क्रमः । असि । अभिमातिहेत्यभिमाति—हा । इति । आह । गायत्री । वै । पृथिवी । त्रैष्टुभम् । अन्तरिक्षम् । जागती । द्यौः । आनुष्टुभीरित्यानु—स्तुभीः । दिशः । छन्दोभिरिति छन्दः—भिः । एव । इमान् । लोकान् । यथापूर्वमिति यथा—पूर्वम् । अभीति । जयति । प्रजापतिरिति प्रजा—पतिः । अग्निम् । असृजत । सः । अस्मात् । सृष्टः ( १ ) । पराङ् । ऐत् । तम् । एतया । अन्विति । ऐत् । अक्रन्दत् । इति । तया । वै । सः । अग्नेः । प्रियम् । धाम । अवेति । अरुन्ध । यत् । एताम् । अन्वाहेत्यनु—आह । अग्नेः । एव ।

एतया । प्रियम् । धाम । अवेति । रुन्धे । ईश्वरः । वै । एषः । पराङ् । प्रदघ इति प्र—दघः । यः । विष्णुक्रमानिति विष्णु—क्रमान् । क्रमते । चतसृभिरिति चतसृ—भिः । एति । वर्तते । चत्वारि । छन्दांꣳसि । छन्दांꣳसि । खलु । वै । अग्नेः । प्रिया । तनूः । प्रियाम् । एव । अस्य । तनुवम् । अभीति (२) । पर्यावर्तत इति परि—आवर्तते । दक्षिणा । पर्यावर्तत इति परि—आवर्तते । स्वम् । एव । वीर्यम् । अन्विति । पर्यावर्तत इति परि—आवर्तते । तस्मात् । दक्षिणः । अर्धः । आत्मनः । वीर्यावत्तर इति वीर्यावत्—तरः । अथो इति । आदित्यस्य । एव । आवृतमित्या—वृतम् । अन्विति । पर्यावर्तत इति परि—आवर्तते । शुनःशेपम् । आजीगर्तिम् । वरुणः । अगृह्णात् । सः । एताम् । वारुणीम् । अपश्यत् । तया । वै । सः । आत्मानम् । वरुणपाशादिति वरुण—पाशात् । अमुञ्चत् । वरुणः । वै । एतम् । गृह्णाति । यः । उखाम् । प्रतिमुञ्चत इति प्रति—मुञ्चते । उदिति । उत्तममित्युत्—तमम् । वरुण । पाशम् । अस्मत् । इति । आह । आत्मानम् । एव । एतया ( ३ ) । वरुणपाशादिति वरुण—पाशात् । मुञ्चति ।

( आसन्द्यां वहिस्थापनं वात्सप्रेणोपस्थानं च )

एति। त्वा। अहार्षम्। इति। आह। एति। हि। एनम्। हरंति। ध्रुवः। तिष्ठ। अविचाचलिरित्यवि—चाचलिः। इति। आह। प्रतिष्ठित्या इति प्रति—स्थित्यै। विशः। त्वा। सर्वाः। वाञ्छन्तु। इति। आह। विशा। एव। एनम्। समिति। अर्धयति। अस्मिन्। राष्ट्रम्। अधीति। श्रय। इति। आह। राष्ट्रम्। एव। अस्मिन्। ध्रुवम्। अकः। यम्। कामयेत। राष्ट्रम्। स्यात्। इति। तम्। मनसा। ध्यायेत्। राष्ट्रम्। एव। भवति (४)। अग्रे। बृहन्। उषसाम्। ऊर्ध्वः। अस्थात्। इति। आह। अग्रम्। एव। एनम्। समानानाम्। करोति। निर्जगिमवानिति निः—जगिमवान्। तमसः। इति। आह। तमः। एव। अस्मात्। अपेति। हन्ति। ज्योतिषा। एति। अगात्। इति। आह। ज्योतिः। एव। अस्मिन्। दधाति। चतसृभिरिति चतसृ—भिः। सादयति। चत्वारि। छन्दांसि। छन्दोभिरिति छन्दः—भिः। एव। अतिच्छन्दसेत्यति—छन्दसा। उत्तमयेत्युत्—तमया। वर्ष्म। वै। एषा। छन्दसाम्। यत्। अतिच्छन्दा इत्यति—छन्दाः। वर्ष्म। एव। एनम्। समाना-

नाम । करोति । सद्वतीति सत्—वती(५) । भवति । सत्त्वमिति सत्—त्वम् । एव । एनम् । गमयति । वात्सप्रेणेति वात्स—प्रेण । उपेति । तिष्ठते । एतेन । वै । वत्सप्रीरिति वत्स—प्रीः । भालन्दनः । अग्नेः । प्रियम् । धाम । अवेति । अरुन्ध । अग्नेः । एव । एतेन । प्रियम् । धाम । अवेति । रुन्धे । एकादशम् । भवति । एकधेत्येक—धा । एव । यजमाने । वीर्यम् । दधाति । स्तोमेन । वै । देवाः । अस्मिन् । लोके । आर्ध्नुवन् । छन्दोभिरिति छन्दः—भिः । अमुष्मिन् । स्तोमस्य । इव । खलु । वै । एतत् । रूपम् । यत् । वात्सप्रमिति वात्स—प्रम् । यत् । वात्सप्रेणेति वात्स—प्रेण । उपतिष्ठत इत्युप—तिष्ठते ( ६ ) । इमम् । एव । तेन । लोकम् । अभीति । जयति । यत् । विष्णुक्रमानिति विष्णु—क्रमान् । क्रमते । अमुम् । एव । तैः । लोकम् । अभीति । जयति । पूर्वेद्युः । प्रेति । क्रामति । उत्तरेद्युः । उपेति । तिष्ठते । तस्मात् । योगे । अन्यासाम् । प्रजानामिति प्र—जानाम् । मनः । क्षेमे । अन्यासाम् । तस्मात् । यायावरः । क्षेम्यस्य । ईशे । तस्मात् । यायावरः । क्षेम्यम् । अध्यवस्यती-

त्वंधि—अवस्यति । मुष्टी इति । करोति । वाचंम् । यच्छति । यज्ञस्य । धृत्यै ( ७ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे पञ्चमाष्टके द्वितीयप्रपाठके प्रथमोऽनुवाकः ॥ १ ॥

---

( अथ पञ्चमाष्टके द्वितीयप्रपाठके द्वितीयोऽनुवाकः । )

---

अन्नपतेऽन्नस्य नो देहीत्याहाग्निर्वा अन्नपतिः स एवास्मा अन्नं प्रयच्छत्यनमीवस्यं शुष्मिण इत्याहायक्ष्मस्येति वावैतदाह प्र प्रदातारं तारिष ऊर्जं नो धेहि द्विपदे चतुष्पद इत्याहाऽऽशिषमेवैतामा शास्त उदु त्वा विश्वे देवा इत्याह प्राणा वै विश्वे देवाः ( १ ) प्राणैरेवैनमुद्यच्छतेऽग्ने भरन्तु चित्तिभिरित्याह यस्मा एवैनं चित्तायोद्यच्छते तेनैवैनꣳ समर्धयति चतसृभिरा सादयति चत्वारि छन्दाꣳसि छन्दोभिरेवातिच्छन्दसोत्तमया वर्ष्म वा एषा छन्दसां यदतिच्छन्दा वर्ष्मैवैनꣳ समानानां करोति सद्वती भवति सत्त्वमेवैनं गमयति प्रेदग्ने ज्योतिष्मान् ( २ ) याहीत्याह ज्योतिरेवास्मिन्दधाति तनुवा वा एष हिनस्ति यꣳ हिनस्ति मा हिꣳसीस्तनुवा प्रजा इत्याह

प्रजाभ्यं एवैनं शमयति रक्षांसि वा एतद्य- ज्ञं सचन्ते यदनं उत्सर्जत्यक्रन्ददित्यन्वाह रक्षंसामपंहत्या अनंसा वहन्त्यपंचितिमेवास्मिं- न्दधाति तस्मांदनस्वी चं रथी चातिथीनाम- पंचिततमौ ( ३ ) अपंचितिमान्भवति य एवं वेद समिधाऽग्निं दुंवस्यतेतिं घृतानुषिक्तामवं- सिते समिधमा दंधाति यथाऽतिथय आगंताय सर्पिष्वंदातिथ्यं क्रियतें तादृगेव तद्गांयत्रिया ब्राह्मणस्यं गायत्रो हि ब्राह्मणस्त्रिष्टुभां राज- न्यंस्य त्रैष्टुंभो हि रांजन्योंऽप्सु भस्म प्र वेंश- यत्यप्सुयोंनिर्वा अग्निः स्वामेवैनं योनिं गम- यति तिसृभिः प्र वेंशयति त्रिवृद्वै (४) अग्नि- र्यावांनेवाग्निस्तं प्रतिष्ठां गंमयति परा वा एषोंऽग्निं वंपति योंऽप्सु भस्मं प्रवेश- यंति ज्योतिंष्मतीभ्यामवं दधाति ज्यो- तिरेवास्मिंन्दधाति द्वाभ्यां प्रतिंष्ठित्यै परा वा एष प्रजां पशून्वंपति योंऽप्सु भस्मं प्रवेश- यंति पुनंरूर्जा सह रय्येति पुनंरुदैतिं प्रजामेव पशूनात्मन्धंत्ते पुनंस्त्वाऽऽदित्याः ( ५ ) रुद्रा वसंवः समिंन्धतामित्यांहैता वा एतं देवता

(उख्याग्निनयनम्)

अग्ने समैन्धत तामिर्वैनं समिन्धे बोधा स बोधीत्युपं तिष्ठते बोधयंत्येवैनं तस्मात्सुप्त्वा प्रजाः प्र बुंध्यन्ते यथास्थानमुपं तिष्ठते तस्माद्यथास्थानं पशवः पुनरेत्योपं तिष्ठन्ते (६)॥

(वै विश्वे देवा ज्योतिष्मानपंचिततमौ त्रिवृद्धा आंदित्या द्विचंत्वारिंशच्च।)

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां पञ्चमाष्टके द्वितीयप्रपाठके द्वितीयोऽनुवाकः ॥ २ ॥

---

(अथ पञ्चमाष्टके द्वितीयप्रपाठके द्वितीयोऽनुवाकः।)

---

अन्नंपत इत्यन्नं—पते। अन्नंस्य। नः। देहि। इतिं। आह। अग्निः। वै। अन्नंपतिरित्यन्नं—पतिः। सः। एव। अस्मै। अन्नंम्। प्रेति। यच्छति। अनमीवस्यं। शुष्मिणंः। इतिं। आह। अयक्ष्मस्यं। इतिं। वाव। एतत्। आह। प्रेतिं। प्रदातारमितिं प्र—दातारंम्। तारिषः। ऊर्जंम्। नः। धेहि। द्विपद इतिं द्वि—पदें। चतुंष्पद इति चतुंः—पदे। इतिं। आह। आशिषमित्यां—शिषंम्। एव। एताम्। एतिं। शास्ते। उदितिं। उ। त्वा। विश्वें। देवाः। इतिं। आह। प्राणा इतिं प्र—अनाः। वै। विश्वें। देवाः (१)। प्राणैरितिं प्र—अनैः। एव। एनम्। उदितिं। यच्छते। अग्नें। भरंन्तु। चित्तिं-

भिरिति चित्ति—भिः । इति । आह । यस्मै । एव । एनम् । चित्ताय । उद्यच्छत इत्युत्—यच्छते । तेन । एव । एनम् । समिति । अर्धयति । चतसृभिरिति चतसृ—भिः । एति । सादयति । चत्वारि । छन्दांसि । छन्दोभिरिति छन्दः—भिः । एव । अति-च्छन्दसेत्यति—छन्दसा । उत्तमयेत्युत्—तमया । वर्ष्म । वै । एषा । छन्दसाम् । यत् । अतिच्छन्दा इत्यति—छन्दाः । वर्ष्म । एव । एनम् । समाना-नाम् । करोति । सद्वतीति सत्—वती । भवति । सत्त्वमिति सत्—त्वम् । एव । एनम् । गमयति । प्रेति । इत् । अग्ने । ज्योतिष्मान् ( २ ) । याहि । इति । आह । ज्योतिः । एव । अस्मिन् । दधाति । तनुवा । वै । एषः । हिनस्ति । यम् । हिनस्ति । मा । हिंसीः । तनुवा । प्रजा इति प्र—जाः । इति । आह । प्रजाभ्य इति प्र—जाभ्यः । एव । एनम् । शमयति । रक्षांसि । वै । एतत् । यज्ञम् । सचन्ते । यत् । अनः । उत्सर्जतीत्युत्—सर्जति । अक्रन्दत् । इति । अन्विति । आह । रक्षसाम् । अपहत्या इत्यप-प—हत्यै । अनसा । वहन्ति । अपचितिमित्यप—चितिम् । एव । अस्मिन् । दधाति । तस्मात् ।

अनस्वी । च । रथी । च । अतिथीनाम् । अपंचितमावित्यपंचित—तमौ ( ३ ) । अपंचितिमानित्यपंचिति—मान् । भवति । यः । एवम् । वेद । समिधेति सम्—इधा । अग्निम् । दुवस्यत । इति । घृतानुषिक्तामिति घृत—अनुषिक्ताम् । अवसित इत्यव—सिते । समिधमिति सम्—इधम् । एति । दधाति । यथा । अतिथये । आगतायेत्या—गताय । सर्पिष्वत् । आतिथ्यम् । क्रियते । तादृक् । एव । तत् । गायत्रिया । ब्राह्मणस्य । गायत्रः । हि । ब्राह्मणः । त्रिष्टुभा । राजन्यस्य । त्रैष्टुभः । हि । राजन्यः । अप्स्वित्यप्—सु । भस्म । प्रेति । वेशयति । अप्सुयोनिरित्यप्सु—योनिः । वै । अग्निः । स्वाम् । एव । एनम् । योनिम् । गमयति । तिसृभिरिति तिसृ—भिः । प्रेति । वेशयति । त्रिवृदिति त्रि—वृत् । वै ( ४ ) । अग्निः । यावान् । एव । अग्निः । तम् । प्रतिष्ठामिति प्रति—स्थाम् । गमयति । परेति । वै । एषः । अग्निम् । वपति । यः । अप्स्वित्यप्—सु । भस्म । प्रवेशयतीति प्र—वेशयति । ज्योतिष्मतीभ्याम् । अवेति । दधाति । ज्योतिः । एव । अस्मिन् । दधाति । द्वाभ्याम् । प्रति-

ष्ठित्या इति प्रति—स्थित्यै । परेति । वै । एषः । प्रजामिति प्र—जाम् । पशून् । वपति । यः । अप्स्वित्यप्—सु । भस्म । प्रवेशयतीति प्र—वेशयति । पुनः । ऊर्जा । सह । रय्या । इति । पुनः । उदैतीत्युत्—ऐति । प्रजामिति प्र—जाम् । एव । पशून् । आत्मन् । धत्ते । पुनः । त्वा । आदित्याः ( ५ ) । रुद्राः । वसवः । समिति । इन्धताम् । इति । आह । एताः । वै । एतम् । देवताः । अग्रे । समिति । ऐन्धत । ताभिः । एव । एनम् । समिति । इन्धे । बोध । सः । बोधि । इति । उपेति । तिष्ठते । बोधयति । एव । एनम् । तस्मात् । सुप्त्वा । प्रजा इति प्र—जाः । प्रति । बुध्यन्ते । यथास्थानमिति यथा—स्थानम् । उपेति । तिष्ठते । तस्मात् । यथास्थानमिति यथा—स्थानम् । पशवः । पुनः । एत्येत्या—इत्य । उपेति । तिष्ठन्ते ( ६ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे पञ्चमाष्टके द्वितीयप्रपाठके द्वितीयोऽनुवाकः ॥ २ ॥

---

( अथ पञ्चमाष्टके द्वितीयप्रपाठके तृतीयोऽनुवाकः । )

---

यावती वै पृथिवी तस्यै यम आधिपत्यं

परीयाय यो वै यमं देवयजनमस्या अनिर्याच्याग्निं चिनुते यमायैनं स चिनुतेऽपेतेत्यध्यवसाययति यममेव देवयजनमस्यै निर्याच्यात्मनेऽग्निं चिनुत इष्वग्रेण वा अस्या अनामृतमिच्छन्तो नाविन्दन्ते देवा एतद्यजुरपश्यन्नपेतेति यदेतेनाध्यवसाययंति ( १ ) अनामृत एवाग्निं चिनुत उद्धन्ति यदेवास्या अमेध्यं तदप हन्त्यपोऽवोक्षति शान्त्यै सिकता नि वपत्येतद्वा अग्नेर्वैश्वानरस्यं रूपं रूपेणैव वैश्वानरमवं रुन्ध ऊषान्नि वपति पुष्टिर्वा एषा प्रजननं यदूषाः पुष्ट्यामेव प्रजननेऽग्निं चिनुतेऽथो संज्ञान एव संज्ञानं ह्येतत् ( २ ) पशूनां यदूषा द्यावापृथिवी सहाऽऽस्तां ते वियती अब्रूतामस्त्वेव नौ सह यज्ञियमिति यदमुष्यां यज्ञियमासीत्तदस्यामदधात्त ऊषा अभवन्यदस्या यज्ञियमासीत्तदमुष्यामदधात्तददश्चन्द्रमसि कृष्णमूषान्निवपन्नदो ध्यायेद्द्यावापृथिव्योरेव यज्ञियेऽग्निं चिनुतेऽयं सो अग्निरिति विश्वामित्रस्य ( ३ ) सूक्तं भवत्येतेन वै विश्वामित्रोऽग्नेः प्रियं धामावारुन्धाग्ने·

रेवैतेनं प्रियं धामाव रुन्धे छन्दोभिर्वै देवाः सुवर्गं लोकमायन्चतस्रः प्राचीरुपं दधाति चत्वारि छन्दांसि छन्दोभिरेव तद्यजमानः सुवर्गं लोकमेति तेषां सुवर्गं लोकं यतां दिशः समंव्लीयन्त ते द्वे पुरस्तात्समीची उपादधत द्वे ( ४ ) पश्चात्समीची ताभिर्वै ते दिशोऽदृंहन्यद्द्वे पुरस्तात्समीची उपदधाति द्वे पश्चात्समीची दिशां विधृत्या अथो पशवो वै छन्दांसि पशूनेवास्मै समीचो दधात्यष्टावुपं दधात्यष्टाक्षरा गायत्री गायत्रोऽग्निर्यावानेवाग्निस्तं चिनुतेऽष्टावुपं दधात्यष्टाक्षरा गायत्री गायत्री सुवर्गं लोकमञ्जसा वेद सुवर्गस्यं लोकस्यं ( ५ ) प्रज्ञात्यै त्रयोदश लोकंपृणा उपं दधात्येकविंशतिः सं पद्यन्ते प्रतिष्ठा वा एकविंशः प्रतिष्ठा गार्हपत्य एकविंशस्यैव प्रतिष्ठां गार्हपत्यमनु प्रति तिष्ठति प्रत्यग्निं चिक्यानस्तिष्ठति य एवं वेद पञ्चचितीकं चिन्वीत प्रथमं चिन्वानः पाङ्क्तो यज्ञः पाङ्क्ताः पशवो यज्ञमेव पशूनव रुन्धे त्रिचितीकं चिन्वीत द्वितीयं चिन्वानस्त्रयं इमे लोका

एष्वेव लोकेषु ( ६ ) प्रति तिष्ठत्येकचि-
तीकं चिन्वीत तृतीयं चिन्वान एकधा वै
सुवर्गो लोक एकत्रैव सुवर्गे लोकमेति पुरी-
षेणाभ्यूहति तस्मान्मा॑ꣳसेनास्थि छन्नं न
दुश्चर्मा भवति य एवं वेद पञ्च चितयो भवन्ति
पञ्चभिः पुरीषैरभ्यूहति दश संपद्यन्ते दशा-
क्षरा विराडन्नं विराड्विराज्येवान्नाद्ये प्रति
तिष्ठति ( ७ ) ॥

( अध्यवसाययति ह्येतद्विश्वामित्रस्यादधत द्वे लोकस्थं लोकेषु सप्तचत्वारिꣳशच्च। )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां पञ्चमाष्टके द्वितीयप्रपाठके तृतीयोऽनुवाकः ॥ ३ ॥

---

( अथ पञ्चमाष्टके द्वितीयप्रपाठके तृतीयोऽनुवाकः । )

---

यावती । वै । पृथिवी । तस्यै । यमः । आधि-
पत्यमित्याधि—पत्यम् । परीति । इयाय । यः । वै ।
यमम् । देवयजनमिति देव—यजनम् । अस्याः ।
अनिर्याच्येत्यनिः—याच्य । अग्निम् । चिनुते । यमा-
य । एनम् । सः । चिनुते । अपेति । इत । इति ।
अध्यवसाययतीत्यधि—अवसाययति । यमम् । एव ।
देवयजनमिति देव—यजनम् । अस्यै । निर्याच्येति
निः—याच्य । आत्मने । अग्निम् । चिनुते । इष्व-

ग्रेणेतीषु—अग्रेणं । वै । अस्याः । अनांमृतमित्यनां—मृतम् । इच्छन्तः । न । अविन्दन् । ते । देवाः । एतत् । यजुः । अपश्यन् । अपेति । इत । इति । यत् । एतेन । अध्यवसाययतीत्यंधि—अवसाययंति ( १ ) । अनांमृत इत्यनां—मृते । एव । अग्निम् । चिनुते । उदिति । हन्ति । यत् । एव । अस्याः । अमेध्यम् । तत् । अपेति । हन्ति । अपः । अवेति । उक्षति । शान्त्यै । सिकंताः । नीति । वपति । एतत् । वै । अग्नेः । वैश्वानरस्य । रूपम् । रूपेण । एव । वैश्वानरम् । अवेति । रुन्धे । ऊषान् । नीति । वपति । पुष्टिः । वै । एषा । प्रजननमिति प्र—जननम् । यत् । ऊषाः । पुष्ट्याम् । एव । प्रजनन इति प्र—जनने । अग्निम् । चिनुते । अथो इति । संज्ञान इति सं—ज्ञाने । एव । संज्ञानमिति सं—ज्ञानम् । हि । एतत् ( २ ) । पशूनाम् । यत् । ऊषाः । द्यावापृथिवी इति द्यावा—पृथिवी । सह । आस्ताम् । ते इति । वियती इति वि—यती । अब्रूताम् । अस्तु । एव । नौ । सह । यज्ञियम् । इति । यत् । अमुष्याः । यज्ञियम् । आसीत् । तत् । अस्याम् । अदधात् । ते । ऊषाः । अभवन् । यत् । अस्याः । य-

ज्ञियम् । आसीत् । तत् । अमुष्याम् । अदधात् । तत् । अदः । चन्द्रमसि । कृष्णम् । ऊषान् । निवपन्निति नि—वपन् । अदः । ध्यायेत् । द्यावापृथिव्योरिति द्यावा—पृथिव्योः । एव । यज्ञियं । अग्निम् । चिनुते । अयम् । सः । अग्निः । इति । विश्वामित्रस्येति विश्व—मित्रस्य ( ३ ) । सूक्तमिति सु—उक्तम् । भवति । एतेन । वै । विश्वामित्र इति विश्व—मित्रः । अग्नेः । प्रियम् । धाम । अवेति । अरुन्ध । अग्नेः । एव । एतेन । प्रियम् । धाम । अवेति । रुन्धे । छन्दोभिरिति छन्दः—भिः । वै । देवाः । सुवर्गमिति सुवः—गम् । लोकम् । आयन् । चतस्रः । प्राचीः । उपेति । दधाति । चत्वारि । छन्दांसि । छन्दोभिरिति छन्दः—भिः । एव । तत् । यजमानः । सुवर्गमिति सुवः—गम् । लोकम् । एति । तेषाम् । सुवर्गमिति सुवः—गम् । लोकम् । यताम् । दिशः । समिति । अवलीयन्त । ते । द्वे इति । पुरस्तात् । समीची इति । उपेति । अदधत । द्वे इति ( ४ ) । पश्चात् । समीची इति । ताभिः । वै । ते । दिशः । अदृंहन् । यत् । द्वे इति । पुरस्तात् । समीची

इति । उपदधातीत्युप—दधाति । द्वे इति । पश्चात् । समीची इति । दिशाम् । विधृत्या इति वि—धृत्यै । अथो इति । पशवः । वै । छन्दांसि । पशून् । एव । अस्मै । समीचः । दधाति । अष्टौ । उपेति । दधाति । अष्टाक्षरेत्यष्टा—अक्षरा । गायत्री । गायत्रः । अग्निः । यावान् । एव । अग्निः । तम् । चिनुते । अष्टौ । उपेति । दधाति । अष्टाक्षरेत्यष्टा—अक्षरा । गायत्री । गायत्री । सुवर्गमिति सुवः—गम् । लोकम् । अञ्जसा । वेद । सुवर्गस्येति सुवः—गस्य । लोकस्य । (५) । प्रज्ञात्या इति प्र—ज्ञात्यै । त्रयोदशेति त्रयः—दश । लोकंपृणा इति लोकं—पृणाः । उपेति । दधाति । एकविंशतिरित्येक—विंशतिः । समिति । पद्यन्ते । प्रतिष्ठेति प्रति—स्था । वै । एकविंश इत्येक—विंशः । प्रतिष्ठेति प्रति—स्था । गार्हपत्य इति गार्ह—पत्यः । एकविंशस्येत्येक—विंशस्य । एव । प्रतिष्ठामिति प्रति—स्थाम् । गार्हपत्यमिति गार्ह—पत्यम् । अनु । प्रतीति । तिष्ठति । प्रतीति । अग्निम् । चिक्यानः । तिष्ठति । यः । एवम् । वेद । पञ्चचितीकमिति पञ्च—चितीकम् । चिन्वीत । प्रथमम् । चिन्वानः । पाङ्क्तः । यज्ञः । पाङ्क्ताः । पशवः ।

यज्ञम्। एव। पशून्। अवेति। रुन्धे। त्रिचितीकमिति त्रि—चितीकम्। चिन्वीत। द्वितीयम्। चिन्वानः। त्रयः। इमे। लोकाः। एषु। एव। लोकेषु (६)। प्रतीति। तिष्ठति। एकचितीकमित्येक—चितीकम्। चिन्वीत। तृतीयम्। चिन्वानः। एकधेत्येक—धा। वै। सुवर्ग इति सुवः—गः। लोकः। एकवृतेत्येक—वृता। एव। सुवर्गमिति सुवः—गम्। लोकम्। एति। पुरीषेण। अभीति। ऊहति। तस्मात्। मांसेन। अस्थि। छन्नम्। न। दुश्चर्मेति दुः—चर्मा। भवति। यः। एवम्। वेद। पञ्च। चितयः। भवन्ति। पञ्चभिरिति पञ्च—भिः। पुरीषैः। अभीति। ऊहति। दश। समिति। पद्यन्ते। दशाक्षरेति दश—अक्षरा। विराडिति वि—राट्। अन्नम्। विराडिति वि—राट्। विराजीति वि—राजि। एव। अन्नाद्य इत्यन्न—अद्ये। प्रतीति। तिष्ठति (७)॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे पञ्चमाष्टके द्वितीयप्रपाठके तृतीयोऽनुवाकः ॥ ३ ॥

---

(अथ पञ्चमाष्टके द्वितीयप्रपाठके चतुर्थोऽनुवाकः।)

---

वि वा एतौ द्विषाते यश्च पुराऽग्निर्यश्चो-

स्वायाᳬ समितमिति चतसृभिः सं नि वंपाते चत्वारि छन्दांᳬसि छन्दांᳬसि खलु वा अग्नेः प्रिया तनूः प्रिययैवैनां तनुवा सᳬ शांस्ति समितमित्यांह तस्माद्ब्रह्मंणा क्षत्त्रᳬ समेंति य- त्संन्युप्यं विहरंति तस्माद्ब्रह्मंणा क्षत्त्रं व्येंत्यृ- तुभिः ( १ ) वा एतं दींक्षयन्ति स ऋतुभिंरेव विमुच्यों मातेवं पुत्रं पृथिवी पुंरीष्यंमित्यांह- र्तुभिंरेवैनं दीक्षयित्वर्तुभिर्वि मुञ्चति वैश्वानर्या शिक्यंमा दंत्ते स्वदयंत्येवैनंन्नैर्ऋतीः कृष्णास्ति- स्रस्तुषंपक्का भवन्ति निर्ऋंत्यै वा एतद्भागधेयं यत्तुषा निर्ऋंत्यै रूपं कृष्णᳬ रूपेणैव निर्ऋं- तिं निरवंदयत इमां दिशं यन्त्येषा ( २ ) वै निर्ऋंत्यै दिक्स्वायांमेव दिशि निर्ऋंतिं निर- वंदयते स्वकृंत इरिंणे उपं दधाति प्रदरे वैतद्वै निर्ऋंत्या आयतंनᳬ स्व एवाऽऽयतंने निर्ऋंतिं निरवंदयते शिक्यंमभ्युपं दधाति नैर्ऋतो वै पाशः साक्षादेवैनं निर्ऋतिपाशान्मुंञ्चति तिस्र उपं दधाति त्रेधाविहितो वै पुरुंषो यावांनेव पुरुंषस्तस्मान्निर्ऋंतिमवं यजते परांचीरुपं ( ३ ) दधाति परांचीमेवास्मान्निर्ऋंतिं प्र णुंदतेऽप्रंती-

क्षमा यन्ति निर्ऋत्या अन्तर्हित्यै मार्जयित्वोप तिष्ठन्ते मेध्यत्वाय गार्हपत्यमुप तिष्ठन्ते निर्ऋतिलोक एव चरित्वा पूता देवलोकमुपावर्तन्त एकयोप तिष्ठन्त एकधैव यजमाने वीर्यं दधाति निवेशनः संगमनो वसूनामित्याह प्रजा वै पशवो वसु प्रजयैवैनं पशुभिः समर्धयन्ति ( ४ ) ॥

( ऋतुभिरेषा पराचीरुपाष्टाचत्वारिंशच्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां पञ्चमाष्टके द्वितीयप्रपाठके चतुर्थोऽनुवाकः ॥ ४ ॥

---

( अथ पञ्चमाष्टके द्वितीयप्रपाठके चतुर्थोऽनुवाकः । )

---

वीति । वै । एतौ । द्विषाते इति । यः । च । पुरा । अग्निः । यः । च । उखायाम् । समिति । इतम् । इति । चतसृभिरिति चतसृ—भिः । सम् । नीति । वपति । चत्वारि । छन्दांसि । छन्दांसि । खलु । वै । अग्नेः । प्रिया । तनूः । प्रियया । एव । एनौ । तनुवा । समिति । शास्ति । समिति । इतम् । इति । आह । तस्मात् । ब्रह्मणा । क्षत्रम् । समिति । एति । यत् । संन्युप्येति सं—न्युप्य । विहरतीति वि—हरति । तस्मात् । ब्रह्मणा । क्षत्रम् ।

वीतिं । एति । ऋतुभिरित्यृतु—भिः ( १ )। वै । एतम् । दीक्षयन्ति । सः । ऋतुभिरित्यृतु—भिः । एव । विमुच्य इतिं वि—मुच्यं । माता । इव । पुत्रम् । पृथिवी । पुरीष्यम् । इति । आह । ऋतुभि-रित्यृतु—भिः । एव । एनम् । दीक्षयित्वा । ऋतुभि-रित्यृतु—भिः । वीतिं । मुञ्चति । वैश्वानर्या । शि-क्यम् । एति । दत्ते । स्वदयति । एव । एनत् । नैर्ऋतीरिति नैः—ऋतीः । कृष्णाः । तिस्रः । तुष-पक्का इति तुष—पक्काः । भवन्ति । निर्ऋत्या इति निः—ऋत्यै । वै । एतत् । भागधेयमितिं भाग—धेयम् । यत् । तुषाः । निर्ऋत्या इति निः—ऋत्यै । रूपम् । कृष्णम् । रूपेण । एव । निर्ऋतिमिति निः—ऋतिम् । निरवदयत इतिं निः—अवदयते । इमाम् । दिशम् । यन्ति । एषा ( २ )। वै । नि-र्ऋत्या इति निः—ऋत्यै । दिक् । स्वायाम् । एव । दिशि । निर्ऋतिमिति निः—ऋतिम् । निरवदयत इतिं निः—अवदयते । स्वकृत इति स्व—कृते । इरिणे । उपेति । दधाति । प्रदर इतिं प्र—दरे । वा । एतत् । वै । निर्ऋत्या इति निः—ऋत्याः । आयत-नमित्या—यतनम् । स्वे । एव । आयतन इत्या—

यतंने। निर्ऋंतिमिति निः—ऋतिम्। निरवंदयत इतिं निः—अवंदयते। शिक्यंम्। अभि। उपेतिं। दधाति। नैर्ऋत इतिं नैः—ऋतः। वै। पाशंः। साक्षादितिं स—अक्षात्। एव। एनम्। निर्ऋतिपाशादितिं निर्ऋति—पाशात्। मुञ्चति। तिस्रः। उपेतिं। दधाति। त्रेधाविहित इतिं त्रेधा—विहितः। वै। पुरुषः। यावान्। एव। पुरुषः। तस्मात्। निर्ऋंतिमिति निः—ऋतिम्। अवेतिं। यजते। परांचीः। उपेतिं (३)। दधाति। परांचीम्। एव। अस्मात्। निर्ऋंतिमिति निः—ऋतिम्। प्रेतिं। नुदते। अप्रंतीक्षमित्यप्रंति—ईक्षम्। एतिं। यन्ति। निर्ऋंत्या इति निः—ऋत्याः। अन्तर्हित्या इत्यन्तः—हित्यै। मार्जयित्वा। उपेतिं। तिष्ठन्ते। मेध्यत्वायेतिं मेध्य—त्वायं। गार्हंपत्यमिति गार्हं—पत्यम्। उपेतिं। तिष्ठन्ते। निर्ऋतिलोक इतिं निर्ऋति—लोके। एव। चरित्वा। पूताः। देवलोकमितिं देव—लोकम्। उपावंर्तन्त इत्युंप—आवंर्तन्ते। एकंया। उपेतिं। तिष्ठन्ते। एकधेत्येंक—धा। एव। यजंमाने। वीर्यंम्। दधाति। निवेशंन इतिं नि—वेशंनः। संगमंन इतिं सं—गमंनः। वसूंनाम्। इतिं। आह। प्रजेतिं

प्र—जा । वै । पशवः । वसु । प्रजयेति प्र—जया । एव । एनम् । पशुभिरिति पशु—भिः । समिति । अर्धयन्ति ( ४ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे पञ्चमाष्टके द्वितीयप्रपाठके चतुर्थोऽनुवाकः ॥ ४ ॥

---

( अथ पञ्चमाष्टके द्वितीयप्रपाठके पञ्चमोऽनुवाकः । )

---

पुरुषमात्रेण वि मिमीते यज्ञेन वै पुरुषः संमितो यज्ञपरुषैवैनं वि मिमीते यावान्पुरुष ऊर्ध्वबाहुस्तावान्भवत्येतावद्वै पुरुषे वीर्यं वीर्येणैवैनं वि मिमीते पक्षी भवति न ह्यपक्षः पतितुमर्हत्यरत्निना पक्षौ द्राघीयाꣳसौ भवतस्तस्मात्पक्षप्रवयाꣳसि वयाꣳसि व्याममात्रौ पक्षौ च पुच्छं च भवत्येतावद्वै पुरुषे वीर्यम् ( १ ) वीर्यसंमितो वेणुना वि मिमीत आग्नेयो वै वेणुः सयोनित्वाय यजुषा युनक्ति यजुषा कृषति व्यावृत्त्यै षड्गवेनं कृषति षड्वा ऋतवं ऋतुभिरेवैनं कृषति यद्द्वादशगवेनं संवत्सरेणैवेयं वा अग्नेरतिदाहादबिभेत्सैतद्द्विगुणमपश्यत्कृष्टं चाकृष्टं च ततो वा इमां नात्यदहद्यत्कृष्टं चाकृष्टं च ( २ ) भवत्यस्या अन-

तिदाहाय द्विगुणं त्वा अग्निमुद्यन्तुमर्हतीत्याहु-
र्यत्कृष्टं चाकृष्टं च भवत्यग्नेरुद्यत्या एतावन्तो
वै पशवो द्विपादश्च चतुष्पादश्च तान्यत्प्राचं
उत्सृजेद्रुद्रायापिं दध्याद्यद्दक्षिणा पितृभ्यो नि
धुवेद्यत्प्रतीचो रक्षांसि हन्युरुदीच उत्सृजत्येषा
वै देवमनुष्याणांं शान्ता दिक् ( ३ ) तामेवै-
नाननूत्सृजत्यथो खल्विमां दिशमुत्सृजत्यसौ
वा आदित्यः प्राणः प्राणमेवैनाननूत्सृजति
दक्षिणा पर्यावर्तन्ते स्वमेव वीर्यमनु पर्यावर्तन्ते
तस्माद्दक्षिणोऽर्धं आत्मनो वीर्यावत्तरोऽथो
आदित्यस्यैवाऽऽवृतमनु पर्यावर्तन्ते तस्मात्प-
राञ्चः पशवो वि तिष्ठन्ते प्रत्यञ्च आ वर्तन्ते
तिस्रस्तिस्रः सीताः ( ४ ) कृषति त्रिवृतमेव
यज्ञमुखे वि यातयत्योषधीर्वपति ब्रह्मणाऽन्नमव-
रुन्धेऽर्केऽर्कश्चीयते चतुर्दशभिर्वपति सप्त ग्राम्या
ओषधयः सप्ताऽऽरण्या उभयीषामवरुद्ध्या
अन्नस्यान्नस्य वपत्यन्नस्यान्नस्यावरुद्ध्यै कृष्टे
वपति कृष्टे ह्योषधयः प्रतितिष्ठन्त्यनुसीतं वपति
प्रजात्यै द्वादशसु सीतासु वपति द्वादश मासाः
संवत्सरः संवत्सरेणैवास्मा अन्नं पचति यदग्नि-

चिव् ( ५ ) अनंवरुद्धस्याश्ञीयादवंरुद्धेन व्यृंध्येत ये वनस्पतीनां फलग्रहंयस्तानिध्मेऽपि प्रोक्षेदनंवरुद्धस्यावंरुद्ध्यै दिग्भ्यो लोष्टान्त्सम॑स्यति दिशामेव वीर्यंमवरुध्यं दिशां वीर्येऽग्निं चिंनुते यं द्विष्याद्यत्र स स्यात्तस्यै दिशो लोष्टमा हरेदिषमूर्जमहमित आ दंद इतीषंमेवोर्जं तस्यै दिशोऽवंरुन्धे क्षोधुको भवति यस्तस्यां दिशि भवंत्युत्तरवेदिमुपं वपत्युत्तरवेद्याꣳ ह्यग्निश्चीयतेऽथों पशवो वा उंत्तरवेदिः पशूनेवावं रुन्धेऽथों यज्ञपरुषोऽनंन्तरित्यै ( ६ ) ॥

( च भवत्येतावद्वै पुरुंषे वीर्यं यत्कृष्टं चाकृष्टं च दिक्ष्वतीतां अग्निचिदव पञ्चविꣳशतिश्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां पञ्चमाष्टके द्वितीयप्रपाठके पञ्चमोऽनुवाकः ॥ ५ ॥

---

( अथ पञ्चमाष्टके द्वितीयप्रपाठके पञ्चमोऽनुवाकः । )

---

पुरुषमात्रेणेतिं पुरुष—मात्रेणं । वीतिं । मिमीते । यज्ञेनं । वै । पुरुंषः । संमिंत इति सं—मितः । यज्ञपरुषेतिं यज्ञ—परुषां । एव । एनम् । वीतिं । मिमीते । यावांन् । पुरुंषः । ऊर्ध्वबांहुरित्यूर्ध्व—बाहुः । तावांन् । भवति । एतावंत् । वै । पुरुंषे ।

वीर्यम्। वीर्येण। एव। एनम्। वीति। मिमीते। पक्षी। भवति। न। हि। अपक्षः। पतितुम्। अर्हति। अरत्निना। पक्षौ। द्राघीयाꣳसौ। भवतः। तस्मात्। पक्षप्रवयाꣳसीति पक्ष—प्रवयाꣳसि। वयाꣳसि। व्याममात्राविति व्याम—मात्रौ। पक्षौ। च। पुच्छम्। च। भवति। एतावत्। वै। पुरुषे। वीर्यम् ( १ )। वीर्यसंमित इति वीर्य—संमितः। वेणुना। वीति। मिमीते। आग्नेयः। वै। वेणुः। सयोनित्वायेति सयोनि—त्वाय। यजुषा। युनक्ति। यजुषा। कृषति। व्यावृत्त्या इति वि—आवृत्त्यै। षड्गवेनेति षट्—गवेन। कृषति। षट्। वै। ऋतवः। ऋतुभिरित्यृतु—भिः। एव। एनम्। कृषति। यत्। द्वादशगवेनेति द्वादश—गवेन। संवत्सरेणेति सं—वत्सरेण। एव। इयम्। वै। अग्नेः। अतिदाहादित्यति—दाहात्। अबिभेत्। सा। एतत्। द्विगुणमिति द्वि—गुणम्। अपश्यत्। कृष्टम्। च। अकृष्टम्। च। ततः। वै। इमाम्। न। अतीति। अदहत्। यत्। कृष्टम्। च। अकृष्टम्। च ( २ )। भवति। अस्याः। अनतिदाहायेत्यनति—दाहाय। द्विगुणमिति द्वि—गुणम्। तु। वै। अग्निम्। उद्यन्तुमि-

त्युत्—यन्तुम् । अर्हति । इति । आहुः । यत् । कृष्टम् । च । अकृष्टम् । च । भवति । अग्नेः । उद्यत्या इत्युत्—यत्यै । एतावन्तः । वै । पशवः । द्विपाद इति द्वि—पादः । च । चतुष्पाद इति चतुः—पादः । च । तान् । यत् । प्राचः । उत्सृजेदित्युत्—सृजेत् । रुद्राय । अपीति । दध्यात् । यत् । दक्षिणा । पितृभ्य इति पितृ—भ्यः । नीति । ध्रुवेत् । यत् । प्रतीचः । रक्षांसि । हन्युः । उदीचः । उदिति । सृजति । एषा । वै । देवमनुष्याणामिति देव—मनुष्याणाम् । शान्ता । दिक् ( ३ ) । ताम् । एव । एनान् । अनु । उदिति । सृजति । अथो इति । खलु । इमाम् । दिशम् । उदिति । सृजति । असौ । वै । आदित्यः । प्राण इति प्र—अनः । प्राणमिति प्र—अनम् । एव । एनान् । अनु । उदिति । सृजति । दक्षिणा । पर्याव-र्तन्त इति परि—आवर्तन्ते । स्वम् । एव । वीर्यम् । अन्विति । पर्यावर्तन्त इति परि—आवर्तन्ते । तस्मा-त् । दक्षिणः । अर्धः । आत्मनः । वीर्यावत्तर इति वीर्यावत्—तरः । अथो इति । आदित्यस्य । एव । आवृतमित्या—वृतम् । अन्विति । पर्यावर्तन्त इति परि—आवर्तन्ते । तस्मात् । पराञ्चः । पशवः ।

वीति । तिष्ठन्ते । प्रत्यञ्चः । एति । वर्तन्ते । तिस्र-स्तिस्र इति तिस्रः—तिस्रः । सीताः ( ४ ) । कृषति । त्रिवृतमिति त्रि—वृतम् । एव । यज्ञमुख इति यज्ञ—मुखे । वीति । यातयति । ओषधीः । वपति । ब्रह्मणा । अन्नम् । अवेति । रुन्धे । अर्के । अर्कः । चीयते । चतुर्दशभिरिति चतुर्दश—भिः । वपति । सप्त । ग्राम्याः । ओषधयः । सप्त । आरण्याः । उभयीषाम् । अवरुद्ध्या इत्यव—रुद्ध्यै । अन्नस्यान्नस्येत्यन्नस्य—अन्नस्य । वपति । अन्नस्यान्नस्येत्यन्नस्य—अन्नस्य । अवरुद्ध्या इत्यव—रुद्ध्यै । कृष्टे । वपति । कृष्टे । हि । ओषधयः । प्रतितिष्ठन्तीति प्रति—तिष्ठन्ति । अनुसीतमित्यनु—सीतम् । वपति । प्रजात्या इति प्र—जात्यै । द्वादशस्विति द्वादश—सु । सीतासु । वपति । द्वादश । मासाः । संवत्सर इति सं—वत्सरः । संवत्सरेणेति सं—वत्सरेण । एव । अस्मै । अन्नम् । पचति । यत् । अग्निचिदित्यग्नि—चित् ( ५ ) । अनवरुद्धस्येत्यनव—रुद्धस्य । अश्नीयात् । अवरुद्धेनेत्यव—रुद्धेन । वीति । ऋध्येत । ये । वनस्पतीनाम् । फलग्रहय इति फल—ग्रहयः । तान् । इध्मे । अपि । प्रेति । उक्षेत् । अनवरुद्धस्येत्यनव—रुद्धस्य ।

अवरुद्ध्या इत्यव—रुद्ध्यै । दिग्भ्य इति दिक्—भ्यः । लोष्टान् । समिति । अस्यति । दिशाम् । एव । वीर्यम् । अवरुध्येत्यव—रुध्य । दिशाम् । वीर्ये । अग्निम् । चिनुते । यम् । द्विष्यात् । यत्र । सः । स्यात् । तस्यै । दिशः । लोष्टम् । एति । हरेत् । इषम् । ऊर्जम् । अहम् । इतः । एति । ददे । इति । इषम् । एव । ऊर्जम् । तस्यै । दिशः । अवेति । रुन्धे । क्षोधुकः । भवति । यः । तस्याम् । दिशि । भवति । उत्तरवेदिमित्युत्तर—वेदिम् । उपेति । वपति । उत्तरवेद्यामित्युत्तर—वेद्याम् । हि । अग्निः । चीयते । अथो इति । पशवः । वै । उत्तरवेदिरित्युत्तर—वेदिः । पशून् । एव । अवेति । रुन्धे । अथो इति । यज्ञपरुष इति यज्ञ—परुषः । अनन्तरित्या इत्यनन्तः—इत्यै ( ६ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे पञ्चमाष्टके द्वितीयप्रपाठके पञ्चमोऽनुवाकः ॥ ५ ॥

---

( अथ पञ्चमाष्टके द्वितीयप्रपाठके षष्ठोऽनुवाकः । )

---

अग्ने तव श्रवो वय इति सिकता नि वपत्ये-तद्वा अग्नेर्वैश्वानरस्य सूक्तꣳ सूक्तेनैव वैश्वानर-

मवं रुन्धे षड्भिर्नि वंपति षड्वा ऋतवंः संवत्सरः संवत्सरोंऽग्निर्वैश्वानरः साक्षादेव वैश्वानरमवं रुन्धे समुद्रं वै नामैतच्छन्दंः समुद्रमनु प्रजाः प्र जांयन्ते यदेतेन सिकंता नि वपंति प्रजानां प्रजननायेन्द्रंः (१) वृत्राय वज्रं प्राहंरत्स त्रेधा व्यंभवत्स्फ्यस्तृतीयं रथस्तृतीयं यूपस्तृतीयं येंऽन्तःशरा अशीर्यन्त ताः शर्करा अभवन्तच्छर्कराणाः शर्करत्वं वज्रो वै शर्कराः पशुरग्निर्यच्छर्कराभिरग्निं परिमिनोति वज्रेणैवास्मै पशून्परि गृह्णाति तस्माद्वज्रेण पशवः परिगृहीतास्तस्मात्स्थेयानस्थेयसो नोपं हरते त्रिसप्ताभिंः पशुकामस्य ( २ ) परि मिनुयात्सप्त वै शीर्षण्याः प्राणाः प्राणाः पशवंः प्राणैरेवास्मै पशूनवं रुन्धे त्रिणवाभिर्भ्रातृंव्यवतस्त्रिवृतमेव वज्रं संभृत्य भ्रातृंव्याय प्र हंरति स्तृत्या अपंरिमिताभिः परिं मिनुयादपंरिमितस्यावंरुद्ध्यै यं कामयेतापशुः स्यादित्यपंरिमित्य तस्य शर्कराः सिकंता व्यूहेदपंरिगृहीत एवास्य विषूचीनः रेतः परां सिञ्चत्यपशुरेव भंवति ( ३ ) यं कामयेत पशुमान्त्स्यादितिं परिमित्य

तस्य शर्कराः सिकता व्यूहेत्परिगृहीत एवास्मै समीचीनꣳ रेतः सिञ्चति पशुमानेव भवति सौम्या व्यूहति सोमो वै रेतोधा रेत एव तद्दधाति गायत्रिया ब्राह्मणस्य गायत्रो हि ब्राह्मणस्त्रिष्टुभा राजन्यस्य त्रैष्टुभो हि राजन्यः शंयुं बार्हस्पत्यं मेधो नोपानमत्सोऽग्निं प्राविशत् ( ४ ) सोऽग्नेः कृष्णो रूपं कृत्वोदायत सोऽश्वं प्राविशत्सोऽश्वस्यावान्तरशफोऽभवद्यदश्वमाक्रमयति य एव मेधोऽश्वं प्राविशत्तमेवाव रुन्धे प्रजापतिनाऽग्निश्चेतव्य इत्याहुः प्राजापत्योऽश्वो यदश्वमाक्रमयति प्रजापतिनैवाग्निं चिनुते पुष्करपर्णमुप दधाति योनिर्वा अग्नेः पुष्करपर्णꣳ सयोनिमेवाग्निं चिनुतेऽपां पृष्ठमसीत्युप दधात्यपां वा एतत्पृष्ठं यत्पुष्करपर्णꣳ रूपेणैवैनदुप दधाति ( ५ ) ॥

( इन्द्रः पशुकामस्य भवत्यविशत्सयोनिं विꣳशतिश्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां पञ्चमाष्टके द्वितीयप्रपाठके षष्ठोऽनुवाकः ॥ ६ ॥

---

( अथ पञ्चमाष्टके द्वितीयप्रपाठके षष्ठोऽनुवाकः । )

---

अग्ने । तव । श्रवः । वयः । इति । सिकताः ।

नीति । वपति । एतव् । वै । अग्नेः । वैश्वानरस्यं । सूक्तमिति सु—उक्तम् । सूक्तेनेति सु—उक्तेनं । एव । वैश्वानरम् । अवेति । रुन्धे । षड्भिरिति षट्—भिः । नीति । वपति । षट् । वै । ऋतवः । संवत्सर इति सं—वत्सरः । संवत्सर इति सं—वत्सरः । अग्निः । वैश्वानरः । साक्षादिति स—अक्षाव् । एव । वैश्वानरम् । अवेति । रुन्धे । समुद्रम् । वै । नामं । एतव् । छन्दः । समुद्रम् । अन्विति । प्रजा इति प्र—जाः । प्रेति । जायन्ते । यव् । एतेनं । सिकंताः । निवपतीति नि—वपंति । प्रजानामिति प्र—जानाम् । प्रजननायेति प्र—जननाय । इन्द्रः ( १ ) । वृत्रायं । वज्रम् । प्रेति । अहरव् । सः । त्रेधा । वीति । अभवव् । स्फ्यः । तृतीयम् । रथः । तृतीयम् । यूपः । तृतीयम् । ये । अन्तःशरा इत्यन्तः—शराः । अशीर्यन्त । ताः । शर्कराः । अभवन् । तव् । शर्कराणाम् । शर्करत्वमिति शर्कर—त्वम् । वज्रः । वै । शर्कराः । पशुः । अग्निः । यव् । शर्कराभिः । अग्निम् । परिमिनोतीति परि—मिनोति । वज्रेण । एव । अस्मै । पशून् । परीति । गृह्णाति । तस्माव् । वज्रेण ।

पशवः । परिगृहीता इति परि—गृहीताः । तस्मात् । स्थेयान् । अस्थेयसः । न । उपेति । हरते । त्रिसप्ताभिरिति त्रि—सप्ताभिः । पशुकामस्येति पशु—कामस्य ( २ )। परीति । मिनुयात् । सप्त । वै । शीर्षण्याः । प्राणा इति प्र—अनाः । प्राणा इति प्र—अनाः । पशवः । प्राणैरिति प्र—अनैः । एव । अस्मै । पशून् । अवेति । रुन्धे । त्रिणवाभिरिति त्रि—नवाभिः । भ्रातृव्यवत इति भ्रातृव्य—वतः । त्रिवृतमिति त्रि—वृतम् । एव । वज्रम् । संभृत्येति सं—भृत्य । भ्रातृव्याय । प्रेति । हरति । स्तृत्यै । अपरिमिताभिरित्यपरि—मिताभिः । परीति । मिनुयात् । अपरिमितस्येत्यपरि—मितस्य । अवरुद्ध्या इत्यव—रुद्ध्यै । यम् । कामयेत । अपशुः । स्यात् । इति । अपरिमित्येत्यपरि—मित्य । तस्य । शर्कराः । सिकताः । वीति । ऊहेत् । अपरिगृहीत इत्यपरि—गृहीते । एव । अस्य । विषूचीनम् । रेतः । परेति । सिञ्चति । अपशुः । एव । भवति ( ३ ) । यम् । कामयेत । पशुमानिति पशु—मान् । स्यात् । इति । परिमित्येति परि—मित्य । तस्य । शर्कराः । सिकताः । वीति । ऊहेत् । परिगृहीत इति परि—गृहीते ।

एव । अस्मै । समीचीनम् । रेतः । सिञ्चति । पशुमानिति पशु—मान् । एव । भवति । सौम्या । वीति । ऊहति । सोमः । वै । रेतोधा इति रेतः—धाः । रेतः । एव । तत् । दधाति । गायत्रिया । ब्राह्मणस्य । गायत्रः । हि । ब्राह्मणः । त्रिष्टुभा । राजन्यस्य । त्रैष्टुभः । हि । राजन्यः । शंयुमिति शं—युम् । बार्हस्पत्यम् । मेधः । न । उपेति । अनमत् । सः । अग्निम् । प्रेति । अविशत् ( ४ ) । सः । अग्नेः । कृष्णः । रूपम् । कृत्वा । उदिति । आयत । सः । अश्वम् । प्रेति । अविशत् । सः । अश्वस्य । अवान्तरशफ इत्यवान्तर—शफः । अभवत् । यत् । अश्वम् । आक्रमयतीत्या—क्रमयति । यः । एव । मेधः । अश्वम् । प्रेति । अविशत् । तम् । एव । अवेति । रुन्धे । प्रजापतिनेति प्रजा—पतिना । अग्निः । चेतव्यः । इति । आहुः । प्राजापत्य इति प्राजा—पत्यः । अश्वः । यत् । अश्वम् । आक्रमयतीत्या—क्रमयति । प्रजापतिनेति प्रजा—पतिना । एव । अग्निम् । चिनुते । पुष्करपर्णमिति पुष्कर—पर्णम् । उपेति । दधाति । योनिः । वै । अग्नेः । पुष्करपर्णमिति पुष्कर—पर्णम् । सयोनिमिति स—

योनिम् । एव । अग्निम् । चिनुते । अपाम् । पृष्ठम् । असि । इति । उपेति । दधाति । अपाम् । वै । एतत् । पृष्ठम् । यत् । पुष्करपर्णमिति पुष्कर— पर्णम् । रूपेण । एव । एनत् । उपेति । दधाति (५)॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे पञ्चमाष्टके द्वितीयप्रपाठके षष्ठोऽनुवाकः ॥ ६ ॥

---

( अथ पञ्चमाष्टके द्वितीयप्रपाठके सप्तमोऽनुवाकः । )

---

ब्रह्म जज्ञानमिति रुक्ममुपं दधाति ब्रह्म- मुखा वै प्रजापतिः प्रजा असृजत ब्रह्ममुखा एव तत्प्रजा यजमानः सृजते ब्रह्म जज्ञानमि- त्याह तस्माद्ब्राह्मणो मुख्यो मुख्यो भवति य एवं वेद ब्रह्मवादिनो वदन्ति न पृथिव्यां नान्तरिक्षे न दिव्यग्निश्चेतव्य इति यत्पृथिव्यां चिन्वीत पृथिवीꣳ शुचाऽर्पयेन्नौषधयो न वन- स्पतयः (१) प्र जायेरन्यदन्तरिक्षे चिन्वीता- न्तरिक्षꣳ शुचाऽर्पयेन्न वयाꣳसि प्र जायेरन्य- द्दिवि चिन्वीत दिवꣳ शुचाऽर्पयेन्न पर्जन्यो वर्षे- द्रुक्ममुपं दधात्यमृतं वै हिरण्यममृत एवाग्निं चिनुते प्रजात्यै हिरण्मयं पुरुषमुपं दधाति

यजमानलोकस्य विधृत्यै यदिष्टकाया आतृ-
ण्णमनूपदध्यात्पशूनां च यजमानस्य च
प्राणमपि दध्याद्दक्षिणतः (२) प्राञ्चमुप
दधाति दाधारं यजमानलोकं न पशूनां च
यजमानस्य च प्राणमपि दधात्यथो खल्विष्ट-
काया आतृण्णमनूप दधाति प्राणानामुत्सृष्ट्यै
द्रप्सश्चस्कन्देत्यभि मृशति होत्रास्वेवैनं प्रति
ष्ठापयति स्रुचावुप दधात्याज्यस्य पूर्णां कां-
ष्मर्यमयीं दध्नः पूर्णामौदुम्बरीमियं वै कांष्म-
र्यमय्यसावौदुम्बरीमे एवोप धत्ते (३)
तूष्णीमुप दधाति न हीमे यजुषाऽऽप्तुमर्हति
दक्षिणां कांष्मर्यमयीमुत्तरामौदुम्बरीं तस्मा-
दस्या असावुत्तराऽऽज्यस्य पूर्णां कांष्मर्यमयीं
वज्रो वा आज्यं वज्रः कांष्मर्यो वज्रेणैव यज्ञस्य
दक्षिणतो रक्षांस्यप हन्ति दध्नः पूर्णामौदु-
म्बरीं पशवो वै दध्यूर्गुदुम्बरः पशुष्वेवोर्जं
दधाति पूर्णे उप दधाति पूर्ण एवैनम् (४)
अमुष्मिंल्लोँक उप तिष्ठते विराज्यग्निश्चेतव्य
इत्याहुः स्रुग्वै विराड्यत्स्रुचावुपदधाति विराज्ये-
वाग्निं चिनुते यज्ञमुखेयज्ञमुखे वै क्रियमाणे

यज्ञꣳ रक्षाꣳसि जिघाꣳसन्ति यज्ञमुखꣳ रुक्मो यद्रुक्मं व्याघारयति यज्ञमुखादेव रक्षाꣳस्यप हन्ति पञ्चभिर्व्याघारयति पाङ्क्तो यज्ञो यावानेव यज्ञस्तस्माद्रक्षाꣳस्यप हन्त्यक्ष्णया व्याघारयति तस्मादक्ष्णया पशवोऽङ्गानि प्र हरन्ति प्रतिष्ठित्यै ( ५ ) ॥

( वनस्पतयो दक्षिणतो धत्त एनं तस्मादक्ष्णया पञ्च च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां पञ्चमाष्टके द्वितीयप्रपाठके सप्तमोऽनुवाकः ॥ ७ ॥

---

( अथ पञ्चमाष्टके द्वितीयप्रपाठके सप्तमोऽनुवाकः । )

---

ब्रह्म । जज्ञानम् । इति । रुक्मम् । उपेति । दधाति । ब्रह्ममुखा इति ब्रह्म—मुखाः । वै । प्रजापतिरिति प्रजा—पतिः । प्रजा इति प्र—जाः । असृजत । ब्रह्ममुखा इति ब्रह्म—मुखाः । एव । तत् । प्रजा इति प्र—जाः । यजमानः । सृजते । ब्रह्म । जज्ञानम् । इति । आह । तस्मात् । ब्राह्मणः । मुख्यः । मुख्यः । भवति । यः । एवम् । वेद । ब्रह्मवादिन इति ब्रह्म—वादिनः । वदन्ति । न । पृथिव्याम् । न । अन्तरिक्षे । न । दिवि । अग्निः । चेतव्यः ।

इति॑ । यत् । पृ॒थि॒व्याम् । चि॒न्वी॒त । पृ॒थि॒वीम् । शुचा । अ॒र्प॒ये॒त् । न । ओष॑धयः । न । व॒नस्पत॑यः (१)। प्रेति॑। जा॒ये॒र॒न् । यत् । अ॒न्तरि॑क्षे । चि॒न्वी॒त । अ॒न्तरि॑क्षम् । शुचा । अ॒र्प॒ये॒त् । न । वयाꣳ॑सि । प्रेति॑ । जा॒ये॒र॒न् । यत् । दि॒वि । चि॒न्वी॒त । दिव॑म् । शुचा । अ॒र्प॒ये॒त् । न । प॒र्जन्य॑ः । व॒र्षे॒त् । रु॒क्मम् । उपेति॑ । द॒धा॒ति॒ । अ॒मृत॑म् । वै । हिर॑ण्यम् । अ॒मृते॑ । ए॒व । अ॒ग्निम् । चि॒नु॒ते॒ । प्रजा॑त्या इति॑ प्र—जा॒त्यै॒ । हि॒र॒ण्म॒यम् । पुरु॑षम् । उपेति॑ । द॒धा॒ति॒ । य॒ज॒मा॒न॒लो॒कस्येति॑ यजमान—लो॒कस्य॑ । विधृ॑त्या इति॒ वि—धृ॒त्यै॒ । यत् । इष्ट॑कायाः । आतृ॑ण्ण॒मित्या—तृ॒ण्ण॒म् । अ॒नू॒प॒द॒ध्या॒दित्य॑नु—उ॒प॒द॒ध्या॒त् । प॒शू॒नाम् । च॒ । यज॑मानस्य । च॒ । प्रा॒णमिति॑ प्र—अ॒नम् । अपीति॑ । द॒ध्या॒त् । द॒क्षि॒ण॒तः ( २ ) । प्राञ्च॑म् । उपेति॑ । द॒धा॒ति॒ । दा॒धार॑ । य॒ज॒मा॒न॒लो॒कमिति॑ यजमान—लो॒कम् । न । प॒शू॒नाम् । च॒ । यज॑मानस्य । च॒ । प्रा॒णमिति॑ प्र—अ॒नम् । अपीति॑ । द॒धा॒ति॒ । अथो॒ इति॑ । खलु॑ । इष्ट॑कायाः । आतृ॑ण्ण॒मित्या—तृ॒ण्ण॒म् । अनु॑ । उपेति॑ । द॒धा॒ति॒ । प्रा॒णा॒ना॒मिति॑

प्र—अनानाम् । उत्सृष्ट्या इत्युत्—सृष्ट्यै । द्रप्सः । चस्कन्द । इति । अभीति । मृशति । होत्रासु । एव । एनम् । प्रतीति । स्थापयति । स्रुचौ । उपेति । दधाति । आज्यस्य । पूर्णाम् । कार्ष्मर्यमयीमिति कार्ष्मर्य—मयीम् । दध्नः । पूर्णाम् । औदुम्बरीम् । इयम् । वै । कार्ष्मर्यमयीति कार्ष्मर्य—मयी । असौ । औदुम्बरी । इमे इति । एव । उपेति । धत्ते ( ३ )। तूष्णीम् । उपेति । दधाति । न । हि । इमे इति । यजुषा । आप्तुम् । अर्हति । दक्षिणाम् । कार्ष्मर्यमयीमिति कार्ष्मर्य—मयीम् । उत्तरामित्युत्—तराम् । औदुम्बरीम् । तस्मात् । अस्याः । असौ । उत्तरेत्युत्—तरा । आज्यस्य । पूर्णाम् । कार्ष्मर्यमयीमिति कार्ष्मर्य—मयीम् । वज्रः । वै । आज्यम् । वज्रः । कार्ष्मर्यः । वज्रेण । एव । यज्ञस्य । दक्षिणतः । रक्षांसि । अपेति । हन्ति । दध्नः । पूर्णाम् । औदुम्बरीम् । पशवः । वै । दधि । ऊर्क् । उदुम्बरः । पशुषु । एव । ऊर्जम् । दधाति । पूर्णे इति । उपेति । दधाति । पूर्णे इति । एव । एनम् । ( ४ ) । अमुष्मिन् । लोके । उपेति । तिष्ठेते इति । विराजीति वि—राजि । अग्निः । चेत-

व्यः । इति॑ । आ॒हुः । स्रुक् । वै । वि॒राडिति॑ वि—राट् । यत् । स्रुचौ॑ । उ॒प॒द॒धा॒तीत्यु॑प—द॒धाति॑ । वि॒राजीति॑ वि—रा॒जि॑ । ए॒व । अ॒ग्निम् । चि॒नु॒ते । य॒ज्ञ॒मु॒खेयं॑ज्ञमु॒ख इति॑ यज्ञमु॒खे—य॒ज्ञ॒मु॒खे । वै । क्रि॒यमा॑णे । य॒ज्ञम् । रक्षा॑ꣳसि । जि॒घा॒ꣳस॒न्ति॒ । य॒ज्ञ॒मु॒खमिति॑ यज्ञ—मु॒खम् । रु॒क्मः । यत् । रु॒क्मम् । व्या॒घा॒र॒यतीति॑ वि—आ॒घा॒रय॑ति । य॒ज्ञ॒मु॒खादिति॑ यज्ञ—मु॒खात् । ए॒व । रक्षा॑ꣳसि । अपेति॑ । ह॒न्ति॒ । प॒ञ्चभि॒रिति॑ प॒ञ्च—भि॒ः । व्याघा॑रय॒तीति॑ वि—आघा॑रयति । पाङ्क्तः । य॒ज्ञः । यावा॑न् । ए॒व । य॒ज्ञः । तस्मा॑त् । रक्षा॑ꣳसि । अपेति॑ । ह॒न्ति॒ । अ॒क्ष्ण॒या । व्याघा॑रय॒तीति॑ वि—आघा॑रयति । तस्मा॑त् । अ॒क्ष्ण॒या । प॒शवः॑ । अ॒ङ्गा॑नि । प्रेति॑ । ह॒र॒न्ति॒ । प्रति॑ष्ठित्या॒ इति॒ प्रति॑—स्थि॒त्यै॒ ( ५ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे पञ्चमाष्टके द्वितीयप्रपाठके सप्तमोऽनुवाकः ॥ ७ ॥

---

( अथ पञ्चमाष्टके द्वितीयप्रपाठकेऽष्टमोऽनुवाकः । )

---

स्व॒य॒मा॒तृ॒ण्णामुप॑ दधा॒तीयं वै स्व॑यमातृ॒ण्णेमामे॒वोप॑ ध॒त्तेऽश्व॒मुप॑ घ्रापयति प्रा॒णमे॒वास्यां॑

दधात्यथो प्राजापत्यो वा अश्वः प्रजापतिनै-
वाग्निं चिनुते प्रथमेष्टकोपधीयमाना पशूनां
च यजमानस्य च प्राणमपि दधाति स्वयमा-
तृण्णा भवति प्राणानामुत्सृष्ट्या अथो सुवर्गस्य
लोकस्यानुख्यात्या अग्नावग्निश्चेतव्य इत्याहुरेष
वै ( १ ) अग्निर्वैश्वानरो यद्ब्राह्मणस्तस्मै प्रथ-
मामिष्टकां यजुष्कृतां प्र यच्छेत्तां ब्राह्मणश्चो-
पदध्यातामग्नावेव तदग्निं चिनुत ईश्वरो वा
एष आर्तिमार्तोर्योऽविद्वानिष्टकामुपदधाति त्री-
न्वरान्दद्यात्त्रयो वै प्राणाः प्राणानाꣳ स्तृत्यै
द्वावेव देयौ द्वौ हि प्राणावेकं एव देय एको
हि प्राणः पशुः ( २ ) वा एष यदग्निर्न खलु
वै पशव आयवसे रमन्ते दूर्वेष्टकामुप दधाति
पशूनां धृत्यै द्वाभ्यां प्रतिष्ठित्यै काण्डात्का-
ण्डात्प्ररोहन्तीत्याह काण्डेनकाण्डेन ह्येषा प्रति-
तिष्ठत्येवा नो दूर्वे प्र तनु सहस्रेण शतेन
चेत्याह साहस्रः प्रजापतिः प्रजापतेराप्त्यै
देवलक्ष्मं वै त्र्यालिखिता तामुत्तरलक्ष्माणं
देवा उपादधताधरलक्ष्माणमसुरा यम् ( ३ )
कामयेत वसीयान्त्स्यादित्युत्तरलक्ष्माणं तस्योप

दध्याद्वसीयानेव भवति यं कामयेत पापीयान्त्स्यादित्यधरलक्ष्माणं तस्योप दध्यादसुरयोनिमेवैनमनु परा भावयति पापीयान्भवति त्र्यालिखिता भवतीमे वै लोकास्त्र्यालिखितेभ्य एव लोकेभ्यो भ्रातृव्यमन्तरेत्यङ्गिरसः सुवर्गं लोकं यतः पुरोडाशः कूर्मो भूत्वाऽनु प्रासर्पत् (४) यत्कूर्ममुपदधाति यथा क्षेत्रविदञ्जसा नयत्येवमेवैनं कूर्मः सुवर्गं लोकमञ्जसा नयति मेधो वा एष पशूनां यत्कूर्मो यत्कूर्ममुपदधाति स्वमेव मेधं पश्यन्तः पशव उपतिष्ठन्ते श्मशानं वा एतत्क्रियते यन्मृतानां पशूनाꣳ शीर्षाण्युपधीयन्ते यज्जीवन्तं कूर्ममुपदधाति तेनाश्मशानचिद्वास्तव्यो वा एष यत् (५) कूर्मो मधु वाता ऋतायत इति दध्ना मधुमिश्रेणाभ्यनक्ति स्वदयत्येवैनं ग्राम्यं वा एतदन्नं यद्दध्यारण्यं मधु यद्दध्ना मधुमिश्रेणाभ्यनक्त्युभयस्यावरुद्ध्यै मही द्यौः पृथिवी च न इत्याहाऽऽभ्यामेवैनमुभयतः परि गृह्णाति प्राञ्चमुप दधाति सुवर्गस्य लोकस्य समष्ट्यै पुरस्तात्प्रत्यञ्चमुप दधाति तस्मात्

( ६ ) पुरस्तात्प्रत्यञ्चः पशवो मेधमुपं तिष्ठन्ते यो वा अपंनाभिमग्निं चिनुते यजमानस्य नाभिमनु प्र विंशति स एंनमीश्वरो हिंसिंतोरुलूखंलमुपं दधात्येषा वा अग्नेर्नाभिः सनाभिमेवाग्निं चिंनुतेऽहिंसाया औदुंम्बरं भवत्यूर्ग्वा उंदुम्बर ऊर्जमेवावं रुन्धे मध्यत उपं दधाति मध्यत एवास्मा ऊर्जं दधाति तस्मांन्मध्यत ऊर्जा भुंञ्जत इयंद्भवति प्रजापंतिना यज्ञमुखेन संमिंतमवं हन्त्यन्नंमेवार्क-वैष्णव्यर्चोपं दधाति विष्णुर्वै यज्ञो वैष्णवा वनस्पतंयो यज्ञ एव यज्ञं प्रतिं ष्ठापयति(७)॥

( एष वै पशुर्यमं सर्पदेष यत्तस्मात्तस्मांत्सप्तविंशतिश्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां पञ्चमाष्टके द्वितीयप्रपाठकेऽष्टमोऽनुवाकः ॥ ८ ॥

---

( अथ पञ्चमाष्टके द्वितीयप्रपाठकेऽष्टमोऽनुवाकः । )

---

स्वयमातृण्णामितिं स्वयम्—आतृण्णाम् । उपेतिं । दधाति । इयम् । वै । स्वयमातृण्णेतिं स्वयम्—आतृण्णा । इमाम् । एव । उपेतिं । धत्ते । अश्वंम् । उपेतिं । घ्रापयति । प्राणमितिं प्र—अनम् । एव । अस्याम् । दधाति । अथो इतिं । प्राजापत्य इतिं

प्राजा—पत्यः । वै । अश्वः । प्रजापतिनेति प्रजा—पतिना । एव । अग्निम् । चिनुते । प्रथमा । इष्टका । उपधीयमानेत्युप—धीयमाना । पशूनाम् । च । यजमानस्य । च । प्राणमिति प्र—अनम् । अपीतिं । दधाति । स्वयमातृण्णेति स्वयम्—आतृण्णा । भवति । प्राणानामिति प्र—अनानाम् । उत्सृष्ट्या इत्युत्—सृष्ट्यै । अथो इति । सुवर्गस्येति सुवः—गस्य । लोकस्य । अनुख्यात्या इत्यनु—ख्यात्यै । अग्नौ । अग्निः । चेतव्यः । इति । आहुः । एषः । वै ( १ ) । अग्निः । वैश्वानरः । यत् । ब्राह्मणः । तस्मै । प्रथमाम् । इष्टकाम् । यजुष्कृतामिति यजुः—कृताम् । प्रेति । यच्छेत् । ताम् । ब्राह्मणः । च । उपेति । दध्याताम् । अग्नौ । एव । तत् । अग्निम् । चिनुते । ईश्वरः । वै । एषः । आर्तिम् । आर्तोरिति आ—अर्तोः । यः । अविद्वान् । इष्टकाम् । उपदधातीत्युप—दधाति । त्रीन् । वरान् । दद्यात् । त्रयः । वै । प्राणा इति प्र—अनाः । प्राणानामिति प्र—अनानाम् । स्तृत्यै । द्वौ । एव । देयौ । द्वौ । हि । प्राणाविति प्र—अनौ । एकः । एव । देयः । एकः । हि । प्राण इति प्र—अनः । पशुः ( २ ) ।

वै । एषः । यत् । अग्निः । न । खलु । वै । पशवः । आयवसे । रमन्ते । दूर्वेष्टकामिति दूर्वा—इष्टकाम् । उपेति । दधाति । पशूनाम् । धृत्यै । द्वाभ्याम् । प्रतिष्ठित्या इति प्रति—स्थित्यै । काण्डात्काण्डादिति काण्डात्—काण्डात् । प्ररोहन्तीति प्र—रोहन्ती । इति । आह । काण्डेनकाण्डेनेति काण्डेन—काण्डेन । हि । एषा । प्रतितिष्ठतीति प्रति—तिष्ठति । एवा । नः । दूर्वे । प्रेति । तनु । सहस्रेण । शतेन । च । इति । आह । साहस्रः । प्रजापतिरिति प्रजा—पतिः । प्रजापतेरिति प्रजा—पतेः । आप्त्यै । देवलक्ष्ममिति देव—लक्ष्मम् । वै । त्र्यालिखितेति त्रि—आलिखिता । ताम् । उत्तरलक्ष्माणमित्युत्तर—लक्ष्माणम् । देवाः । उपेति । अदधत । अधरलक्ष्माणमित्यधर—लक्ष्माणम् । असुराः । यम् ( ३ )। कामयेत । वसीयान् । स्यात् । इति । उत्तरलक्ष्माणमित्युत्तर—लक्ष्माणम् । तस्य । उपेति । दध्यात् । वसीयान् । एव । भवति । यम् । कामयेत । पापीयान् । स्यात् । इति । अधरलक्ष्माणमित्यधर—लक्ष्माणम् । तस्य । उपेति । दध्यात् । असुरयोनिमित्यसुर—योनिम् । एव । एनम् । अनु । परेति ।

( स्वयमातृण्णास्थापनम् )

भावयति । पापीयान् । भवति । त्र्यालिखितेति त्रि—आलिखिता । भवति । इमे । वै । लोकाः । त्र्यालिखितेति त्रि—आलिखिता । एभ्यः । एव । लोकेभ्यः । भ्रातृव्यम् । अन्तः । एति । अङ्गिरसः । सुवर्गमिति सुवः—गम् । लोकम् । यतः । पुरोडाशः । कूर्मः । भूत्वा । अनु । प्रेति । असर्पत् (४)। यत् । कूर्मम् । उपदधातीत्युप—दधाति । यथा । क्षेत्रविदिति क्षेत्र—वित् । अञ्जसा । नयति । एवम् । एव । एनम् । कूर्मः । सुवर्गमिति सुवः—गम् । लोकम् । अञ्जसा । नयति । मेधः । वै । एषः । पशूनाम् । यत् । कूर्मः । यत् । कूर्मम् । उपदधातीत्युप—दधाति । स्वम् । एव । मेधम् । पश्यन्तः । पशवः । उपेति । तिष्ठन्ते । श्मशानम् । वै । एतत् । क्रियते । यत् । मृतानाम् । पशूनाम् । शीर्षाणि । उपधीयन्त इत्युप—धीयन्ते । यत् । जीवन्तम् । कूर्मम् । उपदधातीत्युप—दधाति । तेन । अश्मशानचिदित्यश्मशान—चित् । वास्तव्यः । वै । एषः । यत् (५)। कूर्मः । मधु । वाताः । ऋतायत इत्यृत—यते । इति । दध्ना । मधुमिश्रेणेति मधु—मिश्रेण । अभीति । अनक्ति । स्वदयति । एव । एनम् । ग्रा-

ण्यम् । वै । एतत् । अन्नंम् । यत् । दधि । आर-
ण्यम् । मधुं । यत् । दुध्ना । मधुमिश्रेणेतिं मधु—
मिश्रेणं । अभ्यनक्तीत्यंभि—अनक्ति । उभयंस्य ।
अवंरुद्ध्या इत्यवं—रुद्ध्यै । मही । द्यौः । पृथिवी ।
च । नः । इति । आह । आभ्याम् । एव । एनम् ।
उभयतः । परीतिं । गृह्णाति । प्राञ्चंम् । उपेतिं ।
दधाति । सुवर्गस्येतिं सुवः—गस्यं । लोकस्यं । समं-
ष्ट्या इति सम्—अष्ट्यै । पुरस्तात् । प्रत्यञ्चंम् ।
उपेतिं । दधाति । तस्मात् ( ६ ) । पुरस्तात् ।
प्रत्यञ्चंः । पशवंः । मेधंम् । उपेतिं । तिष्ठन्ते । यः ।
वै । अपंनाभिमित्यपं—नाभिम् । अग्निम् । चिनुते ।
यजंमानस्य । नाभिंम् । अनु । प्रेतिं । विशति ।
सः । एनम् । ईश्वरः । हिंसितोः । उलूखंलम् ।
उपेतिं । दधाति । एषा । वै । अग्नेः । नाभिंः ।
सनांभिमिति स—नाभिम् । एव । अग्निम् । चिनुते ।
अहिंसायै । औदुंम्बरम् । भवति । ऊर्क् । वै ।
उदुम्बरंः । ऊर्जंम् । एव । अवेतिं । रुन्धे । मध्यतः ।
उपेतिं । दधाति । मध्यतः । एव । अस्मै । ऊर्जंम् ।
दधाति । तस्मात् । मध्यतः । ऊर्जा । भुञ्जते । इयंत् ।
भवति । प्रजापंतिनेतिं प्रजा—पतिना । यज्ञमुखे-

नेतिं यज्ञ—मुखेनं। संमितमिति सं—मितम्। अवे- ति। हन्ति। अन्नम्। एव। अकः। वैष्णव्या। ऋचा। उपेतिं। दधाति। विष्णुः। वै। यज्ञः। वैष्णवाः। वनस्पतंयः। यज्ञे। एव। यज्ञम्। प्रतीतिं। स्थापयति (७)॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे पञ्चमाष्टके द्वितीयप्रपाठकेऽष्टमोऽनुवाकः॥ ८॥

---

( अथ पञ्चमाष्टके द्वितीयप्रपाठके नवमोऽनुवाकः। )

---

एषां वा एतल्लोकानां ज्योतिः संभृतं यदु- खा यदुखामुपदधात्येभ्य एव लोकेभ्यो ज्यो- तिरवं रुन्धे मध्यत उपं दधाति मध्यत एवा- स्मै ज्योतिर्दधाति तस्मान्मध्यतो ज्योतिरु- पाऽऽस्महे सिकताभिः पूरयत्येतद्वा अग्नेर्वैश्वा- नरस्यं रूपꣳ रूपेणैव वैश्वानरमवं रुन्धे यं कामयेत क्षोधुंकः स्यादित्यूनां तस्योपं (१) दध्यात्क्षोधुंक एव भंवति यं कामयेतानुपदस्य- दन्नमद्यादितिं पूर्णां तस्योपं दध्यादनुपदस्य- देवान्नमत्ति सहस्रं वै प्रति पुरुषः पशूनां यं- च्छति सहस्रमन्ये पशवो मध्यें पुरुषशीर्षमुपं दधाति सवीर्यत्वायोखायामपिं दधाति प्रति-

ष्ठामेवैनंद्गमयति व्यृद्धं वा एतत्प्राणैरमेध्यं यत्पुरुषशीर्षममृतं खलु वै प्राणाः ( २ ) अमृतꣳ हिरण्यं प्राणेषु हिरण्यशल्कान्प्रत्यस्यति प्रतिष्ठामेवैनंद्गमयित्वा प्राणैः समर्धयति दध्ना मधुमिश्रेण पूरयति मधव्योऽसानीति शृतातङ्क्येन मेध्यत्वाय ग्राम्यं वा एतदन्नं यद्दध्यारण्यं मधु यद्दध्ना मधुमिश्रेण पूरयत्युभयस्यावरुद्ध्यै पशुशीर्षाण्युप दधाति पशवो वै पशुशीर्षाणि पशूनेवाव रुन्धे यं कामयेतापशुः स्यादिति ( ३ ) विषूचीनानि तस्योप दध्याद्विषूच एवास्मात्पशून्दधात्यपशुरेव भवति यं कामयेत पशुमान्त्स्यादिति समीचीनानि तस्योप दध्यात्समीच एवास्मै पशून्दधाति पशुमानेव भवति पुरस्तात्प्रतीचीनमश्वस्योप दधाति पश्चात्प्राचीनमृषभस्यापशवो वा अन्ये गोअश्वेभ्यः पशवो गोअश्वानेवास्मै समीचो दधात्येतावन्तो वै पशवः ( ४ ) द्विपादश्च चतुष्पादश्च तान्वा एतदग्नौ प्र दधाति यत्पशुशीर्षाण्युपदधात्यमुमारण्यमनु ते दिशामीत्याह ग्राम्येभ्य एव पशुभ्य आरण्यान्प-

शूञ्छुचमनूत्सृजति तस्मात्समावत्पशूनां प्रजायमानानामारण्याः पशवः कनीयाꣳसः शुचा ह्यृताः सर्पशीर्षमुप दधाति यैव सर्पे त्विषिस्तामेवाव रुन्धे ( ५ ) यत्समीचीनं पशुशीर्षैरुपदध्याद्ग्राम्यान्पशून्दꣳशुकाः स्युर्यद्विषूचीनमारण्यान्यजुरेव वदेदव तां त्विषिꣳ रुन्धे या सर्पे न ग्राम्यान्पशून्हिनस्ति नाऽऽरण्यानथो खलूपधेयमेव यदुपदधाति तेन तां त्विषिमव रुन्धे या सर्पे यद्यजुर्वदति तेन शान्तम् ( ६ ) ॥

( ऊनां तस्योप प्राणाः स्यादिति वै पशवो रुन्धे चतुश्चत्वारिꣳशच्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां पञ्चमाष्टके द्वितीयप्रपाठके नवमोऽनुवाकः ॥ ९ ॥

---

( अथ पञ्चमाष्टके द्वितीयप्रपाठके नवमोऽनुवाकः । )

---

एषाम् । वै । एतत् । लोकानाम् । ज्योतिः । संभृतमिति सं—भृतम् । यत् । उखा । यत् । उखाम् । उपदधातीत्युप—दधाति । एभ्यः । एव । लोकेभ्यः । ज्योतिः । अवेति । रुन्धे । मध्यतः । उपेति । दधाति । मध्यतः । एव । अस्मै । ज्योतिः । दधाति । तस्मात् । मध्यतः । ज्योतिः । उपेति ।

आस्महे । सिकंताभिः । पूरयति । एतत् । वै । अग्नेः । वैश्वानरस्यं । रूपम् । रूपेणं । एव । वैश्वानरम् । अवेतिं । रुन्धे । यम् । कामयेत । क्षोधुंकः । स्यात् । इतिं । ऊनाम् । तस्यं । उपेतिं ( १ )। दध्यात् । क्षोधुंकः । एव । भवति । यम् । कामयेत । अनुंपदस्यदित्यनुंप—दस्यत् । अन्नंम् । अद्यात् । इतिं । पूर्णाम् । तस्यं । उपेतिं । दध्यात् । अनुंपदस्यदित्यंनुप—दस्यत् । एव । अन्नंम् । अत्ति । सहस्रंम् । वै । प्रतीतिं । पुरुंषः । पशूनाम् । यच्छति । सहस्रंम् । अन्ये । पशवंः । मध्यें । पुरुषशीर्षमितिं पुरुष—शीर्षम् । उपेतिं । दधाति । सवीर्यत्वायेतिं सवीर्य—त्वायं । उखायांम् । अपीतिं । दधाति । प्रतिष्ठामितिं प्रति—स्थाम् । एव । एनत् । गमयति । व्यृंद्धमिति वि—ऋद्धम् । वै । एतत् । प्राणैरितिं प्र—अनैः । अमेध्यम् । यत् । पुरुषशीर्षमितिं पुरुष—शीर्षम् । अमृतंम् । खलुं । वै । प्राणा इतिं प्र—अनाः ( २ )। अमृतंम् । हिरंण्यम् । प्राणेष्वितिं प्र—अनेषुं । हिरण्यशल्कानितिं हिरण्य--शल्कान् । प्रतीतिं । अस्यति । प्रतिष्ठामितिं प्रति--स्थाम् । एव । एनत् । गमयित्वा । प्राणैरितिं

प्र—अग्नेः। समितिं। अर्धयति। दध्ना। मधुमिश्रेणेति मधु—मिश्रेणं। पूरयति। मधव्यः। असानि। इतिं। शृतातङ्क्येनेति शृत—आतङ्क्येन। मेध्यत्वायेति मेध्य—त्वायं। ग्राम्यम्। वै। एतत्। अन्नम्। यत्। दधिं। आरण्यम्। मधुं। यत्। दध्ना। मधुमिश्रेणेति मधु—मिश्रेणं। पूरयंति। उभयंस्य। अवरुद्ध्या इत्यवं—रुद्ध्यै। पशुशीर्षाणीति पशु—शीर्षाणि। उपेतिं। दधाति। पशवंः। वै। पशुशीर्षाणीति पशु—शीर्षाणि। पशून्। एव। अवेतिं। रुन्धे। यम्। कामयेत। अपशुः। स्यात्। इतिं (३)। विषूचीनानि। तस्यं। उपेतिं। दध्यात्। विषूचः। एव। अस्मात्। पशून्। दधाति। अपशुः। एव। भवति। यम्। कामयेत। पशुमानिति पशु—मान्। स्यात्। इतिं। समीचीनानि। तस्यं। उपेतिं। दध्यात्। समीचंः। एव। अस्मै। पशून्। दधाति। पशुमानिति पशु—मान्। एव। भवति। पुरस्तात्। प्रतीचीनम्। अश्वंस्य। उपेतिं। दधाति। पश्चात्। प्राचीनम्। ऋषभस्यं। अपंशवः। वै। अन्ये। गोअश्वेभ्य इतिं गो—अश्वेभ्यंः। पशवंः। गोअश्वानिति गो—अश्वान्। एव। अस्मै।

समीचः । दधाति । एतावन्तः । वै । पशवः ( ४ ) । द्विपाद इति द्वि—पादः । च । चतुष्पाद इति चतुः—पादः । च । तान् । वै । एतत् । अग्नौ । प्रेति । दधाति । यत् । पशुशीर्षाणीति पशु—शीर्षाणि । उपदधातीत्युप—दधाति । अमुम् । आरण्यम् । अन्विति । ते । दिशामि । इति । आह । ग्राम्येभ्यः । एव । पशुभ्य इति पशु—भ्यः । आरण्यान् । पशून् । शुचम् । अनु । उदिति । सृजति । तस्मात् । समावत् । पशूनाम् । प्रजायमानानामिति प्र—जायमानानाम् । आरण्याः । पशवः । कनीयाꣳसः । शुचा । हि । ऋताः । सर्पशीर्षमिति सर्प—शीर्षम् । उपेति । दधाति । या । एव । सर्पे । त्विषिः । ताम् । एव । अवेति । रुन्धे (५)। यत् । समीचीनम् । पशुशीर्षैरिति पशु—शीर्षैः । उपदध्यादित्युप—दध्यात् । ग्राम्यान् । पशून् । दꣳशुकाः । स्युः । यत् । विषूचीनम् । आरण्यान् । यजुः । एव । वदेत् । अवेति । ताम् । त्विषिम् । रुन्धे । या । सर्पे । न । ग्राम्यान् । पशून् । हिनस्ति । न । आरण्यान् । अथो इति । खलु । उपधेयमित्युप—धेयम् । एव । यत् । उपदधातीत्युप—दधाति । तेन । ताम् । त्विषिम् ।

अवैर्ति । रुन्धे । या । सर्पे । यत् । यजुः । वदंति । तेनं । शान्तम् ( ६ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे पञ्चमाष्टके द्वितीयप्रपाठके नवमोऽनुवाकः ॥ ९ ॥

---

( अथ पञ्चमाष्टके द्वितीयप्रपाठके दशमोऽनुवाकः । )

---

पशुर्वा एष यदग्निर्योनिः खलु वा एषा पशोर्वि क्रियते यत्प्राचीनमैष्टकाद्यजुः क्रियते रेतोऽपस्यां अपस्यां उप दधाति योनावेव रेतो दधाति पञ्चोप दधाति पाङ्क्ताः पशवः पशूनेवास्मै प्र जनयति पञ्च दक्षिणतो वज्रो वा अपस्यां वज्रेणैव यज्ञस्य दक्षिणतो रक्षाꣳस्यप हन्ति पञ्च पश्चात् ( १ ) प्राचीरुप दधाति पश्चाद्वै प्राचीनꣳ रेतो धीयते पश्चादेवास्मै प्राचीनꣳ रेतो दधाति पञ्च पुरस्तात्प्रतीचीरुप दधाति पञ्च पश्चात्प्राचीस्तस्मात्प्राचीनꣳ रेतो धीयते प्रतीचीः प्रजा जायन्ते पञ्चोत्तरतश्छन्दस्याः पशवो वै छन्दस्याः पशूनेव प्रजातान्त्स्वमायतनमभि पर्यूहत इयं वा अग्नेरतिदाहादबिभेत्सैताः ( २ ) अपस्या अपश्यत्ता उपाधत्त ततो वा इमां नात्यदह-

यदपस्या उपदधात्यस्या अनतिदाहायोवाच हेयमददिरस ब्रह्मणाऽन्नं यस्यैता उपधीयान्तै य उ चैना एवं वेददिति प्राणभृत उप दधाति रेतस्येव प्राणान्दधाति तस्माद्वदन्प्राणन्पश्यञ्छृण्वन्पशुर्जायतेऽयं पुरः ( ३ ) भुव इति पुरस्तादुप दधाति प्राणमेवैताभिर्दाधारायं दक्षिणा विश्वकर्मेति दक्षिणतो मन एवैताभिर्दाधारायं पश्चाद्विश्वव्यचा इति पश्चाच्चक्षुरेवैताभिर्दाधारेदमुत्तरात्सुवरित्युत्तरतः श्रोत्रमेवैताभिर्दाधारेयमुपरि मतिरित्युपरिष्टाद्वाचमेवैताभिर्दाधार दशदशोप दधाति सवीर्यत्वायाक्ष्णया ( ४ ) उप दधाति तस्मादक्ष्णया पशवोऽङ्गानि प्र हरन्ति प्रतिष्ठित्यै याः प्राचीस्ताभिर्वसिष्ठ आर्ध्नोद्या दक्षिणा ताभिर्भरद्वाजो याः प्रतीचीस्ताभिर्विश्वामित्रो या उदीचीस्ताभिर्जमदग्निर्या ऊर्ध्वास्ताभिर्विश्वकर्मा य एवमेतासामृद्धिं वेदर्ध्नोत्येव य आसामेवं बन्धुतां वेद बन्धुमान्भवति य आसामेवं क्लृप्तिं वेद कल्पते ( ५ ) अस्मै य आसामेवमायतनं वेदाऽऽयतनवान्भवति य आसामेवं प्रतिष्ठां वेद प्रत्येव

तिष्ठति प्राणभृत उपधायं संयत उपं दधाति प्राणानेवास्मिंन्धित्वा संयद्भिः सं यंच्छति तत्सं- यतांᳫं संयत्त्वमथो प्राण एवापानं दंधाति तस्मात्प्राणापानौ सं चंरतो विषूचीरुपं दधाति तस्माद्विष्वंञ्चौ प्राणापानौ यद्वा अग्नेरसंयतम् ( ६ ) असुवर्ग्यमस्य तत्सुवर्ग्योऽग्निर्यत्संयत उपदधाति समेवैनं यच्छति सुवर्ग्यमेवाकर्त्र्य- विर्वयः कृतमयानामित्याह वयोभिरेवायानव रुन्धेऽयैर्वयाᳫंसि सर्वतो वायुमतीर्भवन्ति तस्मा- दयᳫं सर्वतः पवते ( ७ ) ॥

( पश्चादेताः पुरोऽक्षणया कल्पतेऽसंयतं पञ्चत्रिᳫंशच्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां पञ्चमाष्टके द्वितीयप्रपाठके दशमोऽनुवाकः ॥ १० ॥

---

( अथ पञ्चमाष्टके द्वितीयप्रपाठके दशमोऽनुवाकः । )

---

पशुः । वै । एषः । यत् । अग्निः । योनिः । खलु । वै । एषा । पशोः । वीति । क्रियते । यत् । प्राचीनम् । ऐष्टकात् । यजुः । क्रियते । रेतः । अपस्याः । अपस्याः । उपेति । दधाति । योनौ । एव । रेतः । दधाति । पञ्च । उपेति । दधाति । पाङ्क्ताः । पशवः । पशून् । एव । अस्मै । प्रेति । जनयति ।

पञ्च । दक्षिणतः । वज्रः । वै । अपस्याः । वज्रेण । एव । यज्ञस्य । दक्षिणतः । रक्षांसि । अपेति । हन्ति । पञ्च । पश्चात् ( १ ) । प्राचीः । उपेति । दधाति । पश्चात् । वै । प्राचीनम् । रेतः । धीयते । पश्चात् । एव । अस्मै । प्राचीनम् । रेतः । दधाति । पञ्च । पुरस्तात् । प्रतीचीः । उपेति । दधाति । पञ्च । पश्चात् । प्राचीः । तस्मात् । प्राचीनम् । रेतः । धीयते । प्रतीचीः । प्रजा इति प्र—जाः । जायन्ते । पञ्च । उत्तरत इत्युत्—तरतः । छन्दस्याः । पशवः । वै । छन्दस्याः । पशून् । एव । प्रजातानिति प्र—जातान् । स्वम् । आयतनमित्या—यतनम् । अभि । परीति । ऊहते । इयम् । वै । अग्नेः । अतिदाहादित्यति—दाहात् । अबिभेत् । सा । एताः ( २ ) । अपस्याः । अपश्यत् । ताः । उपेति । अधत्त । ततः । वै । इमाम् । न । अतीति । अदहत् । यत् । अपस्याः । उपदधातीत्युप—दधाति । अस्याः । अनतिदाहायेत्यनति—दाहाय । उवाच । ह । इयम् । अदत् । इत् । सः । ब्रह्मणा । अन्नम् । यस्य । एताः । उपधीयान्ता इत्युप—धीयान्तै । यः । उ । च । एनाः । एवम् । वेदत् । इति । प्राणभृत इति प्राण—भृतः ।

उपेति । दधाति । रेतःसि । एव । प्राणानिति प्र—अनान् । दधाति । तस्मात् । वदन् । प्राणन्निति प्र—अनन् । पश्यन् । शृण्वन् । पशुः । जायते । अयम् । पुरः ( ३ )। भुवः । इति । पुरस्तात् । उपेति । दधाति । प्राणमिति प्र—अनम् । एव । एताभिः । दाधार । अयम् । दक्षिणा । विश्वकर्मेति विश्व—कर्मा । इति । दक्षिणतः । मनः । एव । एताभिः । दाधार । अयम् । पश्चात् । विश्वव्यचा इति विश्व—व्यचाः । इति । पश्चात् । चक्षुः । एव । एताभिः । दाधार । इदम् । उत्तरादित्युत्—तरात् । सुवः । इति । उत्तरत इत्युत्—तरतः । श्रोत्रम् । एव । एताभिः । दाधार । इयम् । उपरि । मतिः । इति । उपरिष्टात् । वाचम् । एव । एताभिः । दाधार । दशदशेति दश—दश । उपेति । दधाति । सवीर्यत्वायेति सवीर्य—त्वाय । अक्ष्णया ( ४ )। उपेति । दधाति । तस्मात् । अक्ष्णया । पशवः । अङ्गानि । प्रेति । हरन्ति । प्रतिष्ठित्या इति प्रति—स्थित्यै । याः । प्राचीः । ताभिः । वसिष्ठः । आर्ध्नोत् । याः । दक्षिणा । ताभिः । भरद्वाजः । याः । प्रतीचीः । ताभिः । विश्वामित्र इति विश्व—मित्रः । याः । उ-

दीचीः । ताभिः । जमदग्निः । याः । ऊर्ध्वाः । ताभिः । विश्वकर्मेति विश्व—कर्मा । यः । एवम् । एतासाम् । ऋद्धिम् । वेद । ऋध्नोति । एव । यः । आसाम् । एवम् । बन्धुताम् । वेद । बन्धुमानिति बन्धु—मान् । भवति । यः । आसाम् । एवम् । क्लृप्तिम् । वेद । कल्पते ( ५ ) । अस्मै । यः । आसाम् । एवम् । आयतनमित्या—यतनम् । वेद । आयतनवानित्यायतन—वान् । भवति । यः । आसाम् । एवम् । प्रतिष्ठामिति प्रति—स्थाम् । वेद । प्रतीति । एव । तिष्ठति । प्राणभृत इति प्राण—भृतः । उपधायेत्युप—धाय । संयत इति सं—यतः । उपेति । दधाति । प्राणानिति प्र—अनान् । एव । अस्मिन् । धित्वा । संयद्भिरिति संयत्—भिः । समिति । यच्छति । तत् । संयतामिति सं—यताम् । संयत्त्वमिति संयत्—त्वम् । अथो इति । प्राण इति प्र—अने । एव । अपानमित्यप—अनम् । दधाति । तस्मात् । प्राणापानाविति प्राण—अपानौ । समिति । चरतः । विषूचीः । उपेति । दधाति । तस्मात् । विष्वञ्चौ । प्राणापानाविति प्राण—अपानौ । यत् । वै । अग्नेः । असंयतमित्यसं—यतम् ( ६ ) ।

असुवर्ग्यमित्यसुवः—ग्यम् । अस्य । तत् । सुवर्ग्य इति सुवः—ग्यः । अग्निः । यत् । संयत इति सं—यतः । उपदधातीत्युप—दधाति । समिति । एव । एनम् । यच्छति । सुवर्ग्यमिति सुवः—ग्यम् । एव । अकः । त्र्यविरिति त्रि—अविः । वयः । कृतम् । अयानाम् । इति । आह । वयोभिरिति वयः—भिः । एव । अयान् । अवेति । रुन्धे । अथैः । वयांऽसि । सर्वतः । वायुमतीरिति वायु—मतीः । भवन्ति । तस्मात् । अयम् । सर्वतः । पवते ( ७ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे पञ्चमाष्टके द्वितीयप्रपाठके दशमोऽनुवाकः ॥ १० ॥

( अथ पञ्चमाष्टके द्वितीयप्रपाठक एकादशोऽनुवाकः । )

गायत्री त्रिष्टुब्जगत्यनुष्टुक्पङ्क्त्या सह ।
बृहत्युष्णिहा ककुत्सूचीभिः शिम्यन्तु त्वा ।
द्विपदा या चतुष्पदा त्रिपदा या च षट्पदा ।
सछन्दा या च विच्छन्दाः सूचीभिः शिम्यन्तु त्वा । महानाम्नी रेवतयो विश्वा आशाः प्रसूवरीः ।
मेघ्या विद्युतो वाचः सूचीभिः शिम्यन्तु त्वा ।
रजता हरिणीः सीसा युजो युज्यन्ते कर्मभिः ।

( सूचीभिरसिपथक्लृप्तिः )

अश्वंस्य वाजिनंस्त्वचि सूचीभिः शिम्यन्तु त्वा। नारीः ( १ ) ते पत्नयो लोम वि चिंन्वन्तु मनीषयां । देवानां पत्नीर्दिशंः सूचीभिंः शिम्यन्तु त्वा। कुविदङ्ग यवंमन्तो यवं चिद्यथा दान्त्यंनुपूर्वं वियूयं। इहेहैंषां कृणुत भोजंनानि ये बर्हिषो नमोंवृक्तिं न जग्मुः ( २ ) ॥

( नारींस्त्रिंशच्चं । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां पञ्चमाष्टके द्वितीयप्रपाठक एकादशोऽनुवाकः ॥ ११ ॥

---

( अथ पञ्चमाष्टके द्वितीयप्रपाठक एकादशोऽनुवाकः । )

---

गायत्री । त्रिष्टुप् । जगंती । अनुष्टुगित्यंनु—स्तुक्। पङ्क्त्यां । सह । बृहती । उष्णिहां । ककुप् । सूचींभिः। शिम्यन्तु। त्वा । द्विपदेतिं द्वि—पदां । या । चतुंष्पदेति चतुंः—पदा । त्रिपदेतिं त्रि—पदां। या । च। षट्पदेति षट्—पदा। सछंन्दा इति स—छन्दाः। या । च । विच्छंन्दा इति वि—छन्दाः । सूचींभिः । शिम्यन्तु । त्वा । महानांम्नीरिति महा—नाम्नीः । रेवतंयः । विश्वांः । आशांः । प्रसूवंरीरिति प्र—सूवंरीः। मेघ्यांः । विद्युत इतिं वि—द्युतंः । वाचंः। सूचींभिः ।

( सूचीभिरसिपथकृप्तिः )

शिम्यन्तु । त्वा । रजताः । हरिणीः । सीसाः । युजः । युज्यन्ते । कर्मभिरिति कर्म—भिः । अश्वस्य । वाजिनः । त्वचि । सूचीभिः । शिम्यन्तु । त्वा । नारीः (१) । ते । पत्नयः । लोम । वीति । चिन्वन्तु । मनीषया । देवानाम् । पत्नीः । दिशः । सूचीभिः । शिम्यन्तु । त्वा । कुवित् । अङ्ग । यवमन्त इति यव—मन्तः । यवम् । चित् । यथा । दान्ति । अनुपूर्वमित्यनु—पूर्वम् । वियूयेति वि—यूय । इहेहेतीह—इह । एषाम् । कृणुत । भोजनानि । ये । बर्हिषः । नमोवृक्तिमिति नमः—वृक्तिम् । न । जगमुः ॥ ( २ )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे पञ्चमाष्टके द्वितीयप्रपाठक एकादशोऽनुवाकः ॥ ११ ॥

---

( अथ पञ्चमाष्टके द्वितीयः प्रपाठकः । )

---

( तत्र प्रथमाद्येकादशान्ता अनुवाकाः । )

---

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥
उख्याग्निः प्रथमे प्रोक्तो द्वितीये चित्युपक्रमः ।
द्वादशात्रानुवाकाः स्युरासन्द्यां वक्ष्यवस्थितिः ॥ २ ॥
वात्सप्रेणाप्युपस्थानं प्रथमे समुदीरितम् ।
द्वितीये तूख्यनयनं गार्हपत्यं चिनोति हि ॥ ३ ॥

तृतीये तु चतुर्थे तु उख्याग्निं तत्र संवपेत् ।
पञ्चमे कृषति क्षेत्रं षष्ठेऽत्र सिकतादिकम् ॥ ४ ॥
वपेद्रुक्माद्युपादध्यात्सप्तमे चाष्टमे पुनः ।
स्थापयेत्स्वयमातृण्णामुखादीन्नवमे तथा ॥ ५ ॥
अपस्याश्च प्राणभृतस्तथाऽपानभृतश्चितौ ।
प्रथमायामुपादध्याद्दशमे तत्समीरितम् ॥ ६ ॥
एकादशद्वादशौ तु विज्ञेयावाश्वमेधिकौ ।
अश्वस्यासिपथाः कल्प्या गायत्रीत्यादिमन्त्रकैः ॥
कस्त्वेत्यसिपथे[1]ऽश्वस्याऽऽच्छ्येत्त्वचं कृष्यतो[2] द्वयम् ॥ ७॥

कल्पः--" गायत्री त्रिष्टुबिति द्वाभ्यां सौवर्णीभिः सूचीभिर्[3]महिष्यश्वस्यासिपथान्कल्पयति प्राक्क्रोडात् " इति ।

राज्ञः पत्न्यस्त्रिविधा उत्तमा मध्यमाऽधमा चेति । ताश्च महिषी वावाता परिवृक्तीत्येतन्नामधेयाः । ताश्च मृतस्याश्वस्यासिना छेदनाय तत्तत्स्थानेषु रेखाः सूचीभिः कुर्युः ।

तत्र महिष्याः प्रथमामृचमाह—

गायत्री त्रिष्टुब्जगत्यनुष्टुक्पङ्क्त्या सह । बृहत्युष्णिहा ककुत्सूचीभिः शिम्यन्तु त्वा ।, इति ।

गायत्र्यादिककुदन्तैः शब्दैरभिधेयाश्छन्दोदेवता हेऽश्व त्वां सौवर्णसूचीभिः शिम्यन्तु लिखन्तु ॥

अथ द्वितीयामृचमाह—

द्विपदा या चतुष्पदा त्रिपदा या च षट्पदा । सछन्दा या च विच्छन्दाः सूचीभिः शिम्यन्तु त्वा । , इति ।

द्विपदादिरूपाणां मन्त्राणामभिमानिन्यस्तन्नामिका देवतास्त्वां सूचीभिः शिम्यन्तु लिखन्तु ॥

कल्पः–"एवमुत्तराभ्यां राजतीभिर्वावाता प्रत्यक्क्रोडात्प्राङ्नाभेः" इति ।

यथा महिषी क्रोडात्प्राचीने मुखभागे लिखति एवं वावाता क्रोडनाभ्योर्मध्येऽनन्तरभाविना मन्त्रद्वयेन लिखेत् ।

---

१ ख. °थे छित्त्वा त्वचमाकृष्यतो द्व° । २ क. घ. ङ. °ष्यतो द्व° । ३ घ. ङ. च. सूचितसूची° ।

( सूचीभिरसिपथक्लृप्तिः )

तत्र प्रथममाह—

महानाम्नी रेवतयो विश्वा आशाः
प्रसूवरीः। मेघ्या विद्युतो वाचः
सूचीभिः शिम्यन्तु त्वा।, इति।

महत्त्वोद्दं देवेष्वत्यन्तं प्रसिद्धं नाम यासां देवतानां ता महानाम्न्य एतन्नामधेयाः काश्चिद्देवताः। तथा रेवतयो धनवत्य एतन्नामिका देवताः। तथा प्रसूवरीः सर्वप्रसवहेतुभूता विश्वा आशाः सर्वा दिशो दिग्देवताः। तथा मेघेषु भवा मेघ्या विद्युदभिमानिन्यो देवताः। तथा वाचो गर्जनाभिमानिन्यो देवता हेऽश्व त्वां राजतीभिः सूचीभिः शिम्यन्तु लिखन्तु॥

अथ द्वितीयमाह—

रजता हरिणीः सीसा युजो युज्यन्ते
कर्मभिः। अश्वस्य वाजिनस्त्वचि
सूचीभिः शिम्यन्तु त्वा।, इति।

रजता रौप्याः। हरिणीर्हिरण्मयाः। सीसा लोहमय्यः। युजो लेखनकर्मयोग्याः सूच्यः। अत एव वाजिनोऽन्नहेतोरश्वस्य त्वचि कर्मभिर्लेखनादिव्यापारैर्युज्यन्ते तादृशीभिः सूचीभिर्हेऽश्व त्वां लेखनकुशला देवताः शिम्यन्तु लिखन्तु॥

कल्पः—"एवमुत्तराभ्यां लौहीभिः सीसाभिर्वा परिवृक्ती शेषम्" इति।

तत्र प्रथमा—

नारीस्ते पत्नयो लोम वि चिन्वन्तु
मनीषया। देवानां पत्नीर्दिशः
सूचीभिः शिम्यन्तु त्वा।, इति।

हेऽश्व नारीर्महिष्यादयो नार्यः पत्नयो राजपत्न्यस्ता मनीषया स्वबुध्या लोमानि विचिन्वन्तु असिपथसिद्ध्ये त्वदीयं लोमजातमपनयन्तु पृथक्कुर्वन्तु। तथा देवानां पत्नीः सेनेन्द्रस्येत्याद्यनुवाकोक्ता देवपत्न्यः। तथा दिशो दिग्देवताः सूचीभिर्लौहीभिरेताभिस्त्वां शिम्यन्तु॥

अथ द्वितीयामाह—

---

१ ख. घ. ङ. च. 'क्तीति शे'।

कुविदङ्ग यवमन्तो यवं चिद्यथा दान्त्यनु-
पूर्वं वियूय । इहेहैषां कृणुत भोजनानि ये
बर्हिषो नमोवृक्तिं न जग्मुः ॥ , इति ॥

अङ्गशब्दः प्रियसंबोधनवाची । हे प्रिया अश्वमेधहविर्भाजो देवा ये यज्वानो बर्हिषो यागस्य नमोवृक्तिं नमस्कारविनाशनं न जग्मुर्न प्रापुः किंतु अत्यन्तश्रद्धालवोऽनुतिष्ठन्ति तेषामेषां यज्वनां हविर्विषयाणि भोजनानीहेह कृणुत । यज्ञानामेकैकत्वं वीप्सा । तत्रोपमानमुच्यते । कुविच्छब्दो बह्वर्थवाची । चिच्छब्दः समुच्चये । यथा लोके यवमन्तो यवादिधान्योपेताः कृषिकाः कुविद्यवंचिद्बहुलं यवमन्यानि च गोधूमप्रियङ्ग्वादिधान्यान्यनुपूर्वं तत्तत्परिपाकानुक्रमेण वियूयेदं पक्वमिदमपक्वमिति विशेषेण पृथक्कृत्य दान्ति लुनन्ति, तथा यूयमपि नमस्कारादिरहितो नास्तिकोऽयं यज्वा श्रद्धालुरयं यज्वेति विविच्य श्रद्धालोर्हवींषि भुङ्ग्ध्वम् ॥

अत्र विनियोगसंग्रहः—

गायद्भ्यां तु महिषी वावाता तु महाद्वयात् ।
परिवृक्ती तु नाद्भ्यां कल्पयेयुरसेः पथः ॥ १ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये पञ्चमकाण्डे द्वितीयप्रपाठके प्रथमाद्येकादशान्ता अनुवाकाः ॥ १–११ ॥

---

(अथ पञ्चमाष्टके द्वितीयप्रपाठके द्वादशोऽनुवाकः ।)

---

कस्त्वां छ्यति कस्त्वा वि शास्ति कस्ते
गात्रांणि शिम्यति । क उं ते शमिता कविः ।
ऋतवस्त ऋतुधा परुः शमितारो वि शासतु ।
संवत्सरस्य धायसा शिमींभिः शिम्यन्तु त्वा ।
दैव्यां अध्वर्यवस्त्वा छ्यन्तु वि चं शासतु ।

---

१ ख. 'कत्वे वी' ।

गात्राणि पर्वशस्ते शिमाः कृण्वन्तु शिम्यन्तः । अर्धमासाः परूंषि ते मासाश्छ्यन्तु शिम्यन्तः । अहोरात्राणि मरुतो विलिष्टम् ( १ ) सूदयन्तु ते । पृथिवी तेऽन्तरिक्षेण वायुश्छिद्रं भिषज्यतु । द्यौस्ते नक्षत्रैः सह रूपं कृणोतु साधुया । शं ते परेभ्यो गात्रेभ्यः शमस्त्ववरेभ्यः । शमस्थभ्यो मज्जभ्यः शमु ते तनुवे भुवत् ( २ ) ॥

( विलिष्टं त्रिंशच्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां पञ्चमाष्टके द्वितीयप्रपाठके द्वादशोऽनुवाकः ॥ १२ ॥

---

विष्णुमुखा अन्नपते यावती वै वि वै पुरुषमात्रेणाग्ने तव श्रवो वयो ब्रह्म जज्ञानꣳ स्वयमातृण्णामेषां वै पशुर्गायत्री कस्त्वा द्वादश ॥ १२ ॥

विष्णुमुखा अपचितिमान्वि वा एतावग्ने तव श्रवः स्वयमातृण्णां विषूचीनानि गायत्री चतुःषष्टिः ॥ ६४ ॥

हरिः ॐ ।

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां पञ्चमाष्टके द्वितीयः प्रपाठकः ॥ २ ॥

---

( अथ पञ्चमाष्टके द्वितीयप्रपाठके द्वादशोऽनुवाकः । )

---

कः । त्वा । छ्यति । कः । त्वा । वीति । शा-

स्ति । कः । ते । गात्राणि । शिम्यति । कः । उ । ते । शमिता । कविः । ऋतवः । ते । ऋतुधेत्यृतु—धा । परुः । शमितारः । वीति । शासतु । संवत्सरस्येति सं—वत्सरस्य । धायसा । शिमीभिः । शिम्यन्तु । त्वा । दैव्याः । अध्वर्यवः । त्वा । छ्यन्तु । वीति । च । शासतु । गात्राणि । पर्वश इति पर्व—शः । ते । शिमाः । कृण्वन्तु । शिम्यन्तः । अर्धमासा इत्यर्ध—मासाः । परूंषि । ते । मासाः । छ्यन्तु । शिम्यन्तः । अहोरात्राणीत्यहः—रात्राणि । मरुतः । विलिष्टमिति वि—लिष्टम् ( १ ) । सूदयन्तु । ते । पृथिवी । ते । अन्तरिक्षेण । वायुः । छिद्रम् । भिषज्यतु । द्यौः । ते । नक्षत्रैः । सह । रूपम् । कृणोतु । साधुया । शम् । ते । परेभ्यः । गात्रेभ्यः । शम् । अस्तु । अवरेभ्यः । शम् । अस्थभ्य इत्यस्थ—भ्यः । मज्जभ्य इति मज्ज—भ्यः । शम् । उ । ते । तनुवे । भुवत् ( २ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे पञ्चमाष्टके द्वितीयप्रपाठके द्वादशोऽनुवाकः ॥ १२ ॥

हरिः ॐ ।

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे पञ्चमाष्टके द्वितीयः प्रपाठकः ॥ २ ॥

( विशसनाभिधानम् )

( अथ पञ्चमकाण्डे द्वितीयप्रपाठके द्वादशोऽनुवाकः । )

एकादशानुवाके सूचीभिरसिपथक्लृप्तिरभिहिता । अथ द्वादशे विशसनमुच्यते । कल्पः—"कस्त्वा छ्यति कस्त्वा विशास्तीत्यश्वस्य त्वचमाच्छ्यति" इति।

तस्मिन्ननुवाके प्रथमामृचमाह—

कस्त्वा छ्यति कस्त्वा वि शास्ति कस्ते गात्राणि शिम्यति । क उ ते शमिता कविः । , इति।

हेऽश्व त्वां कः प्रजापतिश्छ्यति छिनत्ति । छित्त्वा चानन्तरं कः प्रजापतिरेव त्वां विशास्ति त्वदवयवान्विभज्य स्थापयति । ततः कः प्रजापतिरेव ते गात्राण्यवयवाञ्शिम्यति शमयति सुरक्षितानि करोतीत्यर्थः । कविर्विद्वानर्थज्ञश्छेदनाद्यभिज्ञः क उ प्रजापतिरेव ते तव शमिता न त्वितरपशुवदन्यः कश्चिन्मनुष्यः ॥

अथ द्वितीयामाह—

ऋतवस्त ऋतुधा परुः शमितारो वि शासतु । संवत्सरस्य धायसा शिमीभिः शिम्यन्तु त्वा । , इति।

ऋतवो वसन्तादयो देवाः शमितारो भूत्वर्तुधा तत्तदृतुकाले ते परुस्त्वदीयं पर्व विशासतु विविधं स्थापयन्तु । संवत्सरस्य धायसा धारणेन शिमीभिः शमनहेतुभिः क्रियाभिस्त्वा त्वां शिम्यन्तु शमयन्तु ऋतुदेवा एव संवत्सरधारकाः सन्तस्तत्तत्कालोचितव्यापारैस्त्वां देवयोग्यं कुर्वन्त्वित्यर्थः ॥

अथ तृतीयामाह—

दैव्या अध्वर्यवस्त्वा छ्यन्तु वि च शासतु । गात्राणि पर्वशस्ते शिमाः कृण्वन्तु शिम्यन्तः । ,इति।

देवेषु भवा दैव्या अध्वर्यवो द्युप्रभृतयः । "द्यौरध्वर्युः" । "अश्विनाऽध्वर्यू" । "सत्यहविरध्वर्युः" । इति श्रुतेः । तादृशाः सर्वे त्वां छ्यन्तु शस्त्रेण च्छिन्दन्तु । किं च विशासतु विविधं स्थापयन्तु । शिमाः शमनहेतवः सन्तस्ते गात्राणि त्वदीयानवयवान्पर्वशस्तत्तत्पर्वानुसारेण शिम्यन्तः शमयन्तो रक्षन्तः कृण्वन्तु तत्र तत्रोचितं व्यापारं कुर्वन्तु ॥

अथ चतुर्थीमाह—

अर्धमासाः परूꣳषि ते मासाश्छ्य-
न्तु शिम्यन्तः । अहोरात्राणि मरुतो
विलिष्टꣳ सूदयन्तु ते । , इति ।

अर्धमासा मासाश्च देवतास्ते परूंषि शिम्यन्तः शमयन्तो रक्षन्तश्छ्यन्तु च्छिन्दन्तु । तथाऽहोरात्राणि तदभिमानिनी देवता मरुतश्च ते सर्वेऽपि विलिष्टं विनाशितमङ्गं सूदयन्तु स्वादू कुर्वन्तु ॥

अथ पञ्चमीमाह—

पृथिवी तेऽन्तरिक्षेण वायुश्छिद्रं भिषज्यतु ।
द्यौस्ते नक्षत्रैः सह रूपं कृणोतु साधुया। ,इति ।

हेऽश्व ते छिद्रं त्वदीयं विनष्टमङ्गमन्तरिक्षेण सहिता पृथिवी भिषज्यतु समादधातु । वायुश्च भिषज्यतु । इयं द्यौर्नक्षत्रैः सहिता ते रूपं त्वदीयं स्वरूपभूतमिदं हविः साधुया साधु समीचीनं यथा भवति तथा कृणोतु करोतु ॥

अथ षष्ठीमाह—

शं ते परेभ्यो गात्रेभ्यः शमस्त्ववरेभ्यः । शम-
स्थभ्यो मज्जभ्यः शमु ते तनुवे भुवत् ॥ ,इति ॥

हेऽश्व ते तव परेभ्यो गात्रेभ्य उत्कृष्टेभ्योऽवयवेभ्यः शं सुखमस्तु । तथाऽवरेभ्यो निकृष्टेभ्योऽवयवेभ्यः शमस्तु । तथाऽस्थभ्यस्त्वदीयेभ्योऽस्थिभ्यो मज्जभ्यश्च शमस्तु । तथा ते तनुवे शरीराय शमु भुवत्सुखमेव भवतु ॥

अत्र विनियोगसंग्रहः—

कस्त्वेतिमन्त्रषट्केन ह्यश्वस्य त्वचमाच्छ्यति ॥ १ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये पञ्चमकाण्डे द्वितीयप्रपाठके
द्वादशोऽनुवाकः ॥ १२ ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थाश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥ १ ॥

इति श्रीमद्विद्यातीर्थमहेश्वरापरावतारस्य श्रीमद्राजाधिराजपरमेश्वरस्य श्रीवीरबुक्कमहाराजस्याऽऽज्ञापरिपालकेन माधवाचार्येण विरचिते वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये
पञ्चमकाण्डे द्वितीयः प्रपाठकः ॥ २ ॥

( अथ पञ्चमाष्टके तृतीयः प्रपाठकः । )

( तत्र प्रथमोऽनुवाकः । )

हरिः ॐ ।

* उत्सन्नयज्ञो वा एष यदग्निः किं वाऽहैतस्य क्रियते किं वा न यद्वै यज्ञस्य क्रियमाणस्यान्तर्यन्ति पूयति वा अस्य तदाश्विनीरुप दधात्यश्विनौ वै देवानां भिषजौ ताभ्यामेवास्मै भेषजं करोति पञ्चोप दधाति पाङ्क्तो यज्ञो यावानेव यज्ञस्तस्मै भेषजं करोत्यृतव्या उप दधात्यृतूनां क्लृप्त्यै ( १ ) पञ्चोप दधाति पञ्च वा ऋतवो यावन्त एवर्तवस्तान्कल्पयति समानप्रभृतयो भवन्ति समानोदर्कास्तस्मात्समाना ऋतव एकेन पदेन व्यावर्तन्ते तस्मादृतवो व्यावर्तन्ते प्राणभृत उप दधात्यृतुष्वेव प्राणान्दधाति तस्मात्समानाः सन्त ऋतवो न जीर्यन्त्यथो प्र जनयत्येवैनानेष वै वायुर्यत्प्राणो यदृतव्या उपधाय प्राणभृतः ( २ ) उपदधाति

* एतदाद्येकादशानुवाकाश्चतुर्थकाण्डगततृतीयप्रपाठकस्थचतुर्थानुवाकमारभ्य तद्गतचतुर्थप्रपाठकस्थसप्तमानुवाकपर्यन्तेन मूलेन सह व्याख्याता इत्यत्र पुनर्भाष्यकृता न व्याख्याताः ।

तस्मात्सर्वानृतूनन्नु वायुरा वरीवर्ति वृष्टिसनीरुप दधाति वृष्टिमेवाव रुन्धे यदेकधोपदध्यादेकमृतुं वर्षेदनुपरिहारꣳ सादयति तस्मात्सर्वानृतून्वर्षति यत्प्राणभृत उपधाय वृष्टिसनीरुपदधाति तस्माद्वायुप्रच्युता दिवो वृष्टिरीर्ते पशवो वै वयस्या नानामनसः खलु वै पशवो नानाव्रतास्तेऽप एवाभि समनसः ( ३ ) यं कामयेतापशुः स्यादिति वयस्यास्तस्योपधायापस्या उप दध्यादसंज्ञानमेवास्मै पशुभिः करोत्यपशुरेव भवति यं कामयेत पशुमान्त्स्यादित्यपस्यास्तस्योपधाय वयस्या उप दध्यात्संज्ञानमेवास्मै पशुभिः करोति पशुमानेव भवति चतस्रः पुरस्तादुप दधाति तस्माच्चत्वारि चक्षुषो रूपाणि द्वे शुक्ले द्वे कृष्णे ( ४ ) मूर्धन्वतीर्भवन्ति तस्मात्पुरस्तान्मूर्धा पञ्च दक्षिणायाꣳ श्रोण्यामुप दधाति पञ्चोत्तरस्यां तस्मात्पश्चाद्वर्षीयान्पुरस्तात्प्रवणः पशुर्बस्तो वय इति दक्षिणेऽꣳस उप दधाति वृष्णिर्वय इत्युत्तरेऽꣳसावेव प्रति दधाति व्याघ्रो वय इति दक्षिणे पक्ष उप दधाति सिꣳहो वय इत्युत्तरे पक्ष-

(द्वितीयचितिगताश्विन्यादीष्टकाचतुष्टयाभिधानम्)

येरेव वीर्यं दधाति पुरुषो वय इति मध्ये तस्मात्पुरुषः पशूनामधिपतिः (५)॥

(क्लृप्त्यां उपधार्य प्राणभृतः समनसः कृष्णे पुरुषो वय इति पञ्च च)।

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां पञ्चमाष्टके तृतीयप्रपाठके प्रथमोऽनुवाकः ॥ १ ॥

---

(अथ पञ्चमाष्टके तृतीयः प्रपाठकः)

---

(तत्र प्रथमोऽनुवाकः।)

---

हरिः ॐ।

उत्सन्नयज्ञ इत्युत्सन्न—यज्ञः। वै। एषः। यत्। अग्निः। किम्। वा। अह। एतस्य। क्रियते। किम्। वा। न। यत्। वै। यज्ञस्य। क्रियमाणस्य। अन्तर्यन्तीत्यन्तः—यन्ति। पूयति। वै। अस्य। तत्। आश्विनीः। उपेति। दधाति। अश्विनौ। वै। देवानाम्। भिषजौ। ताभ्याम्। एव। अस्मै। भेषजम्। करोति। पञ्च। उपेति। दधाति। पाङ्क्तः। यज्ञः। यावान्। एव। यज्ञः। तस्मै। भेषजम्। करोति। ऋतव्याः। उपेति। दधाति। ऋतूनाम्। क्लृप्त्यै (१)। पञ्च। उपेति। दधाति। पञ्च। वै। ऋतवः। यावन्तः। एव। ऋतवः। तान्। कल्पयति। समानप्रभृतय इति समान—प्रभृतयः। भव-

न्ति । समानोदर्का इति समान—उदर्काः । तस्मात् । समानाः । ऋतवः । एकेन । पदेन । व्यावर्तन्त इति वि—आवर्तन्ते । तस्मात् । ऋतवः । व्यावर्तन्त इति वि—आवर्तन्ते । प्राणभृत इति प्राण—भृतः । उपेति । दधाति । ऋतुषु । एव । प्राणानिति प्र—अनान् । दधाति । तस्मात् । समानाः । सन्तः । ऋतवः । न । जीर्यन्ति । अथो इति । प्रेति । जनयति । एव । एनान् । एषः । वै । वायुः । यत् । प्राण इति प्र—अनः । यत् । ऋतव्याः । उपधायेत्युप—धाय । प्राणभृत इति प्राण—भृतः ( २ ) । उपदधातीत्युप—दधाति । तस्मात् । सर्वान् । ऋतून् । अन्विति । वायुः । एति । वरीवर्ति । वृष्टिसनीरिति वृष्टि—सनीः । उपेति । दधाति । वृष्टिम् । एव । अवेति । रुन्धे । यत् । एकधेत्येक—धा । उपदध्यादित्युप—दध्यात् । एकम् । ऋतुम् । वर्षेत् । अनुपरिहारमित्यनु—परिहारम् । सादयति । तस्मात् । सर्वान् । ऋतून् । वर्षति । यत् । प्राणभृत इति प्राण—भृतः । उपधायेत्युप—धाय । वृष्टिसनीरिति वृष्टि—सनीः । उपदधातीत्युप—दधाति । तस्मात् । वायुप्रच्युतेति वायु—प्रच्युता । दिवः ।

वृष्टिः । ईर्ते । पशवः । वै । वयस्याः । नानामनस इति नाना—मनसः । खलु । वै । पशवः । नानाव्रता इति नाना—व्रताः । ते । अपः । एव । अभीति । समनस इति स—मनसः ( ३ ) । यम् । कामयेत । अपशुः । स्यात् । इति । वयस्याः । तस्य । उपधायेत्युप—धाय । अपस्याः । उपेति । दध्यात् । असंज्ञानमित्यसं—ज्ञानम् । एव । अस्मै । पशुभिरिति पशु—भिः । करोति । अपशुः । एव । भवति । यम् । कामयेत । पशुमानिति पशु—मान् । स्यात् । इति । अपस्याः । तस्य । उपधायेत्युप—धाय । वयस्याः । उपेति । दध्यात् । संज्ञानमिति सं—ज्ञानम् । एव । अस्मै । पशुभिरिति पशु—भिः । करोति । पशुमानिति पशु—मान् । एव । भवति । चतस्रः । पुरस्तात् । उपेति । दधाति । तस्मात् । चत्वारि । चक्षुषः । रूपाणि । द्वे इति । शुक्ले इति । द्वे इति । कृष्णे इति ( ४ ) । मूर्धन्वतीरिति मूर्धन्—वतीः । भवन्ति । तस्मात् । पुरस्तात् । मूर्धा । पञ्च । दक्षिणायाम् । श्रोण्याम् । उपेति । दधाति । पञ्च । उत्तरस्यामित्युत्—तरस्याम् । तस्मात् । पश्चात् । वर्षीयान् । पुरस्तात्प्रवण इति पुरस्तात्—

प्रवणः । पशुः । बस्तः । वयः । इति । दक्षिणे । अꣳसे । उपेति । दधाति । वृष्णिः । वयः । इति । उत्तर इत्युत्—तरे । अꣳसौ । एव । प्रतीति । दधाति । व्याघ्रः । वयः । इति । दक्षिणे । पक्षे । उपेति । दधाति । सिꣳहः । वयः । इति । उत्तर इत्युत्—तरे । पक्षयोः । एव । वीर्यम् । दधाति । पुरुषः । वयः । इति । मध्ये । तस्मात् । पुरुषः । पशूनाम् । अधिपतिरित्यधि—पतिः ( ५ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे पञ्चमाष्टके तृतीयप्रपाठके प्रथमोऽनुवाकः ॥ १ ॥

---

( अथ पञ्चमाष्टके तृतीयप्रपाठके द्वितीयोऽनुवाकः । )

---

इन्द्राग्नी अव्यथमानामिति स्वयमातृण्णामुप दधातीन्द्राग्निभ्यां वा इमौ लोकौ विधृतावनयोर्लोकयोर्विधृत्या अधृतेव वा एषा यन्मध्यमा चितिरन्तरिक्षमिव वा एषेन्द्राग्नी इत्याहेन्द्राग्नी वै देवानामोजोभृतावोजसैवैनामन्तरिक्षे चिनुते धृत्यै स्वयमातृण्णामुप दधात्यन्तरिक्षं वै स्वयमातृण्णाऽन्तरिक्षमेवोप धत्तेऽश्वमुप ( १ ) घ्रापयति प्राणमेवास्यां दधात्यथो प्राजापत्यो वा अश्वः प्रजापतिनैवाग्निं चि-

नुते स्वयमातृण्णा भवति प्राणानामुत्सृष्ट्या अथो सुवर्गस्य लोकस्यानुख्यात्यै देवानां वै सुवर्गं लोकं यतां दिशः समव्लीयन्त त एता दिश्यां अपश्यन्ता उपादधत ताभिर्वै ते दिशोऽदृꣳहन्यद्दिश्यां उपदधाति दिशां विधृत्यै दश प्राणभृतः पुरस्तादुप (२) दधाति नव वै पुरुषे प्राणा नाभिर्दशमी प्राणानेव पुरस्ताद्धत्ते तस्मात्पुरस्तात्प्राणा ज्योतिष्मतीमुत्तमामुप दधाति तस्मात्प्राणानां वाग्ज्योतिरुत्तमा दशोप दधाति दशाक्षरा विराड्विराट्छन्दसां ज्योतिर्ज्योतिरेव पुरस्ताद्धत्ते तस्मात्पुरस्ताज्ज्योतिरुपाऽऽसमहे छन्दाꣳसि पशुष्वाजिमयुस्तान्बृहत्युदजयत्तस्माद्बार्हताः (३) पशव उच्यन्ते मा छन्द इति दक्षिणत उप दधाति तस्माद्दक्षिणावृतो मासाः पृथिवी छन्द इति पश्चात्प्रतिष्ठित्या अग्निर्देवतेत्युत्तरत ओजो वा अग्निरोज एवोत्तरतो धत्ते तस्मादुत्तरतोऽभिप्रयायी जयति षट्त्रिꣳशत्सं पद्यन्ते षट्त्रिꣳशदक्षरा बृहती बार्हताः पशवो बृहत्यैवास्मै पशूनव रुन्धे बृहती छन्द-

साꣳ स्वाराज्यं परीयाय यस्यैताः ( ४ ) उप-
धीयन्ते गच्छति स्वाराज्यꣳ सप्त वालखिल्याः
पुरस्तादुप दधाति सप्त पश्चात्सप्त वै शीर्षण्याः
प्राणा द्वाववाञ्चौ प्राणानाꣳ सवीर्यत्वायं मूर्धाऽ-
सि राडिति पुरस्तादुप दधाति यन्त्री राडिति
पश्चात्प्राणानेवास्मै समीचो दधाति ( ५ ) ॥

( अश्वमुपं पुरस्तादुप बार्हता एताश्चतुंस्त्रिꣳशच्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां पञ्चमाष्टके
तृतीयप्रपाठके द्वितीयोऽनुवाकः ॥ २ ॥

---

( अथ पञ्चमाष्टके तृतीयप्रपाठके द्वितीयोऽनुवाकः । )

---

इन्द्राग्नी इतीन्द्रं—अग्नी । अव्यंथमानाम् । इति ।
स्वयमातृण्णामिति स्वयम्—आतृण्णाम् । उपेति ।
दधाति । इन्द्राग्निभ्यामितीन्द्राग्नि—भ्याम् । वै । इमौ ।
लोकौ । विधृताविति वि—धृतौ । अनयोः । लो-
कयोः । विधृत्या इति वि—धृत्यै । अधृता । इव ।
वै । एषा । यत् । मध्यमा । चितिः । अन्तरिक्षम् ।
इव । वै । एषा । इन्द्राग्नी इतीन्द्रं—अग्नी । इति ।
आह । इन्द्राग्नी इतीन्द्र—अग्नी । वै । देवानाम् ।
ओजोभृताविंत्योजः—भृतौ । ओजसा । एव । एना-
म् । अन्तरिक्षे । चिनुते । धृत्यै । स्वयमातृण्णामिति

( स्वयमातृण्णाद्यभिधानम् )

स्वयम्—आतृण्णाम्। उपेति। दधाति। अन्तरिक्षम्। वै। स्वयमातृण्णेति स्वयम्—आतृण्णा। अन्तरिक्षम्। एव। उपेति। धत्ते। अश्वम्। उपेति (१)। घ्रापयति। प्राणमिति प्र—अनम्। एव। अस्याम्। दधाति। अथो इति। प्राजापत्य इति प्राजा—पत्यः। वै। अश्वः। प्रजापतिनेति प्रजा—पतिना। एव। अग्निम्। चिनुते। स्वयमातृण्णेति स्वयम्—आतृण्णा। भवति। प्राणानामिति प्र—अनानाम्। उत्सृष्ट्या इत्युत्—सृष्ट्यै। अथो इति। सुवर्गस्येति सुवः—गस्य। लोकस्य। अनुख्यात्या इत्यनु—ख्यात्यै। देवानाम्। वै। सुवर्गमिति सुवः—गम्। लोकम्। यताम्। दिशः। समिति। अव्लीयन्त। ते। एताः। दिश्याः। अपश्यन्। ताः। उपेति। अदधत। ताभिः। वै। ते। दिशः। अदृꣳहन्। यत्। दिश्याः। उपदधातीत्युप—दधाति। दिशाम्। विधृत्या इति वि—धृत्यै। दश। प्राणभृत इति प्राण—भृतः। पुरस्तात्। उपेति (२)। दधाति। नव। वै। पुरुषे। प्राणा इति प्र—अनाः। नाभिः। दशमी। प्राणानिति प्र—अनान्। एव।

पुरस्तात् । धत्ते । तस्मात् । पुरस्तात् । प्राणा इति प्र—अनाः । ज्योतिष्मतीम् । उत्तमामित्युत्—तमाम् । उपेति । दधाति । तस्मात् । प्राणानामिति प्र—अनानाम् । वाक् । ज्योतिः । उत्तमेत्युत्—तमा । दश । उपेति । दधाति । दशाक्षरेति दश—अक्षरा । विराडिति वि—राट् । विराडिति वि—राट् । छन्दसाम् । ज्योतिः । ज्योतिः । एव । पुरस्तात् । धत्ते । तस्मात् । पुरस्तात् । ज्योतिः । उपेति । आस्महे । छन्दांसि । पशुषु । आजिम् । अयुः । तान् । बृहती । उदिति । अजयत् । तस्मात् । बार्हताः ( ३ ) । पशवः । उच्यन्ते । मा । छन्दः । इति । दक्षिणतः । उपेति । दधाति । तस्मात् । दक्षिणावृत इति दक्षिणा—आवृतः । मासाः । पृथिवी । छन्दः । इति । पश्चात् । प्रतिष्ठित्या इति प्रति—स्थित्यै । अग्निः । देवता । इति । उत्तरत इत्युत्—तरतः । ओजः । वै । अग्निः । ओजः । एव । उत्तरत इत्युत्—तरतः । धत्ते । तस्मात् । उत्तरतोभिप्रयायीत्युत्तरतः—अभिप्रयायी । जयति । षट्त्रिंशदिति षट्—त्रिंशत् । समिति । पद्यन्ते । षट्त्रिंशदक्षरेति षट्त्रिंशत्—अक्षरा । बृहती ।

बार्हताः। पशवः। बृहत्या। एव। अस्मै। पशून्। अवेति। रुन्धे। बृहती। छन्दसाम्। स्वाराज्यमिति स्व—राज्यम्। परीति। इयाय। यस्य। एताः (४)। उपधीयन्त इत्युप—धीयन्ते। गच्छति। स्वाराज्यमिति स्व—राज्यम्। सप्त। वालखिल्या इति वाल—खिल्याः। पुरस्तात्। उपेति। दधाति। सप्त। पश्चात्। सप्त। वै। शीर्षण्याः। प्राणा इति प्र—अनाः। द्वौ। अवाञ्चौ। प्राणानामिति प्र—अनानाम्। सवीर्यत्वायेति सवीर्य—त्वाय। मूर्धा। असि। राट्। इति। पुरस्तात्। उपेति। दधाति। यन्त्री। राट्। इति। पश्चात्। प्राणानिति प्र—अनान्। एव। अस्मै। समीचः। दधाति (५)॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे पञ्चमाष्टके तृतीयप्रपाठके द्वितीयोऽनुवाकः॥ २॥

---

( अथ पञ्चमाष्टके तृतीयप्रपाठके तृतीयोऽनुवाकः। )

---

देवा वै यद्यज्ञेऽकुर्वत तदसुरा अकुर्वत ते देवा एता अक्ष्णयास्तोमीया अपश्यन्ता अन्यथाऽनूच्यान्यथोपादधत तदसुरा नान्ववा-यन्ततो देवा अभवन्पराऽसुरा यदक्ष्णयास्तो-

मीयां अन्यथाऽनूच्यान्यथोपदधाति भ्रातृव्याभिभूत्यै भवत्यात्मना पराऽस्य भ्रातृव्यो भवत्याशुस्त्रिवृदिति पुरस्तादुप दधाति यज्ञमुखं वै त्रिवृत् ( १ ) यज्ञमुखमेव पुरस्ताद्वि यातयति व्योम सप्तदश इति दक्षिणतोऽन्नं वै व्योमान्नꣳ सप्तदशोऽन्नमेव दक्षिणतो धत्ते तस्माद्दक्षिणेनान्नमद्यते धरुणं एकविꣳश इति पश्चात्प्रतिष्ठा वा एकविꣳशः प्रतिष्ठित्यै भान्तः पञ्चदश इत्युत्तरत ओजो वै भान्त ओजः पञ्चदश ओज एवोत्तरतो धत्ते तस्मादुत्तरतोभिप्रयायी जयति प्रतूर्तिरष्टादश इति पुरस्तात् (२) उप दधाति द्वौ त्रिवृतावभिपूर्वं यज्ञमुखे वि यातयत्यभिवर्तः सविꣳश इति दक्षिणतोऽन्नं वा अभिवर्तोऽन्नꣳ सविꣳशोऽन्नमेव दक्षिणतो धत्ते तस्माद्दक्षिणेनान्नमद्यते वर्चो द्वाविꣳश इति पश्चाद्यद्विꣳशतिर्द्वे तेन विराजौ यद्द्वे प्रतिष्ठा तेन विराजोरेवाभिपूर्वमन्नाद्ये प्रति तिष्ठति तपो नवदश इत्युत्तरतस्तस्मात्सव्यः ( ३ ) हस्तयोस्तपस्वितरो योनिश्चतुर्विꣳश इति पुरस्तादुप दधाति चतुर्विꣳशत्यक्षरा गायत्री गायत्री यज्ञ-

मुखं यज्ञमुखमेव पुरस्ताद्वि यांतयति गर्भाः पञ्चविꣳश इतिं दक्षिणतोऽन्नं वै गर्भा अन्नं पञ्चविꣳशोऽन्नंमेव दक्षिणतो धंत्ते तस्माद्दक्षिणेनान्नमद्यत ओजंस्त्रिणव इतिं पश्चादिमे वै लोकास्त्रिणव एष्वेव लोकेषु प्रतिं तिष्ठति संभरंणस्त्रयोविꣳश इतिं (४) उत्तरतस्तस्मांत्सव्यो हस्तंयोः संभार्यंतरः क्रतुरेकत्रिꣳश इतिं पुरस्तादुपं दधाति वाग्वै क्रतुंर्यज्ञमुखं वाग्यंज्ञमुखमेव पुरस्ताद्वि यांतयति ब्रध्नस्यं विष्टपं चतुस्त्रिꣳश इतिं दक्षिणतोऽसौ वा आंदित्यो ब्रध्नस्यं विष्टपं ब्रह्मवर्चसमेव दंक्षिणतो धंत्ते तस्माद्दक्षिणोऽर्धो ब्रह्मवर्चसितंरः प्रतिष्ठा त्रंयस्त्रिꣳश इतिं पश्चात्प्रतिंष्ठित्यै नाकंः षट्त्रिꣳश इत्युंत्तरतः सुंवर्गो वै लोको नाकंः सुवर्गस्यं लोकस्य समंष्ट्यै ( ५ ) ॥

( वै त्रिवृदितिं पुरस्तांत्सव्यस्त्रंयोविꣳश इतिं सुवर्गो वै पञ्चं च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां पञ्चमाष्टके तृतीयप्रपाठके तृतीयोऽनुवाकः ॥ ३ ॥

---

( अथ पञ्चमाष्टके तृतीयप्रपाठके तृतीयोऽनुवाकः । )

---

देवाः । वै । यत् । यज्ञे । अकुर्वत । तत् ।

असुराः । अकुर्वत । ते । देवाः । एताः । अक्ष्णयास्तोमीया इत्यक्ष्णया—स्तोमीयाः । अपश्यन् । ताः । अन्यथा । अनूच्येत्यनु—उच्य । अन्यथा । उपेति । अदधत । तत् । असुराः । न । अन्ववायन्नित्यनु—अवायन् । ततः । देवाः । अभवन् । परेति । असुराः । यत् । अक्ष्णयास्तोमीया इत्यक्ष्णया—स्तोमीयाः । अन्यथा । अनूच्येत्यनु—उच्य । अन्यथा । उपदधातीत्युप—दधाति । भ्रातृव्याभिभूत्या इति भ्रातृव्य—अभिभूत्यै । भवति । आत्मना । परेति । अस्य । भ्रातृव्यः । भवति । आशुः । त्रिवृदिति त्रि—वृत् । इति । पुरस्तात् । उपेति । दधाति । यज्ञमुखमिति यज्ञ—मुखम् । वै । त्रिवृदिति त्रि—वृत् ( १ ) । यज्ञमुखमिति यज्ञ—मुखम् । एव । पुरस्तात् । वीति । यातयति । व्योमेति वि—ओम । सप्तदश इति सप्त—दशः । इति । दक्षिणतः । अन्नम् । वै । व्योमेति वि—ओम । अन्नम् । सप्तदश इति सप्त—दशः । अन्नम् । एव । दक्षिणतः । धत्ते । तस्मात् । दक्षिणेन । अन्नम् । अद्यते । धरुणः । एकविंश इत्येक—विंशः । इति । पश्चात् । प्रतिष्ठेति प्रति—स्था । वै । एकविंश इत्येक—

( अक्ष्णयास्तोमीयादीनामभिधानम् )

विꣳशः । प्रतिष्ठित्या इति प्रति-स्थित्यै । भान्तः । पञ्चदश इति पञ्च-दशः । इति । उत्तरत इत्युत्-तरतः । ओजः । वै । भान्तः । ओजः । पञ्चदश इति पञ्च-दशः । ओजः । एव । उत्तरत इत्युत्-तरतः । धत्ते । तस्मात् । उत्तरतोभिप्रयायीत्युत्तरतः-अभि-प्रयायी । जयति । प्रतूर्तिरिति प्र-तूर्तिः । अष्टादश इत्यष्टा-दशः । इति । पुरस्तात् ( २ ) । उपेति । दधाति । द्वौ । त्रिवृताविति त्रि-वृतौ । अभिपूर्वमित्यभि-पूर्वम् । यज्ञमुख इति यज्ञ-मुखे । वीति । यातयति । अभिवर्त इत्यभि-वर्तः । सविꣳश इति स-विꣳशः । इति । दक्षिणतः । अन्नम् । वै । अभिवर्त इत्यभि-वर्तः । अन्नम् । सविꣳश इति स-विꣳशः । अन्नम् । एव । दक्षिणतः । धत्ते । तस्मात् । दक्षिणेन । अन्नम् । अद्यते । वर्चः । द्वाविꣳशः । इति । पश्चात् । यत् । विꣳशतिः । द्वे इति । तेन । विराजाविति वि-राजौ । यत् । द्वे इति । प्रतिष्ठेति प्रति-स्था । तेन । विराजोरिति वि-राजोः । एव । अभिपूर्वमित्यभि-पूर्वम् । अन्नाद्य इत्यन्न-अद्ये । प्रतीति । तिष्ठति । तपः । नवदश इति नव-दशः । इति । उत्तरत इत्युत्-तरतः ।

तस्मा॑त् । स॒व्यः ( ३ ) । हस्त॑योः । त॒प॒स्वित॑र॒ इति॑ त॒प॒स्वि—त॒रः॑ । योनिः॑ । च॒तु॒र्वि॒ꣳश इति॑ चतुः—वि॒ꣳशः । इति॑ । पु॒रस्ता॑त् । उपेति॑ । द॒धा॒ति॒ । चतु॑र्विꣳशत्यक्ष॒रेति॒ चतु॑र्विꣳशति—अ॒क्ष॒रा॒ । गा॒य॒त्री । गा॒य॒त्री । य॒ज्ञ॒मु॒खमिति॑ यज्ञ—मु॒खम् । य॒ज्ञ॒मु॒खमिति॑ यज्ञ—मु॒खम् । ए॒व । पु॒रस्ता॑त् । वीति॑ । या॒त॒य॒ति॒ । गर्भाः॑ । प॒ञ्च॒वि॒ꣳश इति॑ पञ्च—वि॒ꣳशः । इति॑ । द॒क्षि॒ण॒तः । अन्न॑म् । वै । गर्भाः॑ । अन्न॑म् । प॒ञ्च॒वि॒ꣳश इति॑ पञ्च—वि॒ꣳशः । अन्न॑म् । ए॒व । द॒क्षि॒ण॒तः । ध॒त्ते॒ । तस्मा॑त् । दक्षि॑णेन । अन्न॑म् । अ॒द्य॒ते॒ । ओजः॑ । त्रि॒ण॒व इति॑ त्रि—न॒वः । इति॑ । प॒श्चात् । इ॒मे । वै । लो॒काः । त्रि॒ण॒व इति॑ त्रि—न॒वः । ए॒षु । ए॒व । लो॒केषु॑ । प्रतीति॑ । ति॒ष्ठ॒ति॒ । सं॒भर॑ण॒ इति॑ सं—भर॑णः । त्र॒यो॒वि॒ꣳश इति॑ त्रयः—वि॒ꣳशः । इति॑ ( ४ ) । उ॒त्त॒र॒त इत्यु॑त्—त॒र॒तः । तस्मा॑त् । स॒व्यः । हस्त॑योः । सं॒भा॒र्य॑त॒र॒ इति॑ सं॒भा॒र्य॑—त॒रः॑ । क्रतुः॑ । ए॒क॒त्रि॒ꣳश इत्येक—त्रि॒ꣳशः । इति॑ । पु॒रस्ता॑त् । उपेति॑ । द॒धा॒ति॒ । वाक् । वै । क्रतुः॑ । य॒ज्ञ॒मु॒खमिति॑ यज्ञ—मु॒खम् । वाक् । य॒ज्ञ॒मु॒खमिति॑ यज्ञ—मु॒खम् । ए॒व । पु॒रस्ता॑त् । वीति॑ ।

(अक्ष्णयास्तोमीयादीनामभिधानम्)

यातयति। ब्रध्नस्यं। विष्टपंम्। चतुस्त्रिंशश इतिं चतुः—त्रिंशः। इतिं। दक्षिणतः। असौ। वै। आदित्यः। ब्रध्नस्यं। विष्टपंम्। ब्रह्मवर्चसमितिं ब्रह्म—वर्चसम्। एव। दक्षिणतः। धत्ते। तस्मांत्। दक्षिंणः। अर्धः। ब्रह्मवर्चसितंर इतिं ब्रह्मवर्चसि—तरः—प्रतिष्ठेतिं प्रति—स्था। त्रयस्त्रिंश इतिं त्रयः—त्रिंशः। इतिं। पश्चात्। प्रतिंष्ठित्या इति प्रतिं—स्थित्यै। नाकंः। षट्त्रिंश इतिं षट्—त्रिंशः। इतिं। उत्तरत इत्युंत्—तरतः। सुवर्ग इतिं सुवः—गः। वै। लोकः। नाकंः। सुवर्गस्येतिं सुवः—गस्यं। लोकस्यं। समंष्ट्या इति सम्—अष्ट्यै (५)॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे पञ्चमाष्टके तृतीयप्रपाठके तृतीयोऽनुवाकः ॥ ३ ॥

---

(अथ पञ्चमाष्टके तृतीयप्रपाठके चतुर्थोऽनुवाकः।)

---

अग्नेर्भागोऽसीतिं पुरस्तादुपं दधाति यज्ञमुखं वा अग्निर्यंज्ञमुखं दीक्षा यंज्ञमुखं ब्रह्मं यज्ञमुखं त्रिवृद्यंज्ञमुखमेव पुरस्ताद्वि यांतयति नृचक्षंसां भागोंऽसीतिं दक्षिणतः शुंश्रुवाꣳसो वै नृचक्षसोऽन्नं धाता जातायैवास्मा अन्नमपिं

दधाति तस्माज्जातोऽन्नमत्ति जनित्रꣳ स्पृतꣳ सप्तदशः स्तोम इत्याहान्नं वै जनित्रम् ( १ ) अन्नꣳ सप्तदशोऽन्नमेव दक्षिणतो धत्ते तस्माद्दक्षिणेनान्नमद्यते मित्रस्य भागोऽसीति पश्चात्प्राणो वै मित्रोऽपानो वरुणः प्राणापानावेवास्मिन्दधाति दिवो वृष्टिर्वाताः स्पृता एकविꣳशः स्तोम इत्याह प्रतिष्ठा वा एकविꣳशः प्रतिष्ठित्या इन्द्रस्य भागोऽसीत्युत्तरत ओजो वा इन्द्र ओजो विष्णुरोजः क्षत्रमोजः पञ्चदशः ( २ ) ओज एवोत्तरतो धत्ते तस्मादुत्तरतोभिप्रयायी जयति वसूनां भागोऽसीति पुरस्तादुप दधाति यज्ञमुखं वै वसवो यज्ञमुखꣳ रुद्रा यज्ञमुखं चतुर्विꣳशो यज्ञमुखमेव पुरस्ताद्वि यातयत्यादित्यानां भागोऽसीति दक्षिणतोऽन्नं वा आदित्या अन्नं मरुतोऽन्नं गर्भा अन्नं पञ्चविꣳशोऽन्नमेव दक्षिणतो धत्ते तस्माद्दक्षिणेनान्नमद्यतेऽदित्यै भागः ( ३ ) असीति पश्चात्प्रतिष्ठा वा अदितिः प्रतिष्ठा पूषा प्रतिष्ठा त्रिणवः प्रतिष्ठित्यै देवस्य सवितुर्भागोऽसीत्युत्तरतो ब्रह्म वै देवः सविता ब्रह्म बृहस्पतिर्ब्रह्म चतुष्टोमो

ब्रह्मवर्चसमेवोत्तरतो धत्ते तस्मादुत्तरोऽर्धो ब्रह्म-
वर्चसितरः सावित्रवती भवति प्रसूत्यै तस्मा-
द्ब्राह्मणानामुदीची सनिः प्रसूता धर्त्रश्चतुष्टोम
इति पुरस्तादुप दधाति यज्ञमुखं वै धर्त्रः
(४) यज्ञमुखं चतुष्टोमो यज्ञमुखमेव पुरस्ताद्वि-
यातयति यावानां भागोऽसीति दक्षिणतो मा-
सा वै यावा अर्धमासा अयावास्तस्माद्दक्षिणा-
वृतो मासा अन्नं वै यावा अन्नं प्रजा अन्नमेव
दक्षिणतो धत्ते तस्माद्दक्षिणेनान्नमद्यत ऋभूणां
भागोऽसीति पश्चात्प्रतिष्ठित्यै विवर्तोऽष्टाचत्वा-
रिꣳश इत्युत्तरतोऽनयोर्लोकयोः सवीर्यत्वाय
तस्मादिमौ लोकौ समावद्वीर्यौ ( ५ ) यस्य
मुख्यवतीः पुरस्तादुपधीयन्ते मुख्य एव भव-
त्याऽस्य मुख्यो जायते यस्यान्नवतीर्दक्षिणतोऽ-
त्त्यन्नमाऽस्यान्नादो जायते यस्य प्रतिष्ठावतीः
पश्चात्प्रत्येव तिष्ठति यस्यौजस्वतीरुत्तरत ओ-
जस्व्येव भवत्याऽस्यौजस्वी जायतेऽर्को वा
एष यदग्निस्तस्यैतदेव स्तोत्रमेतच्छस्त्रं यदेषा
विधा ( ६ ) विधीयतेऽर्क एव तदर्क्यमनु वि
धीयतेऽत्त्यन्नमाऽस्यान्नादो जायते यस्यैषा वि-

धा विधीयते य उं चैनामेवं वेद सृष्टीरुपं दधाति यथासृष्टमेवावं रुन्धे न वा इदं दिवा न नक्तमासीदव्यांवृत्तं ते देवा एता व्युष्टीरपश्यन्ता उपांदधत ततो वा इदं व्यौच्छद्यस्यैता उंपधीयन्ते व्येवास्मां उच्छत्यथो तमं एवापं हते ( ७ ) ॥

( वै जनित्रं पञ्चदशोऽदित्यै भागो वै धर्त्रः समावंद्वीर्यौ विधा ततो वा इदं चतुर्दश च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां पञ्चमाष्टके तृतीयप्रपाठके चतुर्थोऽनुवाकः ॥ ४ ॥

---

( अथ पञ्चमाष्टके तृतीयप्रपाठके चतुर्थोऽनुवाकः । )

---

अग्नेः । भागः । असि । इतिं । पुरस्तांत् । उपेतिं । दधाति । यज्ञमुखमितिं यज्ञ—मुखम् । वै । अग्निः । यज्ञमुखमितिं यज्ञ—मुखम् । दीक्षा । यज्ञमुखमितिं यज्ञ—मुखम् । ब्रह्म । यज्ञमुखमितिं यज्ञ—मुखम् । त्रिवृदितिं त्रि—वृत् । यज्ञमुखमितिं यज्ञ—मुखम् । एव । पुरस्तांत् । वीतिं । यातयति । नृचक्षंसामितिं नृ—चक्षंसाम् । भागः । असि । इतिं । दक्षिणतः । शुश्रुवाꣳसंः । वै । नृचक्षंस इतिं नृ—चक्षंसः । अन्नंम् । धाता । जातायं । एव ।

अस्मै । अन्नम् । अपीति । दधाति । तस्मात् । जातः । अन्नम् । अत्ति । जनित्रम् । स्पृतम् । सप्तदश इति सप्त—दशः । स्तोमः । इति । आह । अन्नम् । वै । जनित्रम् ( १ ) । अन्नम् । सप्तदश इति सप्त—दशः । अन्नम् । एव । दक्षिणतः । धत्ते । तस्मात् । दक्षिणेन । अन्नम् । अद्यते । मित्रस्य । भागः । असि । इति । पश्चात् । प्राण इति प्र—अनः । वै । मित्रः । अपान इत्यप—अनः । वरुणः । प्राणापानाविति प्राण—अपानौ । एव । अस्मिन् । दधाति । दिवः । वृष्टिः । वाताः । स्पृताः । एकविंश इत्येक—विंशः । स्तोमः । इति । आह । प्रतिष्ठेति प्रति—स्था । वै । एकविंश इत्येक—विंशः । प्रतिष्ठित्या इति प्रति—स्थित्यै । इन्द्रस्य । भागः । असि । इति । उत्तरत इत्युत्—तरतः । ओजः । वै । इन्द्रः । ओजः । विष्णुः । ओजः । क्षत्रम् । ओजः । पञ्चदश इति पञ्च—दशः ( २ ) । ओजः । एव । उत्तरत इत्युत्—तरतः । धत्ते । तस्मात् । उत्तरतोभिप्रयायीत्युत्तरतः—अभिप्रयायी । जयति । वसूनाम् । भागः । असि । इति । पुरस्तात् । उपेति । दधाति । यज्ञमुखमिति यज्ञ—मुखम् । वै । वसवः । यज्ञमुखमिति

यज्ञ—मुखम् । रुद्राः । यज्ञमुखमिति यज्ञ—मुखम् । चतुर्विंश इति चतुः—विंशः । यज्ञमुखमिति यज्ञ—मुखम् । एव । पुरस्तात् । वीति । यातयति । आदित्यानाम् । भागः । असि । इति । दक्षिणतः । अन्नम् । वै । आदित्याः । अन्नम् । मरुतः । अन्नम् । गर्भाः । अन्नम् । पञ्चविंश इति पञ्च—विंशः । अन्नम् । एव । दक्षिणतः । धत्ते । तस्मात् । दक्षिणेन । अन्नम् । अद्यते । अदित्यै । भागः ( ३ ) । असि । इति । पश्चात् । प्रतिष्ठेति प्रति—स्था । वै । अदितिः । प्रतिष्ठेति प्रति—स्था । पूषा । प्रतिष्ठेति प्रति—स्था । त्रिणव इति त्रि—नवः । प्रतिष्ठित्या इति प्रति—स्थित्यै । देवस्य । सवितुः । भागः । असि । इति । उत्तरत इत्युत्—तरतः । ब्रह्म । वै । देवः । सविता । ब्रह्म । बृहस्पतिः । ब्रह्म । चतुष्टोम इति चतुः—स्तोमः । ब्रह्मवर्चसमिति ब्रह्म—वर्चसम् । एव । उत्तरत इत्युत्—तरतः । धत्ते । तस्मात् । उत्तर इत्युत्—तरः । अर्धः । ब्रह्मवर्चसितर इति ब्रह्मवर्चसि—तरः । सावित्रवती इति सावित्र—वती । भवति । प्रसूत्या इति प्र—सूत्यै । तस्मात् । ब्राह्मणानाम् । उदीची । सनिः । प्रसूतेति प्र—सूता ।

धर्त्रः। चतुष्टोम इति चतुः—स्तोमः। इति। पुरस्तात्। उपेति। दधाति। यज्ञमुखमिति यज्ञ—मुखम्। वै। धर्त्रः (४)। यज्ञमुखमिति यज्ञ—मुखम्। चतुष्टोम इति चतुः—स्तोमः। यज्ञमुखमिति यज्ञ—मुखम्। एव। पुरस्तात्। वीति। यातयति। यावानाम्। भागः। असि। इति। दक्षिणतः। मासाः। वै। यावाः। अर्धमासा इत्यर्ध—मासाः। अयावाः। तस्मात्। दक्षिणावृत इति दक्षिणा—आवृतः। मासाः। अन्नम्। वै। यावाः। अन्नम्। प्रजा इति प्र—जाः। अन्नम्। एव। दक्षिणतः। धत्ते। तस्मात्। दक्षिणेन। अन्नम्। अद्यते। ऋभूणाम्। भागः। असि। इति। पश्चात्। प्रतिष्ठित्या इति प्रति—स्थित्यै। विवर्त इति वि—वर्तः। अष्टाचत्वारिंश इत्यष्टा—चत्वारिंशः। इति। उत्तरत इत्युत्—तरतः। अनयोः। लोकयोः। सवीर्यत्वायेति सवीर्य—त्वाय। तस्मात्। इमौ। लोकौ। समावद्वीर्याविति समावत्—वीर्यौ (५)। यस्य। मुख्यवतीरिति मुख्य—वतीः। पुरस्तात्। उपधीयन्त इत्युप—धीयन्ते। मुख्यः। एव। भवति। एति। अस्य। मुख्यः। जायते। यस्य। अन्नवती-

रित्यन्नं—वतीः । दक्षिणतः । अत्तिं । अन्नंम् । एतिं । अस्य । अन्नाद इत्यंन्न—अदः । जायते । यस्यं । प्रतिष्ठावंतीरितिं प्रतिष्ठा—वतीः । पश्चात् । प्रतीतिं । एव । तिष्ठति । यस्यं । ओजंस्वतीः । उत्तरत इत्युं-त्—तरतः । ओजस्वी । एव । भवति । एतिं । अस्य । ओजस्वी । जायते । अर्कः । वै । एषः । यत् । अग्निः । तस्यं । एतत् । एव । स्तोत्रम् । एतत् । शस्त्रम् । यत् । एषा । विधेतिं वि—धा ( ६ ) । विधीयत इतिं वि—धीयतें । अर्के । एव । तत् । अर्क्यंम् । अनुं । वीतिं । धीयते । अत्तिं । अन्नंम् । एतिं । अस्य । अन्नाद इत्यंन्न—अदः । जायते । यस्यं । एषा । विधेतिं वि—धा । विधीयत इतिं वि—धीयतें । यः । उ । च । एनाम् । एवम् । वेदं । सृष्टीः । उपेतिं । दधाति । यथासृष्टमितिं यथा—सृष्टम् । एव । अवेतिं । रुन्धे । न । वै । इदम् । दिवां । न । नक्तंम् । आसीत् । अव्यांवृत्तमित्यविं—आवृत्तम् । ते । देवाः । एताः । व्युंष्टीरिति वि—उष्टीः । अपश्यन् । ताः । उपेतिं । अदधत । ततः । वै । इदम् । वीतिं । औच्छत् । यस्यं । एताः । उप-धीयन्त इत्युंप—धीयन्तें । वीतिं । एव । अस्मै ।

उच्छति। अथो इति। तमः। एव। अपेति।
हते (७)॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे पञ्चमाष्टके
तृतीयप्रपाठके चतुर्थोऽनुवाकः ॥ ४ ॥

---

(अथ पञ्चमाष्टके तृतीयप्रपाठके पञ्चमोऽनुवाकः।)

---

अग्ने जातान्प्र णुदा नः सपत्नानिति पुरस्ता-
दुप दधाति जातानेव भ्रातृव्यान्प्र णुदते
सहसा जातानिति पश्चाज्जनिष्यमाणानेव
प्रति नुदते चतुश्चत्वारिंशः स्तोम इति दक्षिण-
तो ब्रह्मवर्चसं वै चतुश्चत्वारिंशो ब्रह्मवर्चसमेव
दक्षिणतो धत्ते तस्माद्दक्षिणोऽर्धो ब्रह्मवर्चसि-
तरः षोडशः स्तोम इत्युत्तरत ओजो वै षोडश
ओज एवोत्तरतो धत्ते तस्माद् (१) उत्तर-
तोभिप्रयायी जयति वज्रो वै चतुश्चत्वारिंशो
वज्रः षोडशो यदेते इष्टके उपदधाति जाताꣳश्चैव
जनिष्यमाणाꣳश्च भ्रातृव्यान्प्रणुद्य वज्रमनु प्र
हरति स्तृत्यै पुरीषवतीं मध्य उप दधाति
पुरीषं वै मध्यमात्मनः सात्मानमेवाग्निं चिनुते
सात्माऽमुष्मिँल्लोके भवति य एवं वेदैता वा

असपत्ना नामेष्टका यस्यैता उपधीयन्ते ( २ ) नास्य सपत्नो भवति पशुर्वा एष यदग्निर्विराजं उत्तमायां चित्यामुप दधाति विराजमेवोत्तमां पशुषु दधाति तस्मात्पशुमानुत्तमां वाचं वदति दशंदशोप दधाति सवीर्यत्वायाक्ष्णयोप दधाति तस्मादक्ष्णया पशवोऽङ्गानि प्र हरन्ति प्रतिष्ठित्यै यानि वै छन्दांसि सुवर्ग्याण्यासन्तैर्देवाः सुवर्गं लोकमायन्तेनर्षयः ( ३ ) अश्राम्यन्ते तपोऽतप्यन्त तानि तपसाऽपश्यन्तेभ्य एता इष्टका निरमिमतेवश्छन्दो वरिवश्छन्द इति ता उपादधत ताभिर्वै ते सुवर्गं लोकमायन्यदेता इष्टका उपदधाति यान्येव छन्दांसि सुवर्ग्याणि तैरेव यजमानः सुवर्गं लोकमेति यज्ञेन वै प्रजापतिः प्रजा असृजत ताः स्तोमभागैरेवासृजत यत् ( ४ ) स्तोमभागा उपदधाति प्रजा एव तद्यजमानः सृजते बृहस्पतिर्वा एतद्यज्ञस्य तेजः समभरद्यत्स्तोमभागा यत्स्तोमभागा उपदधाति सतेजसमेवाग्निं चिनुते बृहस्पतिर्वा एतां यज्ञस्य प्रतिष्ठामपश्यद्यत्स्तोमभागा यत्स्तोमभागा उपदधाति यज्ञस्य प्रति-

( असपत्नविराडाख्येष्टकाभिधानम् )

ष्ठित्यै सप्तसप्तोपं दधाति सवीर्यत्वायं तिस्रो मध्ये प्रतिष्ठित्यै ( ५ ) ॥

( उत्तरतो धंत्ते तस्मांदुपधीयन्त ऋषंयोऽसृजत यत्रिचंत्वारिंशच्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां पञ्चमाष्टके तृतीयप्रपाठके पञ्चमोऽनुवाकः ॥ ५ ॥

---

( अथ पञ्चमाष्टके तृतीयप्रपाठके पञ्चमोऽनुवाकः । )

---

अग्ने । जातान् । प्रेतिं । नुद । नः । सपत्नांन् । इतिं । पुरस्तांत् । उपेतिं । दधाति । जातान् । एव । भ्रातृंव्यान् । प्रेतिं । नुदते । सहंसा । जातान् । इतिं । पश्चात् । जनिष्यमांणान् । एव । प्रतीतिं । नुदते । चतुश्चत्वारिंश इतिं चतुः—चत्वारिंशः । स्तोमंः । इतिं । दक्षिणतः । ब्रह्मवर्चसमितिं ब्रह्म—वर्चसम् । वै । चतुश्चत्वारिंश इतिं चतुः—चत्वारिंशः । ब्रह्मवर्चसमितिं ब्रह्म—वर्चसम् । एव । दक्षिणतः । धत्ते । तस्मांत् । दक्षिंणः । अर्धः । ब्रह्मवर्चसितंर इतिं ब्रह्मवर्चसि—तरः । षोडशः । स्तोमंः । इतिं । उत्तरत इत्युंत्—तरतः । ओजंः । वै । षोडशः । ओजंः । एव । उत्तरत इत्युंत्—तरतः । धत्ते । तस्मांत् ( १ ) । उत्तरतोभिप्रयायीत्युंत्तरतः—अभिप्रयायी । जयति । वज्रंः । वै । चतुश्चत्वारिंश इतिं

चतुः—चत्वारिꣳशः । वज्रः । षोडशः । यत् । एते इति । इष्टके इति । उपदधातीत्युप—दधाति । जातान् । च । एव । जनिष्यमाणान् । च । भ्रातृव्यान् । प्रणुद्येति प्र—नुद्य । वज्रम् । अनु । प्रेति । हरति । स्तृत्यै । पुरीषवतीमिति पुरीष—वतीम् । मध्ये । उपेति । दधाति । पुरीषम् । वै । मध्यम् । आत्मनः । सात्मानमिति स—आत्मानम् । एव । अग्निम् । चिनुते । सात्मेति स—आत्मा । अमुष्मिन् । लोके । भवति । यः । एवम् । वेद । एताः । वै । असपत्नाः । नाम । इष्टकाः । यस्य । एताः । उपधीयन्त इत्युप-धीयन्ते (२) । न । अस्य । सपत्नः । भवति । पशुः । वै । एषः । यत् । अग्निः । विराज इति वि—राजः । उत्तमायामित्युत्—तमायाम् । चित्याम् । उपेति । दधाति । विराजमिति वि—राजम् । एव । उत्तमामित्युत्—तमाम् । पशुषु । दधाति । तस्मात् । पशुमानिति पशु—मान् । उत्तमामित्युत्—तमाम् । वाचम् । वदति । दशदशेति दश—दश । उपेति । दधाति । सवीर्यत्वायेति सवीर्य—त्वाय । अक्ष्णया । उपेति । दधाति । तस्मात् । अक्ष्णया । पशवः । अङ्गानि । प्रेति । हरन्ति ।

प्रतिंष्ठित्या इति प्रतिं—स्थित्यै । यानिं । वै । छ-
न्दांꣳसि । सुवर्ग्याणीतिं सुवः—ग्यांनि । आसंन् ।
तैः । देवाः । सुवर्गमितिं सुवः—गम् । लोकम् ।
आयन् । तेनं । ऋषंयः ( ३ )। अश्राम्यन् । ते ।
तपंः । अतप्यन्त । तानिं । तपंसा । अपश्यन् ।
तेभ्यंः । एताः । इष्टंकाः । निरितिं । अमिमत ।
एवंः । छन्दंः । वरिंवः । छन्दंः । इतिं । ताः ।
उपेतिं । अदधत । ताभिंः । वै । ते । सुवर्गमितिं
सुवः—गम् । लोकम् । आयन् । यत् । एताः ।
इष्टंकाः । उपदधातीत्युंप—दधांति । यानिं । एव ।
छन्दांꣳसि । सुवर्ग्याणीतिं सुवः—ग्यांनि । तैः ।
एव । यजंमानः । सुवर्गमितिं सुवः—गम् । लोकम् ।
एति । यज्ञेनं । वै । प्रजापंतिरितिं प्रजा—पतिः ।
प्रजा इतिं प्र—जाः । असृजत । ताः । स्तोमंभागै-
रिति स्तोमं—भागैः । एव । असृजत । यत् ( ४ )।
स्तोमंभागा इति स्तोमं—भागाः । उपदधातीत्युंप—
दधांति । प्रजा इतिं प्र—जाः । एव । तत् । यजं-
मानः । सृजते । बृहस्पतिंः । वै । एतत् । यज्ञस्यं ।
तेजंः । समितिं । अभरत् । यत् । स्तोमंभागा इति
स्तोमं—भागाः । यत् । स्तोमंभागा इति स्तोमं—

भागाः । उपदधातीरित्युप—दधाति । सतेजसमिति स—तेजसम् । एव । अग्निम् । चिनुते । बृहस्पतिः । वै । एताम् । यज्ञस्य । प्रतिष्ठामिति प्रति—स्थाम् । अपश्यत् । यत् । स्तोमभागा इति स्तोमं—भागाः । यत् । स्तोमभागा इति स्तोमं—भागाः । उपदधातीरित्युप—दधाति । यज्ञस्य । प्रतिष्ठित्या इति प्रति—स्थित्यै । सप्तसप्तेति सप्त—सप्त । उपेति । दधाति । सवीर्यत्वायेति सवीर्य—त्वाय । तिस्रः । मध्ये । प्रतिष्ठित्या इति प्रति—स्थित्यै (५)॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे पञ्चमाष्टके तृतीयप्रपाठके पञ्चमोऽनुवाकः ॥ ५ ॥

---

( अथ पञ्चमाष्टके तृतीयप्रपाठके षष्ठोऽनुवाकः । )

---

रश्मिरित्येवाऽऽदित्यमसृजत प्रेतिरिति धर्ममन्वितिरिति दिवꣳ संधिरित्यन्तरिक्षं प्रतिधिरिति पृथिवीं विष्टम्भ इति वृष्टिं प्रवेत्यहरनुवेति रात्रिमुशिगिति वसून्प्रकेत इति रुद्रान्सुदीतिरित्यादित्यानोज इति पितृꣳस्तन्तुरिति प्रजाः पृतनाषाडिति पशून्रेवदित्योषधीरभिजिदसि युक्तग्रावा ( १ ) इन्द्राय त्वेन्द्रं जिन्वे-

त्येव दक्षिणतो वज्रं पर्यौहदभिजित्यै ताः प्रजा अपप्राणा असृजत तास्वधिपतिरसीत्येव प्राणमदधाद्यन्तेत्यपानꣳ सꣳसर्प इति चक्षुर्वयोधा इति श्रोत्रं ताः प्रजाः प्राणतीरपानतीः पश्यन्तीः शृण्वतीर्न मिथुनी अभवन्तासु त्रिवृदसीत्येव मिथुनमदधात्ताः प्रजा मिथुनी (२) भवन्तीर्न प्राजायन्त ताः सꣳरोहोऽसि नीरोहोऽसीत्येव प्राजनयत्ताः प्रजाः प्रजाता न प्रत्यतिष्ठन्ता वसुकोऽसि वेषश्रिरसि वस्यष्टिरसीत्येवैषु लोकेषु प्रत्यस्थापयद्यदाह वसुकोऽसि वेषश्रिरसि वस्यष्टिरसीति प्रजा एव प्रजाता एषु लोकेषु प्रति ष्ठापयति सात्माऽन्तरिक्षꣳ रोहति सप्राणोऽमुष्मिँल्लोके प्रति तिष्ठत्यव्यर्धुकः प्राणापानाभ्यां भवति य एवं वेद (३)॥

( युक्तग्रावा प्रजा मिथुन्यन्तरिक्षं द्वादश च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां पञ्चमाष्टके तृतीयप्रपाठके षष्ठोऽनुवाकः ॥ ६ ॥

---

( अथ पञ्चमाष्टके तृतीयप्रपाठके षष्ठोऽनुवाकः । )

---

रश्मिः । इति । एव । आदित्यम् । असृजत । प्रेतिरिति प्र—इतिः । इति । धर्मम् । अन्वितिरित्य-

नु—इतिः । इति । दिवम् । संधिरिति सं—धिः । इति । अन्तरिक्षम् । प्रतिधिरिति प्रति—धिः । इति । पृथिवीम् । विष्टम्भ इति वि—स्तम्भः । इति । वृष्टिम् । प्रवेति प्र—वा । इति । अहः । अनुवेत्यनु—वा । इति । रात्रिम् । उशिक् । इति । वसून् । प्रकेत इति प्र—केतः । इति । रुद्रान् । सुदीतिरिति सु—दीतिः । इति । आदित्यान् । ओजः । इति । पितॄन् । तन्तुः । इति । प्रजा इति प्र—जाः । पृतनाषाट् । इति । पशून् । रेवत् । इति । ओषधीः । अभिजिदित्यभि—जित् । असि । युक्तग्रावेति युक्त—ग्रावा ( १ )। इन्द्राय । त्वा । इन्द्रम् । जिन्व । इति । एव । दक्षिणतः । वज्रम् । परीति । औहत् । अभिजित्या इत्यभि—जित्यै । ताः । प्रजा इति प्र—जाः । अपप्राणा इत्यप—प्राणाः । असृजत । तासु । अधिपतिरित्यधि—पतिः । असि । इति । एव । प्राणमिति प्र—अनम् । अदधात् । यन्ता । इति । अपानमित्यप—अनम् । संसर्प इति सं—सर्पः । इति । चक्षुः । वयोधा इति वयः—धाः । इति । श्रोत्रम् । ताः । प्रजा इति प्र—जाः । प्राणतीरिति प्र—अनतीः । अपानतीरित्यप—अनतीः । पश्यन्तीः । शृण्वतीः । न । मिथुनी । अभवन् ।

तासुं । त्रिवृदितिं त्रि—वृत् । असि । इतिं । एव । मिथुनम् । अदधात् । ताः । प्रजा इतिं प्र—जाः । मिथुनी ( २ ) । भवंन्तीः । न । प्रेतिं । अजायन्त । ताः । सꣳरोह इतिं सं—रोहः । असि । नीरोह इतिं निः—रोहः । असि । इतिं । एव । प्रेतिं । अजनयत् । ताः । प्रजा इतिं प्र—जाः । प्रजांता इति प्र—जाताः । न । प्रतीतिं । अतिष्ठन् । ताः । वसुकः । असि । वेषंश्रीरिति वेषं—श्रिः । असि । वस्यंष्टिः । असि । इतिं । एव । एषु । लोकेषुं । प्रतीतिं । अस्थापयत् । यत् । आहं । वसुकः । असि । वेषंश्रिरिति वेषं—श्रिः । असि । वस्यंष्टिः । असि । इतिं । प्रजा इतिं प्र—जाः । एव । प्रजांता इति प्र—जाताः । एषु । लोकेषुं । प्रतीतिं । स्थापयति । सात्मेति स—आत्मा । अन्तरिंक्षम् । रोहति । सप्रांण इति स—प्राणः । अमुष्मिन् । लोके । प्रतीतिं । तिष्ठति । अव्यंर्धुक इत्यविं—अर्धुकः । प्राणापानाभ्यामितिं प्राण—अपानाभ्यांम् । भवति । यः । एवम् । वेदं ( ३ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे पञ्चमाष्टके तृतीयप्रपाठके षष्ठोऽनुवाकः ॥ ६ ॥

( अथ पञ्चमाष्टके तृतीयप्रपाठके सप्तमोऽनुवाकः । )

---

नाकसद्भिर्वै देवाः सुवर्गं लोकमायन्तन्नाकसदां नाकसत्त्वं यन्नाकसद उपदधाति नाकसद्भिरेव तद्यजमानः सुवर्गं लोकमेति सुवर्गो वै लोको नाको यस्यैता उपधीयन्ते नास्मा अकं भवति यजमानायतनं वै नाकसदो यन्नाकसद उपदधात्यायतनमेव तद्यजमानः कुरुते पृष्ठानां वा एतत्तेजः संभृतं यन्नाकसदो यन्नाकसदः(१) उपदधाति पृष्ठानामेव तेजोऽव रुन्धे पञ्चचोडा उप दधात्यप्सरस एवैनमेता भूता अमुष्मिँल्लोक उप शेरेऽथो तनूपानीरेवैता यजमानस्य यं द्विष्यात्तमुपदधद्ध्यायेदेताभ्य एवैनं देवताभ्य आ वृश्चति ताजगार्तिमार्छत्युत्तरा नाकसद्भ्य उप दधाति यथा जायामानीय गृहेषु निषादयति तादृगेव तत् (२) पश्चात्प्राचीमुत्तमामुप दधाति तस्मात्पश्चात्प्राची पत्न्यन्वास्ते स्वयमातृण्णां च विकर्णीं चोत्तमे उप दधाति प्राणो वै स्वयमातृण्णाऽऽयुर्विकर्णी प्राणं चैवाऽऽयुश्च प्राणानामुत्तमौ धत्ते तस्मात्प्राणश्चाऽऽयुश्च प्राणानामुत्तमौ नान्यामुत्तरामिष्टकामुप दध्या-

(नाकसदादिपञ्चविधेष्टकाभिधानम्)

यदन्यामुत्तरामिष्टकामुपदध्यात्पशूनाम् (३) च यजमानस्य च प्राणं चाऽऽयुश्चापि दध्यात्तस्मान्नान्योत्तरेष्टकोपधेया स्वयमातृण्णामुप दधात्यसौ वै स्वयमातृण्णाऽमूमेवोप धत्तेऽश्वमुप घ्रापयति प्राणमेवास्यां दधात्यथो प्राजापत्यो वा अश्वः प्रजापतिनैवाग्निं चिनुते स्वयमातृण्णा भवति प्राणानामुत्सृष्ट्या अथो सुवर्गस्य लोकस्यानुख्यात्या एषा वै देवानां विक्रान्तिर्यद्विकर्णी यद्विकर्णीमुपदधाति देवानामेव विक्रान्तिमनु वि क्रमत उत्तरत उप दधाति तस्मादुत्तरतउपचारोऽग्निर्वायुमती भवति समिद्ध्यै (४)॥

(संभृतं यन्नाकसदो यन्नाकसदस्तत्पशूनामेषा वै द्वाविंशतिश्च।)

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां पञ्चमाष्टके तृतीयप्रपाठके सप्तमोऽनुवाकः॥ ७॥

---

(अथ पञ्चमाष्टके तृतीयप्रपाठके सप्तमोऽनुवाकः।)

---

नाकसद्भिरिति नाकसत्—भिः। वै। देवाः। सुवर्गमिति सुवः—गम्। लोकम्। आयन्। तत्। नाकसदामिति नाक—सदाम्। नाकसत्त्वमिति नाकसत्—त्वम्। यत्। नाकसद इति नाक—सदः।

उपदधातीत्युंप—दधांति । नाकसद्भिरितिं नाकसत्—भिः । एव । तत् । यजंमानः । सुवर्गमितिं सुवः—गम् । लोकम् । एति । सुवर्ग इतिं सुवः—गः । वै । लोकः । नाकंः । यस्यं । एताः । उपधीयन्त इत्युंप—धीयन्तें । नं । अस्मै । अकंम् । भवति । यजमानायतनमितिं यजमान—आयतनम् । वै । नाकसद इतिं नाक—सदंः । यत् । नाकसद इतिं नाक—सदंः । उपदधातीत्युंप—दधांति । आयतंनमित्यां—यतंनम् । एव । तत् । यजंमानः । कुरुते । पृष्ठानांम् । वै । एतत् । तेजंः । संभृंतमिति सं—भृतम् । यत् । नाकसद इतिं नाक—सदंः । यत् । नाकसद इतिं नाक—सदंः ( १ ) । उपदधातीत्युंप—दधांति । पृष्ठानांम् । एव । तेजंः । अवेतिं । रुन्धे । पञ्चचोडा इतिं पञ्च—चोडांः । उपेतिं । दधाति । अप्सरसंः । एव । एनम् । एताः । भूताः । अमुष्मिंन् । लोके । उपेतिं । शेरे । अथो इतिं । तनूपानीरितिं तनू—पानींः । एव । एताः । यजंमानस्य । यम् । द्विष्यात् । तम् । उपदधादित्युंप—दधंत् । ध्यायेत् । एताभ्यंः । एव । एनम् । देवतांभ्यः । एतिं । वृश्चति । ताजक् । आर्तिम् । एतिं । ऋच्छति । उत्तंरा इत्यु-

त्—तराः। नाकसद्भ्य इति नाकसत्—भ्यः। उपेति। दधाति। यथा। जायाम्। आनीयेत्या—नीय। गृहेषु। निषादयतीति नि—सादयति। तादृक्। एव। तत् ( २ )। पश्चात्। प्राचीम्। उत्तमामित्युत्—तमाम्। उपेति। दधाति। तस्मात्। पश्चात्। प्राची। पत्नी। अन्विति। आस्ते। स्वयमातृण्णामिति स्वयम्—आतृण्णाम्। च। विकर्णीमिति वि—कर्णीम्। च। उत्तमे इत्युत्—तमे। उपेति। दधाति। प्राण इति प्र—अनः। वै। स्वयमातृण्णेति स्वयम्—आतृण्णा। आयुः। विकर्णीति वि—कर्णी। प्राणमिति प्र—अनम्। च। एव। आयुः। च। प्राणानामिति प्र—अनानाम्। उत्तमावित्युत्—तमौ। धत्ते। तस्मात्। प्राण इति प्र—अनः। च। आयुः। च। प्राणानामिति प्र—अनानाम्। उत्तमावित्युत्—तमौ। न। अन्याम्। उत्तरामित्युत्—तराम्। इष्टकाम्। उपेति। दध्यात्। यत्। अन्याम्। उत्तरामित्युत्—तराम्। इष्टकाम्। उपदध्यादित्युप—दध्यात्। पशूनाम् ( ३ )। च। यजमानस्य। च। प्राणमिति प्र—अनम्। च। आयुः। च। अपीति। दध्यात्। तस्मात्। न। अन्या। उत्तरेत्युत्—तरा। इष्टका।

उपधेयेत्युंप—धेयां । स्वयमातृण्णामितिं स्वयम्—आतृण्णाम् । उपेतिं । दधाति । असौ । वै । स्वयमातृण्णेतिं स्वयम्—आतृण्णा । अमूम् । एव । उपेतिं । धत्ते । अश्वंम् । उपेतिं । घ्रापयति । प्राणमितिं प्र—अनम् । एव । अस्याम् । दधाति । अथो इतिं । प्राजापत्य इतिं प्राजा—पत्यः । वै । अश्वंः । प्रजापतिनेतिं प्रजा—पतिना । एव । अग्निम् । चिनुते । स्वयमातृण्णेतिं स्वयम्—आतृण्णा । भवति । प्राणानामितिं प्र—अनानांम् । उत्सृष्ट्या इत्युत्—सृष्ट्यै । अथो इतिं । सुवर्गस्येतिं सुवः—गस्यं । लोकस्यं । अनुंख्यात्या इत्यनुं—ख्यात्यै । एषा । वै । देवानांम् । विक्रांन्तिरिति वि—क्रान्तिः । यत् । विकर्णीतिं वि—कर्णी । यत् । विकर्णीमितिं वि—कर्णीम् । उपदधातीत्युंप—दधांति । देवानांम् । एव । विक्रांन्तिमिति वि—क्रान्तिम् । अनुं । वीतिं । क्रमते । उत्तरत इत्युंत्—तरतः । उपेतिं । दधाति । तस्मांत् । उत्तरतउंपचार इत्युंत्तरतः—उपचारः । अग्निः । वायुमतीतिं वायु—मतीं । भवति । समिंद्ध्या इति सम्—इद्ध्यै ( ४ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे पञ्चमाष्टके तृतीयप्रपाठके सप्तमोऽनुवाकः ॥ ७ ॥

(अथ पञ्चमाष्टके तृतीयप्रपाठकेऽष्टमोऽनुवाकः)

छन्दा꣡ꣳस्युप꣡ं दधाति पशवो वै छन्दा꣡ꣳसि पशूनेवाव꣡ं रुन्धे छन्दा꣡ꣳसि वै देवानां वामं पशवो वाममेव पशूनव꣡ं रुन्ध एताꣳ ह वै यज्ञसेनश्चैत्रियायणश्चितिं विदां चकार तया वै स पशूनवारुन्ध यदेतामुपदधाति पशूनेवाव꣡ं रुन्धे गायत्रीः पुरस्तादुप꣡ं दधाति तेजो वै गायत्री तेज एव (१) मुखतो धत्ते मूर्धन्वतीर्भवन्ति मूर्धानमेवैनꣳ समानानां करोति त्रिष्टुभ उप꣡ दधातीन्द्रियं वै त्रिष्टुगिन्द्रियमेव मध्यतो धत्ते जगतीरुप꣡ दधाति जागता वै पशवः पशूनेवाव꣡ं रुन्धेऽनुष्टुभ उप꣡ दधाति प्राणा वा अनुष्टुप्प्राणानामुत्सृष्ट्यै बृहतीरुष्णिहाः पङ्क्तीरक्षरपङ्क्तीरिति विषुरूपाणि छन्दा꣡ꣳस्युप꣡ं दधाति विषुरूपा वै पशवः पशवः (२) छन्दा꣡ꣳसि विषुरूपानेव पशूनव꣡ं रुन्धे विषुरूपमस्य गृहे दृश्यते यस्यैता उपधीयन्ते य उ चैनामेवं वेदातिच्छन्दसमुप꣡ं दधात्यतिच्छन्दा वै सर्वाणि छन्दा꣡ꣳसि सर्वेभिरेवैनं छन्दोभिश्चिनुते वर्ष्म वा एषा छन्दसां यदति-

च्छन्दा यदेतिच्छन्दसमुपदधाति वर्ष्मैवैनꣳ स-
मानानां करोति द्विपदा उप दधाति द्विपाद्य-
जमानः प्रतिष्ठित्यै ( ३ ) ॥

( तेज एव पशवः पशवो यजमान एकं च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां पञ्चमाष्टके
तृतीयप्रपाठकेऽष्टमोऽनुवाकः ॥ ८ ॥

---

( अथ पञ्चमाष्टके तृतीयप्रपाठकेऽष्टमोऽनुवाकः । )

---

छन्दाꣳसि । उपेति । दधाति । पशवः । वै । छन्दाꣳसि । पशून् । एव । अवेति । रुन्धे । छन्दाꣳसि । वै । देवानाम् । वामम् । पशवः । वामम् । एव । पशून् । अवेति । रुन्धे । एताम् । ह । वै । यज्ञसेन इति यज्ञ—सेनः । चैत्रियायणः । चितिम् । विदाम् । चकार । तया । वै । सः । पशून् । अवेति । अरुन्ध । यत् । एताम् । उपदधातीत्युप—दधाति । पशून् । एव । अवेति । रुन्धे । गायत्रीः । पुरस्तात् । उपेति । दधाति । तेजः । वै । गायत्री । तेजः । एव ( १ ) । मुखतः । धत्ते । मूर्धन्वतीरिति मूर्धन्—वतीः । भवन्ति । मूर्धानम् । एव । एनम् । समानानाम् । करोति । त्रिष्टुभः । उपेति । दधाति । इन्द्रियम् । वै । त्रिष्टुक् । इन्द्रियम् । एव । मध्यतः । धत्ते ।

जगतीः। उपेति। दधाति। जागताः। वै। पशवः। पशून्। एव। अवेति। रुन्धे। अनुष्टुभ इत्यनु—स्तुभः। उपेति। दधाति। प्राणा इति प्र—अनाः। वै। अनुष्टुबित्यनु—स्तुप्। प्राणानामिति प्र—अनानाम्। उत्सृष्ट्या इत्युत्—सृष्ट्यै। बृहतीः। उष्णिहाः। पङ्क्तीः। अक्षरंपङ्क्तीरित्यक्षरं—पङ्क्तीः। इति। विषुरूपाणीति विषु—रूपाणि। छन्दांसि। उपेति। दधाति। विषुरूपा इति विषु—रूपाः। वै। पशवः। पशवः (२)। छन्दांसि। विषुरूपानिति विषु—रूपान्। एव। पशून्। अवेति। रुन्धे। विषुरूपमिति विषु—रूपम्। अस्य। गृहे। दृश्यते। यस्य। एताः। उपधीयन्त इत्युप—धीयन्ते। यः। उ। च। एनाः। एवम्। वेद। अतिच्छन्दसमित्यति—छन्दसम्। उपेति। दधाति। अतिच्छन्दा इत्यति—छन्दाः। वै। सर्वाणि। छन्दांसि। सर्वेभिः। एव। एनम्। छन्दोभिरिति छन्दः—भिः। चिनुते। वर्ष्म। वै। एषा। छन्दसाम्। यत्। अतिच्छन्दा इत्यति—छन्दाः। यत्। अतिच्छन्दसमित्यति—छन्दसम्। उपदधातीत्युप—दधाति। वर्ष्म। एव। एनम्। समानानाम्। करोति। द्विपदा

इति द्वि—पदाः । उपेति । दधाति । द्विपादिति द्वि—पात् । यजमानः । प्रतिष्ठित्या इति प्रति—स्थित्यै ( ३ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे पञ्चमाष्टके तृतीयप्रपाठकेऽष्टमोऽनुवाकः ॥ ८ ॥

---

( अथ पञ्चमाष्टके तृतीयप्रपाठके नवमोऽनुवाकः । )

---

सर्वाभ्यो वै देवताभ्योऽग्निश्चीयते यत्सयुजो नोपदध्याद्देवता अस्याग्निं वृञ्जीरन्यत्सयुज उपदधात्यात्मनैवैनꣳ सयुजं चिनुते नाग्निना व्यृध्यतेऽथो यथा पुरुषः स्नावभिः संतत एवमेवैताभिरग्निः संततोऽग्निना वै देवाः सुवर्गं लोकमायन्ता अमूः कृत्तिका अभवन्यस्यैता उपधीयन्ते सुवर्गमेव ( १ ) लोकमेति गच्छति प्रकाशं चित्रमेव भवति मण्डलेष्टका उप दधातीमे वै लोका मण्डलेष्टका इमे खलु वै लोका देवपुरा देवपुरा एव प्र विशति नाऽऽर्तिमार्छत्यग्निं चिक्यानो विश्वज्योतिष उप दधातीमानेवैताभिर्लोकान्ज्योतिष्मतः कुरुतेऽथो प्राणानेवैता यजमानस्य दाधत्यैता वै देवताः सुवर्ग्यास्ता एवान्वारभ्य सुवर्गं लोकमेति (२) ॥

( सयुगादीष्टकात्रयाभिधानम् )

( सुवर्गमेव ता एव चत्वारि च )।

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां पञ्चमाष्टके तृतीयप्रपाठके नवमोऽनुवाकः ॥ ९ ॥

( अथ पञ्चमाष्टके तृतीयप्रपाठके नवमोऽनुवाकः । )

सर्वाभ्यः । वै । देवताभ्यः । अग्निः । चीयते । यत् । सयुज इति स—युजः । न । उपदध्यादित्युप—दध्यात् । देवताः । अस्य । अग्निम् । वृञ्जीरन् । यत् । सयुज इति स—युजः । उपदधातीत्युप—दधाति । आत्मना । एव । एनम् । सयुजमिति स—युजम् । चिनुते । न । अग्निना । वीति । ऋध्यते । अथो इति । यथा । पुरुषः । स्नावभिरिति स्नाव—भिः । संतत इति सं—ततः । एवम् । एव । एताभिः । अग्निः । संतत इति सं—ततः । अग्निना । वै । देवाः । सुवर्गमिति सुवः—गम् । लोकम् । आयन् । ताः । अमूः । कृत्तिकाः । अभवन् । यस्य । एताः । उपधीयन्त इत्युप—धीयन्ते । सुवर्गमिति सुवः—गम् । एव ( १ ) । लोकम् । एति । गच्छति । प्रकाशमिति प्र—काशम् । चित्रम् । एव । भवति । मण्डलेष्टका इति मण्डल—इष्टकाः । उपेति । दधाति । इमे । वै । लोकाः । मण्डलेष्टका इति मण्डल—इ-

ष्टकाः । इमे । खलु । वै । लोकाः । देवपुरा इति देव—पुराः । देवपुरा इति देव—पुराः । एव । प्रेति । विशति । न । आर्तिम् । एति । ऋच्छति । अग्निम् । चिक्यानः । विश्वज्योतिष इति विश्व—ज्योतिषः । उपेति । दधाति । इमान् । एव । एताभिः । लोकान् । ज्योतिष्मतः । कुरुते । अथो इति । प्राणानिति प्र—अनान् । एव । एताः । यजमानस्य । दाध्रति । एताः । वै । देवताः । सुवर्ग्या इति सुवः—ग्याः । ताः । एव । अन्वारभ्येत्यनु—आरभ्य । सुवर्गमिति सुवः—गम् । लोकम् । एति ( २ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे पञ्चमाष्टके तृतीयप्रपाठके नवमोऽनुवाकः ॥ ९ ॥

---

( अथ पञ्चमाष्टके तृतीयप्रपाठके दशमोऽनुवाकः । )

---

वृष्टिसनीरुप दधाति वृष्टिमेवाव रुन्धे यदेकधोपदध्यादेकमृतुं वर्षेदनुपरिहारꣳ सादयति तस्मात्सर्वानृतून्वर्षति पुरोवातसनिरसीत्याहैतद्वै वृष्टियै रूपꣳ रूपेणैव वृष्टिमव रुन्धे संयानीभिर्वै देवा इमाल्लोँकान्त्समयुस्तत्संयानीनाꣳ संयानित्वं यत्संयानीरुपदधाति यथाऽप्सु नावा संयात्येवम् ( १ ) एवैताभिर्यजमान

इमाँल्लोकान्त्सं याति प्लवो वा एषोऽग्नेर्यत्संयानीर्यत्संयानीरुपदधाति प्लवमेवैतमग्नय उप दधात्युत यस्यैतासूपहितास्वापोऽग्निꣳ हरन्त्यहृत एवास्याग्निरादित्येष्टका उप दधात्यादित्या वा एतं भूत्यै प्रति नुदन्ते योऽलं भूत्यै सन्भूतिं न प्राप्नोत्यादित्याः ( २ ) एवैनं भूतिं गमयन्त्यसौ वा एतस्याऽऽदित्यो रुचमादत्ते योऽग्निं चित्वा न रोचते यदादित्येष्टका उपदधात्यसावेवास्मिन्नादित्यो रुचं दधाति यथाऽसौ देवानाꣳ रोचत एवमेवैष मनुष्याणाꣳ रोचते घृतेष्टका उप दधात्येतद्वा अग्नेः प्रियं धाम यद्घृतं प्रियेणैवैनं धाम्ना समर्धयति ( ३ ) अथो तेजसाऽनुपरिहारꣳ सादयत्यपरिवर्गमेवास्मिन्तेजो दधाति प्रजापतिरग्निमचिनुत स यशसा व्यार्ध्यत स एता यशोदा अपश्यत्ता उपाधत्त ताभिर्वै स यश आत्मन्नधत्त यद्यशोदा उपदधाति यश एव ताभिर्यजमान आत्मन्धत्ते पञ्चोप दधाति पाङ्क्तः पुरुषो यावानेव पुरुषस्तस्मिन्यशो दधाति ( ४ ) ॥

( एवं प्राप्नोत्यादित्या अर्धयत्येकान्नपञ्चाशच्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां पञ्चमाष्टके तृतीयप्रपाठके दशमोऽनुवाकः ॥ १० ॥

---

( अथ पञ्चमाष्टके तृतीयप्रपाठके दशमोऽनुवाकः । )

---

वृष्टिसनीरिति वृष्टि—सनीः । उपेति । दधाति । वृष्टिम् । एव । अवेति । रुन्धे । यत् । एकधेत्येक—धा । उपदध्यादित्युप—दध्यात् । एकम् । ऋतुम् । वर्षेत् । अनुपरिहारमित्यनु—परिहारम् । सादयति । तस्मात् । सर्वान् । ऋतून् । वर्षति । पुरोवातसनिरिति पुरोवात—सनिः । असि । इति । आह । एतत् । वै । वृष्टयै । रूपम् । रूपेण । एव । वृष्टिम् । अवेति । रुन्धे । संयानीभिरिति सं—यानीभिः । वै । देवाः । इमान् । लोकान् । समिति । आयुः । तत् । संयानीनामिति सं—यानीनाम् । संयानित्वमिति संयानि—त्वम् । यत् । संयानीरिति सं—यानीः । उपदधातीत्युप—दधाति । यथा । अप्स्वित्यप्—सु । नावा । संयातीति सं—याति । एवम् ( १ ) । एव । एताभिः । यजमानः । इमान् । लोकान् । समिति । याति । प्लवः । वै । एषः । अग्नेः । यत् । संयानी-

रिति सं—यानीः। यत्। संयानीरिति सं—यानीः। उपदधातीत्युप—दधाति। प्लवम्। एव। एतम्। अग्नये। उपेति। दधाति। उत। यस्य। एतासु। उपहितास्वित्युप—हितासु। आपः। अग्निम्। हरन्ति। अहृतः। एव। अस्य। अग्निः। आदित्येष्टका इत्यादित्य—इष्टकाः। उपेति। दधाति। आदित्याः। वै। एतम्। भूत्यै। प्रतीति। नुदन्ते। यः। अलम्। भूत्यै। सन्। भूतिम्। न। प्राप्नोतीति प्र—आप्नोति। आदित्याः ( २ )। एव। एनम्। भूतिम्। गमयन्ति। असौ। वै। एतस्य। आदित्यः। रुचम्। एति। दत्ते। यः। अग्निम्। चित्वा। न। रोचते। यत्। आदित्येष्टका इत्यादित्य—इष्टकाः। उपदधातीत्युप—दधाति। असौ। एव। अस्मिन्। आदित्यः। रुचम्। दधाति। यथा। असौ। देवानाम्। रोचते। एवम्। एव। एषः। मनुष्याणाम्। रोचते। घृतेष्टका इति घृत—इष्टकाः। उपेति। दधाति। एतत्। वै। अग्नेः। प्रियम्। धाम। यत्। घृतम्। प्रियेण। एव। एनम्। धाम्ना। समिति। अर्धयति ( ३ )। अथो इति। तेजसा। अनुपरिहारमित्यनु—परिहारम्। सादयति। अपरिवर्गमित्यपरि—व-

र्गम् । एव । अस्मिन् । तेजः । दधाति । प्रजापतिरिति प्रजा—पतिः । अग्निम् । अचिनुत । सः । यशसा । वीति । आर्ध्यत । सः । एताः । यशोदा इति यशः—दाः । अपश्यत् । ताः । उपेति । अधत्त । ताभिः । वै । सः । यशः । आत्मन् । अधत्त । यत् । यशोदा इति यशः—दाः । उपदधातीत्युप—दधाति । यशः । एव । ताभिः । यजमानः । आत्मन् । धत्ते । पञ्च । उपेति । दधाति । पाङ्क्तः । पुरुषः । यावान् । एव । पुरुषः । तस्मिन् । यशः । दधाति (४) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे पञ्चमाष्टके तृतीयप्रपाठके दशमोऽनुवाकः ॥ १० ॥

( अथ पञ्चमाष्टके तृतीयप्रपाठक एकादशोऽनुवाकः । )

देवासुराः संयत्ता आसन्कनीयाꣳसो देवा आसन्भूयाꣳसोऽसुरास्ते देवा एता इष्टका अपश्यन्ता उपादधत भूयस्कृदसीत्येव भूयाꣳसोऽभवन्वनस्पतिभिरोषधीभिर्वरिवस्कृदसीतीमामजयन्प्राच्यसीति प्राचीं दिशमजयन्नूर्ध्वाऽसीत्यमूमजयन्नन्तरिक्षसदस्यन्तरिक्षे सीदेत्यन्तरिक्षमजयन्ततो देवा अभवन् ( १ ) पराऽसुरा यस्यैता उपधीयन्ते भूयानेव भवत्यभी-

माँल्लोकान्जयति भवंत्यात्मना परांऽस्य भ्रातृं-
व्यो भवत्यप्सुषदंसि श्येनसदंसीत्यांहैतद्वा अ-
ग्ने रूपꣳ रूपेणैवाग्निमवं रुन्धे पृथिव्यास्त्वा
द्रविंणे सादयामीत्यांहेमानेवैताँल्लोकान्द्रविं-
णावतः कुरुत आयुष्यां उपं दधात्यायुंरेव (२)
अस्मिन्दधात्यग्ने यत्ते परꣳ हृन्नामेत्यांहैतद्वा
अग्नेः प्रियं धाम प्रियमेवास्य धामोपांऽऽप्नोति
तावेहि सꣳ रंभावहा इत्यांह व्येवैनेन परिं
धत्ते पाञ्चजन्येष्वप्येंध्यग्न इत्यांहैष वा अग्निः
पाञ्चजन्यो यः पञ्चंचितीकस्तस्मांदेवमांहर्तव्यां
उपं दधात्येतद्वा ऋतूनां प्रियं धाम यदृतव्यां
ऋतूनामेव प्रियं धामावं रुन्धे सुमेक इत्यांह
संवत्सरो वै सुमेकंः संवत्सरस्यैव प्रियं धामो-
पांऽऽप्नोति ( ३ ) ॥

( अभंवन्नायुंरेवर्तव्यां उप षड्विꣳशतिश्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां पञ्चमाष्टके
तृतीयप्रपाठक एकादशोऽनुवाकः ॥ ११ ॥

---

( अथ पञ्चमाष्टके तृतीयप्रपाठके एकादशोऽनुवाकः । )

---

देवासुरा इतिं देव—असुराः । संयंत्ता इति सं—
यत्ताः । आसन्न् । कनींयाꣳसः । देवाः । आसंन्न् ।

भूयांस्सः । असुराः । ते । देवाः । एताः । इष्टकाः । अपश्यन् । ताः । उपेति । अदधत । भूयस्कृदिति भूयः—कृत् । असि । इति । एव । भूयांस्सः । अभवन् । वनस्पतिभिरिति वनस्पति—भिः । ओषधीभिरित्योषधि—भिः । वरिवस्कृदिति वरिवः—कृत् । असि । इति । इमाम् । अजयन् । प्राची । असि । इति । प्राचीम् । दिशम् । अजयन् । ऊर्ध्वा । असि । इति । अमूम् । अजयन् । अन्तरिक्षसदित्यन्तरिक्ष—सत् । असि । अन्तरिक्षे । सीद । इति । अन्तरिक्षम् । अजयन् । ततः । देवाः । अभवन् ( १ ) । परेति । असुराः । यस्य । एताः । उपधीयन्त इत्युप—धीयन्ते । भूयान् । एव । भवति । अभीति । इमान् । लोकान् । जयति । भवति । आत्मना । परेति । अस्य । भ्रातृव्यः । भवति । अप्सुषदित्यप्सु—सत् । असि । श्येनसदिति श्येन—सत् । असि । इति । आह । एतत् । वै । अग्नेः । रूपम् । रूपेण । एव । अग्निम् । अवेति । रुन्धे । पृथिव्याः । त्वा । द्रविणे । सादयामि । इति । आह । इमान् । एव । एताभिः । लोकान् । द्रविणावत इति द्रविणा—वतः । कुरुते । आयुष्याः । उपेति । दधाति । आयुः । एव ( २ ) । अस्मिन् । दधाति ।

अग्ने । यत् । ते । परम् । हृत् । नाम । इति । आह । एतत् । वै । अग्नेः । प्रियम् । धाम । प्रियम् । एव । अस्य । धाम । उपेति । आप्नोति । तौ । एति । इहि । समिति । रभावहै । इति । आह । वीति । एव । एनेन । परीति । धत्ते । पाञ्चजन्येष्विति पाञ्च—जन्येषु । अपीति । एधि । अग्ने । इति । आह । एषः । वै । अग्निः । पाञ्चजन्य इति पाञ्च—जन्यः । यः । पञ्चचितीक इति पञ्च—चितीकः । तस्मात् । एवम् । आह । ऋतव्याः । उपेति । दधाति । एतत् । वै । ऋतूनाम् । प्रियम् । धाम । यत् । ऋतव्याः । ऋतूनाम् । एव । प्रियम् । धाम । अवेति । रुन्धे । सुमेक इति सु—मेकः । इति । आह । संवत्सर इति सं—वत्सरः । वै । सुमेक इति सु—मेकः । संवत्सरस्येति सं—वत्सरस्य । एव । प्रियम् । धाम । उपेति । आप्नोति ( ३ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे पञ्चमाष्टके तृतीयप्रपाठक एकादशोऽनुवाकः ॥ ११ ॥

( अथ पञ्चमाष्टके तृतीयप्रपाठके द्वादशोऽनुवाकः । )

प्रजापतेरक्ष्यश्वयत्तत्पराऽपतत्तदश्वोऽभवद्यद-

श्वंयत्तदश्वंस्याश्वत्वं तद्देवा अंश्वमेधेनैव प्रत्यंदधुरेष वै प्रजापंतिꣳ सर्वं करोति योऽश्वमेधेन यजंते सर्वं एव भंवति सर्वंस्य वा एषा प्रायश्चित्तिः सर्वंस्य भेषजꣳ सर्वं वा एतेनं पाप्मानं देवा अंतरन्नपि वा एतेनं ब्रह्महत्यामंतरन्त्सर्वं पाप्मानंम् ( १ ) तरति तरंति ब्रह्महत्यां योऽश्वमेधेन यजंते य उं चैनमेवं वेदोत्तंरं वै तत्प्रजापंतेरक्ष्यंश्वयत्तस्मादश्वंस्योत्तरतोऽवं द्यन्ति दक्षिणतोऽन्येषां पशूनां वैतसः कटों भवत्यप्सुयोनिर्वा अश्वोऽप्सुजो वैंतसः स्व एवैनं योनौ प्रतिं ष्ठापयति चतुष्टोमः स्तोमों भवति सरड्ढ वा अश्वंस्य सक्थ्याऽवृंहत्तद्देवाश्चंतुष्टोमेनैव प्रत्यंदधुर्यच्चंतुष्टोमः स्तोमो भवत्यश्वंस्य सर्वंत्वाय ( २ ) ॥

( सर्वं पाप्मानंमवृहद्द्वादंश च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां पञ्चमाष्टके तृतीयप्रपाठके द्वादशोऽनुवाकः ॥ १२ ॥

---

उत्सन्नयज्ञ इन्द्राग्नी देवा वा अंक्ष्णयास्तोमीयां अग्नेर्भागोऽस्यग्नें जाताञ्छिपरितिं नाकसद्भिश्छन्दाꣳसि सर्वाभ्यो वृष्टिसनीर्देवासुराः कनीयाꣳसः प्रजापंतेरक्षि द्वादंश ॥ १२ ॥

उत्सन्नयज्ञो देवा वै यस्य मुख्यंवतीर्नाकसद्भिरेवैताभि-
रष्टाचत्वारिꣳशत् ॥ ४८ ॥

हरिः ॐ ।

इतिकृष्णयजुर्वेदीयतैत्तिरीयसंहितायां पञ्चमाष्टके
तृतीयः प्रपाठकः ॥ ३ ॥

---

( अथ पञ्चमाष्टके तृतीयप्रपाठके द्वादशोऽनुवाकः । )

---

प्रजापतेरिति प्रजा—पतेः । अक्षि । अश्वयत् । तत् । परेति । अपतत् । तत् । अश्वः । अभवत् । यत् । अश्वयत् । तत् । अश्वस्य । अश्वत्वमित्यश्व—त्वम् । तत् । देवाः । अश्वमेधेनेत्यश्व—मेधेन । एव । प्रतीति । अदधुः । एषः । वै । प्रजापतिमिति प्रजा—पतिम् । सर्वम् । करोति । यः । अश्वमेधेने-त्यश्व—मेधेन । यजते । सर्वः । एव । भवति । सर्वस्य । वै । एषा । प्रायश्चित्तिः । सर्वस्य । भेष-जम् । सर्वम् । वै । एतेन । पाप्मानम् । देवाः । अतरन् । अपीति । वै । एतेन । ब्रह्महत्यामिति ब्रह्म—हत्याम् । अतरन् । सर्वम् । पाप्मानम् (१) । तरति । तरति । ब्रह्महत्यामिति ब्रह्म—हत्याम् । यः । अश्वमेधेनेत्यश्व—मेधेन । यजते । यः । उ । च । एनम् । एवम् । वेद । उत्तरमित्युत्—तरम् ।

वै । तत् । प्रजापतेरिति प्रजा—पतेः । अक्षि । अश्वयत् । तस्मात् । अश्वस्य । उत्तरत इत्युत्—तरतः । अवेति । द्यन्ति । दक्षिणतः । अन्येषाम् । पशूनाम् । वैतसः । कटः । भवति । अप्सुयोनिरित्यप्सु—योनिः । वै । अश्वः । अप्सुज इत्यप्सु—जः । वेतसः । स्वे । एव । एनम् । योनौ । प्रतीति । स्थापयति । चतुष्टोम इति चतुः—स्तोमः । स्तोमः । भवति । सरट् । ह । वै । अश्वस्य । सक्थि । एति । अवृहत् । तत् । देवाः । चतुष्टोमेनेति चतुः—स्तोमेन । एव । प्रतीति । अदधुः । यत् । चतुष्टोम इति चतुः—स्तोमः । स्तोमः । भवति । अश्वस्य । सर्वत्वायेति सर्व—त्वाय ( २ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे पञ्चमाष्टके तृतीयप्रपाठके द्वादशोऽनुवाकः ॥ १२ ॥

---

हरिः ॐ ।

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे चतुर्थाष्टके तृतीयः प्रपाठकः ॥ ३ ॥

---

( अथ पञ्चमकाण्डे तृतीयः प्रपाठकः । )

---

( तत्र प्रथमादिद्वादशान्ता अनुवाकाः । )

---

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥

चितिराद्या द्वितीये स्यात्तृतीये तु चतुष्टयम् ।
द्वादशात्रानुवाकाः स्युः प्रथमे त्विष्टका इमाः ॥ २ ॥
आश्विन्यश्च तथर्तव्याः प्राणभृत्संज्ञकास्तथा ।
अपस्याश्च वयस्याश्च द्वितीयस्यां चितौ श्रुताः ॥ ३ ॥
द्वितीये स्वयमातृण्णा दिश्याः प्राणभृतस्तथा ।
बृहत्यो वालखिल्याश्च तृतीयस्यां चिताविमाः ॥ ४ ॥
तृतीयतुर्ययोरक्ष्णयास्तोमीयाश्च सृष्टयः ।
व्युष्टयश्चेष्टकाः प्रोक्ताश्चतुर्थ्यां च चिताविमाः ॥ ५ ॥
पञ्चमे त्वसपत्नाख्या विराडाख्याश्च वर्णिताः ।
षष्ठे तु स्तोमभागाख्या नाकसत्संज्ञकास्तु याः ॥ ६ ॥
चोडाख्याः स्वयमातृण्णा विकर्णी ताश्च सप्तमे ।
छन्दोभिधा अष्टमे स्युः पञ्चम्यां तु चिताविमाः ॥ ७ ॥
अथावशिष्टाः कथ्यन्ते ता विज्ञेया यथाचिति ।
सयुजो मण्डलाख्याश्च विश्वज्योतिष इत्यमूः ॥ ८ ॥
नवमे दशमे वृष्टिसनिसंयानिकाभिधाः ।
आदित्याख्या घृताख्याश्च यशोदाश्चेति वर्णिताः ॥ ९ ॥
एकादशे तु भूयस्कृदग्निरूपाभिधा अपि ।
द्रविणोदास्तथाऽऽयुष्याः स्यादग्निहृदयाभिधा ॥ १० ॥
ऋतव्याश्चेत्येवमेताः क्रमादिह समीरिताः ।
द्वादशे त्वश्वमेधस्य विधिरित्यत्र[1] निर्णयः ॥ ११ ॥

तमिममश्वमेधं विधत्ते—

**प्रजापतेरक्ष्यश्वयत्तत्पराऽपतत्तदश्वोऽभवद्यदश्वयत्तदश्वस्याश्वत्वं तद्देवा अश्वमेधेनैव प्रत्यदधुरेष वै प्रजापतिꣳ सर्वं करोति योऽश्वमेधेन यजते सर्व एव भवति,** इति ।

प्रजापतेश्चतुर्मुखस्याक्षिगोलकं केनापि व्याधिनोच्छूनमभूत् । तच्च भूमौ पतितं सदश्वरूपेणाऽऽविर्बभौ । यस्मात्कारणादश्वयत्तस्मात्कारणात्तत उत्पन्नस्य प्राणिनोऽश्वनाम संपन्नम् । ततो देवाः प्रतीकारं विचार्याश्वमेधमनुष्ठाय

---

१ ख. °रित्येव नि° ।

तेनाश्वमेधसामर्थ्येन तत्प्रजापतेरक्षि समादधुः । तस्मादेवं प्रशस्तत्वादश्वमेधेन यजेत । स च यष्टा प्रजापतिं संपूर्णं करोति । स्वयं च प्रजापतिप्राप्त्या सर्वात्मको भवति ॥

तदेवं सर्वभावप्राप्त्यर्थमश्वमेधं विधाय पुनः पापक्षयार्थमश्वमेधक्रतुं तदुपासनं च विधत्ते—

सर्वस्य वा एषा प्रायश्चित्तिः सर्वस्य भेषजꣳ सर्वं वा एतेन पाप्मानं देवा अतरन्नपि वा एतेन ब्रह्महत्यामतरन्त्सर्वं पाप्मानं तरति तरति ब्रह्महत्यां योऽश्वमेधेन यजते य उ चैनमेवं वेद , इति ।

येयमश्वमेधानुष्ठितिः सैषा सर्वस्य पाप्मन उपपातकरूपस्य महापातकरूपस्य च प्रायश्चित्तिर्भवति । किंच, सर्वस्य व्याधिजातस्य तद्धेतुपापक्षयद्वारेणाश्वमेधानुष्ठानं भेषजम् । अत एवेदानींतना देवाः पूर्वस्मिन्मनुष्यजन्मन्येतेनाश्वमेधेन गोवधादिरूपमुपपातकं ब्रह्महत्यादिरूपं महापातकं च परिहृतवन्तः । तस्मादिदानीमपि योऽश्वमेधक्रतुना यजते सोऽयमुपपातकमहापातके तरति । योऽपि च पुरुष एनमश्वमेधं शास्त्रोक्तप्रकारेण जानाति । ज्ञानं च द्विविधम्—अर्थनिर्णय उपासनं च । तत्रार्थनिर्णयः पदवाक्यप्रमाणपर्यालोचनया संपद्यते । उपासनाप्रकारस्तु सप्तमकाण्डस्यान्तिमानुवाके " यो वा अश्वस्य मेध्यस्य शिरो वेद " इत्यस्मिन्नभिधास्यते ॥

चोदकप्राप्तं दक्षिणावदानं बाधितुं विधत्ते—

उत्तरं वै तत्प्रजापतेरक्ष्यश्वयत्तस्मादश्वस्योत्तरतोऽव द्यन्ति दक्षिणतोऽन्येषां पशूनाम् , इति ।

यस्मात्प्रजापतेरुत्तरभागवर्ति वामाक्षि उच्छूनमभवत्तस्मादश्वसंबन्धिनो हविषोऽवदानमप्युत्तरस्यां दिशि कर्तव्यम् । अन्येषामश्वव्यतिरिक्तानां पशूनां दक्षिणस्यां दिश्यवदानम् । अत एव सूत्रकार आह—" पशुकाल उत्तरत उपरिष्टादग्नेर्वैतसे कटेऽश्वं प्राञ्चं यथाऽङ्गं चिनोति एवं पुरस्तात्प्रत्यञ्चं तूपरं पश्चात्प्राचीनं गोमृगं दक्षिणतः प्लक्षशाखास्वितरान्पशूनासादयति " इति॥

हविःसादनाधारं विधत्ते—

**वैतसः कटो भवत्यप्सुयोनिर्वा अश्वोऽप्सुजो वेतसः स्व एवैनं योनौ प्रति ष्ठापयति,** इति।

अप्सु जलेषु योनिर्निवासस्थानं यस्यासावप्सुयोनिः। वडवा हि समुद्रजलेष्ववतिष्ठते। वेतसस्योदकजन्यत्वं प्रसिद्धम्॥

यदुक्तं सूत्रकारेण—“श्वोभूते प्रैतायते गोतमचतुष्टोमयोः पूर्वो रथंतरसामा” इति। गोतमेन दृष्टौ यौ चतुष्टोमाख्यावेकाहक्रतू तयोर्मध्ये यः पूर्वश्चतुष्टोमः सोऽत्र कर्तव्य इति सूत्रार्थः। तमिमं विधत्ते—

**चतुष्टोमः स्तोमो भवति सरड्ढ वा अश्वस्य सक्थ्याऽऽवृहत्तद्देवाश्चतुष्टोमेनैव प्रत्यदधुर्यच्चतुष्टोमः स्तोमो भवत्यश्वस्य सर्वत्वाय,॥** इति॥

चत्वारः स्तोमास्त्रिवृत्पञ्चदशः सप्तदश एकविंशो यस्मिन्नग्निष्टोमे विद्यन्ते सोऽयं चतुष्टोमः। द्वितीयेन स्तोमशब्देन विशेष्यभूतोऽग्निष्टोमो लक्ष्यते। भीमसेनो भीमः सत्यभामा भामेतिवत्रिवृदग्निष्टोम इत्यत्र विधानात्। एकस्तोमकोऽपि कश्चिदग्निष्टोमो विद्यते तद्व्यावृत्तये चतुष्टोम इति विशिनष्टि। त्रिसुत्यात्मकस्याश्वमेधस्य प्रथममहश्चतुष्टोमात्मकाग्निष्टोमरूपं कुर्यात्। सरट्शब्देन कृकलासोऽभिधीयते। स कदाचिदश्वस्य सक्थिप्रदेशमारुह्य तत्सक्थिमांसमुद्यम्य भक्षितवान्। तच्च सक्थिरूपं विकलमङ्गं देवाश्चतुष्टोमेनैव समादधुः। तस्मादयं चतुष्टोमोऽश्वस्य संपूर्तये भवति॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये पञ्चमकाण्डे तृतीयप्रपाठके प्रथमादिद्वादशान्ता अनुवाकाः॥ १-१२॥

---

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः॥ १॥

इति श्रीमद्विद्यातीर्थमहेश्वरापरावतारस्य श्रीमद्राजाधिराजपरमेश्वरस्य श्रीवीरबुक्कमहाराजस्याऽऽज्ञापरिपालकेन माधवाचार्येण विरचिते वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये पञ्चमकाण्डे तृतीयः प्रपाठकः॥ ३॥

---

१ ख. प्रजापते। २ क. घ. ङ. त्रिरात्रं।

( अथ पञ्चमाष्टके चतुर्थः प्रपाठकः । )

( तत्र प्रथमोऽनुवाकः । )

हरिः ॐ ।

*देवासुराः संयत्ता आसन्ते न व्यंजयन्त स एता इन्द्रंस्तनूरंपश्यत्ता उपांधत्त ताभिर्वै स तनुवंमिन्द्रियं वीर्यंमात्मन्नंधत्त ततो देवा अभंवन्पराऽसुरा यदिंन्द्रतनूरुंपदधांति तनुवंमेव ताभिरिन्द्रियं वीर्यं यजंमान आत्मन्धत्तेऽथो सेन्द्रंमेवाग्निः सतंनुं चिनुते भवंत्यात्मना पराऽस्य भ्रातृंव्यः ( १ ) भवति यज्ञो देवेभ्योऽपांक्रामत्तमंवरुधं नाशंक्नुवन्त एता यंज्ञतनूरंपश्यन्ता उपांदधत ताभिर्वै ते यज्ञमवांरुन्धत यद्यंज्ञतनूरुंपदधांति यज्ञमेव ताभिर्यजंमानोऽवं रुन्धे त्रयंस्त्रिꣳशतमुपं दधाति त्रयंस्त्रिꣳशद्वै देवतां देवतां एवावं रुन्धेऽथो सात्मांनमेवाग्निꣳ सतंनुं चिनुते सात्माऽमुष्मिंल्लोँके ( २ ) भवति य एवं वेद ज्योतिंष्मतीरुपं दधाति ज्योतिंरेवास्मिंन्दधात्येताभिर्वा अग्निश्चितो ज्वंलति ताभिरेवैनꣳ समिंन्ध उभयोंरस्मै लोकयोर्ज्योतिंर्भ-

* एतदाद्येकादशानुवाकभाष्यं चतुर्थकाण्डस्थचतुर्थप्रपाठकाष्टमानुवाकमारभ्य काण्डसमाप्तिपर्यन्तं वर्तते, तत्तत्र द्रष्टव्यम् ।

वति नक्षत्रेष्टका उप दधात्येतानि वै दिवो ज्योतींꣳषि तान्येवाव रुन्धे सुकृतां वा एतानि ज्योतींꣳषि यन्नक्षत्राणि तान्येवाऽऽप्नोत्यथो अनूकाशमेवैतानि ( ३ ) ज्योतींꣳषि कुरुते सुवर्गस्य लोकस्यानुख्यात्यै यत्सꣳस्पृष्टा उप॰ दध्याद्वृष्ट्यै लोकमपि दध्यादवर्षुकः पर्जन्यः स्यादसꣳस्पृष्टा उप दधाति वृष्ट्या एव लोकं करोति वर्षुकः पर्जन्यो भवति पुरस्तादन्याः प्रतीचीरुप दधाति पश्चादन्याः प्राचीस्तस्मात्प्राचीनानि च प्रतीचीनानि च नक्षत्राण्या वर्तन्ते ( ४ ) ॥

( भ्रातृव्यो लोक एवैतान्येकचत्वारिꣳशच्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां पञ्चमाष्टके चतुर्थप्रपाठके प्रथमोऽनुवाकः ॥ १ ॥

---

( अथ पञ्चमाष्टके चतुर्थः प्रपाठकः । )

( तत्र प्रथमोऽनुवाकः । )




हरिः ॐ ।

देवासुरा इति देव—असुराः । संयत्ता इति सं—यत्ताः । आसन् । ते । न । वीति । अजयन्त । सः ।

एताः । इन्द्रः । तनूः । अपश्यत् । ताः । उपेति । अधत्त । ताभिः । वै । सः । तनुवम् । इन्द्रियम् । वीर्यम् । आत्मन् । अधत्त । ततः । देवाः । अभवन् । परेति । असुराः । यत् । इन्द्रतनूरितीन्द्र—तनूः । उपदधातीत्युप—दधाति । तनुवम् । एव । ताभिः । इन्द्रियम् । वीर्यम् । यजमानः । आत्मन् । धत्ते । अथो इति । सेन्द्रमिति स—इन्द्रम् । एव । अग्निम् । सतनुमिति स—तनुम् । चिनुते । भवति । आत्मना । परेति । अस्य । भ्रातृव्यः ( १ ) । भवति । यज्ञः । देवेभ्यः । अपेति । अक्रामत् । तम् । अवरुधमित्यव—रुधम् । न । अशक्नुवन् । ते । एताः । यज्ञतनूरिति यज्ञ—तनूः । अपश्यन् । ताः । उपेति । अदधत । ताभिः । वै । ते । यज्ञम् । अवेति । अरुन्धत । यत् । यज्ञतनूरिति यज्ञ—तनूः । उपदधातीत्युप—दधाति । यज्ञम् । एव । ताभिः । यजमानः । अवेति । रुन्धे । त्रयस्त्रिंशतमिति त्रयः—त्रिंशतम् । उपेति । दधाति । त्रयस्त्रिंशदिति त्रयः—त्रिंशत् । वै । देवताः । देवताः । एव । अवेति । रुन्धे । अथो इति । सात्मानमिति स—आत्मानम् । एव । अग्निम् । सतनुमिति स—तनुम् । चिनुते । सात्मेति स—

आत्मा । अमुष्मिन् । लोके ( २ ) । भवति । यः । एवम् । वेद । ज्योतिष्मतीः । उपेति । दधाति । ज्योतिः । एव । अस्मिन् । दधाति । एताभिः । वै । अग्निः । चितः । ज्वलति । ताभिः । एव । एनम् । समिति । इन्धे । उभयोः । अस्मै । लोकयोः । ज्योतिः । भवति । नक्षत्रेष्टका इति नक्षत्र—इष्टकाः । उपेति । दधाति । एतानि । वै । दिवः । ज्योतींषि । तानि । एव । अवेति । रुन्धे । सुकृतामिति सु—कृताम् । वै । एतानि । ज्योतींषि । यत् । नक्षत्राणि । तानि । एव । आप्नोति । अथो इति । अनूकाशमित्यनु—काशम् । एव । एतानि ( ३ ) । ज्योतींषि । कुरुते । सुवर्गस्येति सुवः—गस्य । लोकस्य । अनुख्यात्या इत्यनु—ख्यात्यै । यत् । संस्पृष्टा इति सं—स्पृष्टाः । उपदध्यादित्युप—दध्यात् । वृष्ट्यै । लोकम् । अपीति । दध्यात् । अवर्षुकः । पर्जन्यः । स्यात् । असंस्पृष्टा इत्यसं—स्पृष्टाः । उपेति । दधाति । वृष्ट्यै । एव । लोकम् । करोति । वर्षुकः । पर्जन्यः । भवति । पुरस्तात् । अन्याः । प्रतीचीः । उपेति । दधाति । पश्चात् । अन्याः । प्राचीः । त-

स्मात् । प्राचीनानि । च । प्रतीचीनानि । च । नक्षत्राणि । एति । वर्तन्ते ( ४ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे पञ्चमाष्टके चतुर्थप्रपाठके प्रथमोऽनुवाकः ॥ १ ॥

---

( अथ पञ्चमाष्टके चतुर्थप्रपाठके द्वितीयोऽनुवाकः । )

---

ऋतव्यां उप दधात्यृतूनां क्लृप्त्यै द्वंद्वमुप दधाति तस्माद्द्वंद्वमृतवोऽधृतेव वा एषा यन्मध्यमा चितिरन्तरिक्षमिव वा एषा द्वंद्वमन्यासु चितीषूप दधाति चतस्रो मध्ये धृत्या अन्तःश्लेषणं वा एताश्चितीनां यदृतव्या यदृतव्या उपदधाति चितीनां विधृत्या अवकामनूप दधात्येषा वा अग्नेर्योनिः सयोनिम् ( १ ) एवाग्निं चिनुत उवाच ह विश्वामित्रोऽददित्स ब्रह्मणाऽन्नं यस्यैता उपधीयान्तै य उ चैना एवं वेददिति संवत्सरो वा एतं प्रतिष्ठायै नुदते योऽग्निं चित्वा न प्रतितिष्ठति पञ्च पूर्वाश्चितयो भवन्त्यथ षष्ठीं चितिं चिनुते षड्वा ऋतवः संवत्सर ऋतुष्वेव संवत्सरे प्रति तिष्ठत्येता वै ( २ ) अधिपत्नीर्नामेष्टका

यस्यैता उपधीयन्तेऽधिपतिरेव समानानां भवति यं द्विष्यात्तमुपदधद्ध्यायेदेताभ्य एवैनं देवताभ्य आ वृश्चति ताजगार्तिमार्छत्यङ्गिरसः सुवर्गं लोकं यन्तो या यज्ञस्य निष्कृतिरासीत्तामृषिभ्यः प्रत्यौहन्तद्धिरण्यमभवद्य-द्धिरण्यशल्कैः प्रोक्षति यज्ञस्य निष्कृत्या अथो भेषजमेवास्मै करोति ( ३ ) अथो रूपेणैवैनꣳ समर्धयत्यथो हिरण्यज्योतिषैव सुवर्गं लोकमेति साहस्रवता प्रोक्षति साहस्रः प्रजापतिः प्रजापतेराप्त्या इमा मे अग्न इष्टका धेनवः सन्त्वित्याह धेनूरेवैनाः कुरुते ता एनं कामदुघा अमुत्रामुष्मिँल्लोक उपतिष्ठन्ते (४)॥

( सयोनिमेता वै करोत्येकान्नचत्वारिꣳशच्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां पञ्चमाष्टके चतुर्थप्रपाठके द्वितीयोऽनुवाकः ॥ २ ॥

---

( अथ पञ्चमाष्टके चतुर्थप्रपाठके द्वितीयोऽनुवाकः । )

---

ऋतव्याः । उपेति । दधाति । ऋतूनाम् । क्लृप्त्यै । द्वंद्वमिति द्वं—द्वम् । उपेति । दधाति । तस्मात् । द्वंद्वमिति द्वं—द्वम् । ऋतवः । अधृता । इव । वै । एषा । यत् । मध्यमा । चितिः । अन्त-

रिक्षम् । इव । वै । एषा । द्वंद्वमिति द्वं—द्वम् । अन्यासु । चितीषु । उपेति । दधाति । चतस्रः । मध्ये । धृत्यै । अन्तःश्लेषणमित्यन्तः—श्लेषणम् । वै । एताः । चितीनाम् । यत् । ऋतव्याः । यत् । ऋतव्याः । उपदधातीत्युप—दधाति । चितीनाम् । विधृत्या इति वि—धृत्यै । अवकाम् । अनु । उपेति । दधाति । एषा । वै । अग्नेः । योनिः । सयोनिमिति स—योनिम् ( १ ) एव । अग्निम् । चिनुते । उवाच । ह । विश्वामित्र इति विश्व—मित्रः । अदत् । इत् । सः । ब्रह्मणा । अन्नम् । यस्य । एताः । उपधीयान्ता इत्युप—धीयान्तै । यः । उ । च । एनाः । एवम् । वेदत् । इति । संवत्सर इति सं—वत्सरः । वै । एतम् । प्रतिष्ठाया इति प्रति—स्थायै । नुदते । यः । अग्निम् । चित्वा । न । प्रतितिष्ठतीति प्रति—तिष्ठति । पञ्च । पूर्वाः । चितयः । भवन्ति । अथ । षष्ठीम् । चितिम् । चिनुते । षट् । वै । ऋतवः । संवत्सर इति सं—वत्सरः । ऋतुषु । एव । संवत्सर इति सं—वत्सरे । प्रतीति । तिष्ठति । एताः । वै(२)। अधिपत्नीरित्यधि—पत्नीः । नाम । इष्टकाः। यस्य। एताः । उपधीयन्त इत्युप—धीयन्ते । अधिपतिरि-

( ऋतव्यादीष्टकात्रयप्रोक्षणयोरभिधानम् )

त्यधिं—पतिः । एव । समानानाम् । भवति । यम् । द्विष्यात् । तम् । उपदधादित्युप—दधांत् । ध्यायेत् । एताभ्यः । एव । एनम् । देवताभ्यः । एति । वृश्चति । ताजक् । आर्तिम् । एति । ऋच्छति । अङ्गिरसः । सुवर्गमिति सुवः—गम् । लोकम् । यन्तः । या । यज्ञस्य । निष्कृतिरिति निः—कृतिः । आसीत् । ताम् । ऋषिभ्य इत्यृषि—भ्यः । प्रतीति । औहन् । तत् । हिरण्यम् । अभवत् । यत् । हिरण्यशल्कैरिति हिरण्य—शल्कैः । प्रोक्षतीति प्र—उक्षति । यज्ञस्य । निष्कृत्या इति निः—कृत्यै । अथो इति । भेषजम् । एव । अस्मै । करोति ( ३ ) । अथो इति । रूपेण । एव । एनम् । समिति । अर्धयति । अथो इति । हिरण्यज्योतिषेति हिरण्य—ज्योतिषा । एव । सुवर्गमिति सुवः—गम् । लोकम् । एति । साहस्रवतेति साहस्र—वता । प्रेति । उक्षति । साहस्रः । प्रजापतिरिति प्रजा—पतिः । प्रजापतेरिति प्रजा—पतेः । आप्त्यै । इमाः । मे । अग्ने । इष्टकाः । धेनवः । सन्तु । इति । आह । धेनूः । एव । एनाः । कुरुते । ताः । एनम् । कामदुघा इति काम—दुघाः ।

अमुत्र । अमुष्मिन् । लोके । उपेति । तिष्ठन्ते (४) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे पञ्चमाष्टके चतुर्थप्रपाठके द्वितीयोऽनुवाकः ॥ २ ॥

( अथ पञ्चमाष्टके चतुर्थप्रपाठके तृतीयोऽनुवाकः । )

रुद्रो वा एष यदग्निः स एतर्हि जातो यर्हि सर्वश्चितः स यथा वत्सो जातः स्तनं प्रेप्सत्येवं वा एष एतर्हि भागधेयं प्रेप्सति तस्मै यदाहुतिं न जुहुयादध्वर्युं च यजमानं च ध्यायेच्छतरुद्रीयं जुहोति भागधेयेनैवैनꣳ शमयति नाऽऽर्तिमार्छत्यध्वर्युर्न यजमानो यद्ग्राम्याणां पशूनाम् ( १ ) पयसा जुहुयाद्ग्राम्यान्पशूञ्छुचाऽर्पयेद्यदारण्यानामारण्यान्जर्तिलयवाग्वा वा जुहुयाद्गवीधुकयवाग्वा वा न ग्राम्यान्पशून्हिनस्ति नाऽऽरण्यानथो खल्वाहुरनाहुतिर्वै जर्तिलाश्च गवीधुकाश्चेत्यजक्षीरेण जुहोत्याग्नेयी वा एषा यदजाऽऽहुत्यैव जुहोति न ग्राम्यान्पशून्हिनस्ति नाऽऽरण्यानङ्गिरसः सुवर्गं लोकं यन्तः ( २ ) अजायां घर्मं प्रासिञ्चन्त्सा शोचन्ती पर्णं पराऽजिहीत सोऽर्कोऽभवत्तदर्कस्यार्कत्वमर्कपर्णेन जुहोति सयोनि-

स्वायोदङ्तिष्ठञ्जुहोत्येषा वै रुद्रस्य दिक्स्वा-
यामेव दिशि रुद्रं निरवंदयते चरमायामिष्ट-
कायां जुहोत्यन्तत एव रुद्रं निरवंदयते त्रेधा-
विभक्तं जुहोति त्रयं इमे लोका इमानेव लो-
कान्त्समावंद्वीर्यान्करोतीयत्यग्रे जुहोति ( ३ )
अथेयत्यथेयंति त्रयं इमे लोका एभ्य एवैनं
लोकेभ्यः शमयति तिस्र उत्तरा आहुतीर्जुहो-
ति षट्सं पंद्यन्ते षड्वा ऋतवं ऋतुभिरेवैनंꣳ
शमयति यदंनुपरिक्रामं जुहुयादंन्तरवचारि-
णंꣳ रुद्रं कुर्यादथो खल्वाहुः कस्यां वाऽहं
दिशि रुद्रः कस्यां वेत्यंनुपरिक्रामंमेव होतव्यं-
मपंरिवर्गमेवैनंꣳ शमयति ( ४ ) एता वै देव-
ताः सुवर्ग्या या उत्तमास्ता यजमानं वाच-
यति ताभिरेवैनंꣳ सुवर्गं लोकं गंमयति यं द्वि-
ष्यात्तस्यं संचरे पंशूनां न्यंस्येद्यः प्रंथमः पशु-
रंभितिष्ठंति स आर्तिमार्छंति ( ५ ) ॥

( पशूनां यन्तोऽग्रे जुहोत्यपंरिवर्गमेवैनंꣳ शमयति त्रिꣳशच्चं । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां पञ्चमाष्टके
चतुर्थप्रपाठके तृतीयोऽनुवाकः ॥ ३ ॥

( अथ पञ्चमाष्टके चतुर्थप्रपाठके तृतीयोऽनुवाकः । )

---

रुद्रः । वै । एषः । यत् । अग्निः । सः । एतर्हि । जातः । यर्हि । सर्वः । चितः । सः । यथा । वत्सः । जातः । स्तनम् । प्रेप्सतीति प्र—ईप्सति । एवम् । वै । एषः । एतर्हि । भागधेयमिति भाग—धेयम् । प्रेति । ईप्सति । तस्मै । यत् । आहुतिमित्या—हुतिम् । न । जुहुयात् । अध्वर्युम् । च । यजमानम् । च । ध्यायेत् । शतरुद्रीयमिति शत—रुद्रीयम् । जुहोति । भागधेयेनेति भाग—धेयेन । एव । एनम् । शमयति । न । आर्तिम् । एति । ऋच्छति । अध्वर्युः । न । यजमानः । यत् । ग्राम्याणाम् । पशूनाम् ( १ ) । पयसा । जुहुयात् । ग्राम्यान् । पशून् । शुचा । अर्पयेत् । यत् । आरण्यानाम् । आरण्यान् । जर्तिलयवाग्वेति जर्तिल—यवाग्वा । वा । जुहुयात् । गवीधुकयवाग्वेति गवीधुक—यवाग्वा । वा । न । ग्राम्यान् । पशून् । हिनस्ति । न । आरण्यान् । अथो इति । खलु । आहुः । अनाहुतिरित्यना—हुतिः । वै । जर्तिलाः । च । गवीधुकाः । च । इति । अजक्षीरेणेत्यज—क्षीरेण । जुहोति । आग्नेयी । वै । एषा । यत् । अजा । आहुत्येत्या—

हुत्या । एव । जुहोति । न । ग्राम्यान् । पशून् । हिनस्ति । न । आरण्यान् । अङ्गिरसः । सुवर्गमिति सुवः—गम् । लोकम् । यन्तः ( २ ) । अजायाम् । घर्मम् । प्रेति । असिञ्चन् । सा । शोचन्ती । पर्णम् । परेति । अजिहीत । सः । अर्कः । अभवत् । तत् । अर्कस्य । अर्कत्वमित्यर्क—त्वम् । अर्कपर्णेनेत्यर्क—पर्णेन । जुहोति । सयोनित्वायेति सयोनि—त्वाय । उदङ् । तिष्ठन् । जुहोति । एषा । वै । रुद्रस्य । दिक् । स्वायाम् । एव । दिशि । रुद्रम् । निरवदयत इति निः—अवदयते । चरमायाम् । इष्टकायाम् । जुहोति । अन्ततः । एव । रुद्रम् । निरवदयत इति निः—अवदयते । त्रेधाविभक्तमिति त्रेधा—विभक्तम् । जुहोति । त्रयः । इमे । लोकाः । इमान् । एव । लोकान् । समावद्वीर्यानिति समावत्—वीर्यान् । करोति । इयति । अग्रे । जुहोति ( ३ ) । अथ । इयति । अथ । इयति । त्रयः । इमे । लोकाः । एभ्यः । एव । एनम् । लोकेभ्यः । शमयति । तिस्रः । उत्तरा इत्युत्—तराः । आहुतीरित्या—हुतीः । जुहोति । षट् । समिति । पद्यन्ते । षट् । वै । ऋतवः । ऋतुभिरित्यृतु—भिः । एव । एनम् । शम-

यति । यत् । अनुपरिक्रामामित्यनु—परिक्रामम् । जुहुयात् । अन्तरवचारिणमित्यन्तः—अवचारिणम् । रुद्रम् । कुर्यात् । अथो इति । खलु । आहुः । कस्याम् । वा । अहं । दिशि । रुद्रः । कस्याम् । वा । इति । अनुपरिक्रामामित्यनु—परिक्रामम् । एव । होतव्यम् । अपरिवर्गमित्यपरि—वर्गम् । एव । एनम् । शमयति ( ४ ) । एताः । वै । देवताः । सुवर्ग्या इति सुवः—ग्याः । याः । उत्तमा इत्युत्—तमाः । ताः । यजमानम् । वाचयति । ताभिः । एव । एनम् । सुवर्गमिति सुवः—गम् । लोकम् । गमयति । यम् । द्विष्यात् । तस्य । संचर इति सं—चरे । पशूनाम् । नीति । अस्येत् । यः । प्रथमः । पशुः । अभितिष्ठतीत्यभि—तिष्ठति । सः । आर्तिम् । एति । ऋच्छति ( ५ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे पञ्चमाष्टके चतुर्थप्रपाठके तृतीयोऽनुवाकः ॥ ३ ॥

---

( अथ पञ्चमाष्टके चतुर्थप्रपाठके चतुर्थोऽनुवाकः । )

---

अश्मन्नूर्जमिति परि षिञ्चति मार्जयत्येवैनमथो तर्पयत्येव स एनं तृप्तोऽक्षुध्यन्नशोचन्नमुष्मिँल्लोक उप तिष्ठते तृप्यति प्रजया पशु-

भिर्य एवं वेद तां न इषमूर्जं धत्त मरुतः सꣳ-
रराणा इत्याहान्नं वा ऊर्गन्नं मरुतोऽन्नमेवाव
रुन्धेऽश्मꣳस्ते क्षुदमुं ते शुक् (१) ऋच्छतु
यं द्विष्म इत्याह यमेव द्वेष्टि तमस्य क्षुधा च
शुचा चार्पयति त्रिः परिषिञ्चन्पर्येति त्रिवृद्वा
अग्निर्यावानेवाग्निस्तस्य शुचꣳ शमयति त्रिः
पुनः पर्येति षट्सं पद्यन्ते षड्वा ऋतव ऋतु-
भिरेवास्य शुचꣳ शमयत्यपां वा एतत्पुष्पं
यद्वेतसोऽपाम् (२) शरोऽवका वेतसशा-
खया चावकाभिश्च वि कर्षत्यापो वै शान्ताः
शान्ताभिरेवास्य शुचꣳ शमयति यो वा अग्निं
चितं प्रथमः पशुरधिक्रामतीश्वरो वै तꣳ
शुचा प्रदहो मण्डूकेन वि कर्षत्येष वै पशूनाम-
नुपजीवनीयो न वा एष ग्राम्येषु पशुषु हितो
नाऽऽरण्येषु तमेव शुचाऽर्पयत्यष्टाभिर्वि कर्षति
(३) अष्टाक्षरा गायत्री गायत्रोऽग्निर्यावा-
नेवाग्निस्तस्य शुचꣳ शमयति पावकवतीभिरन्नं
वै पावकोऽन्नेनैवास्य शुचꣳ शमयति मृत्युर्वा
एष यदग्निर्ब्रह्मण एतद्रूपं यत्कृष्णाजिनं कार्ष्णी
उपानहावुप मुञ्चते ब्रह्मणैव मृत्योरन्तर्धत्तेऽ-

न्तर्मृत्योर्धत्तेऽन्तरन्नाद्यादित्याहुरन्यामुपमुञ्चतेऽन्यां नान्तः (४) एव मृत्योर्धत्तेऽवान्नाद्यꣳ रुन्धे नमस्ते हरसे शोचिष इत्याह नमस्कृत्य हि वसीयाꣳसमुपचरन्त्यन्यं ते अस्मत्तपन्तु हेतय इत्याह यमेव द्वेष्टि तमस्य शुचाऽर्पयति पावको अस्मभ्यꣳ शिवो भवेत्याहान्नं वै पावकोऽन्नमेवाव रुन्धे द्वाभ्यामधि क्रामति प्रतिष्ठित्या अपस्यवतीभ्याꣳ शान्त्यै (५) ॥

( शुग्वेतसोऽपामष्टाभिर्वि कर्षति नान्तरेकान्नपञ्चाशच्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां पञ्चमाष्टके चतुर्थप्रपाठके चतुर्थोऽनुवाकः ॥ ४ ॥

---

( अथ पञ्चमाष्टके चतुर्थप्रपाठके चतुर्थोऽनुवाकः । )

---

अश्मन् । ऊर्जम् । इति । परीति । सिञ्चति । मार्जयन्ति । एव । एनम् । अथो इति । तर्पयति । एव । सः । एनम् । तृप्तः । अक्षुध्यन् । अशोचन् । अमुष्मिन् । लोके । उपेति । तिष्ठते । तृप्यति । प्रजयेति प्र—जया । पशुभिरिति पशु—भिः । यः । एवम् । वेद । ताम् । नः । इषम् । ऊर्जम् । धत्त । मरुतः । सꣳरराणा इति सं—रराणाः । इति । आह । अन्नम् । वै । ऊर्क् । अन्नम् । मरुतः । अन्नम् ।

एव । अवेति । रुन्धे । अश्मन् । ते । क्षुत् । अमुम् । ते । शुक् ( १ ) । ऋच्छतु । यम् । द्विष्मः । इति । आह । यम् । एव । द्वेष्टि । तम् । अस्य । क्षुधा । च । शुचा । च । अर्पयति । त्रिः । परिषिञ्चन्निति परि—सिञ्चन् । परीति । एति । त्रिवृदिति त्रि—वृत् । वै । अग्निः । यावान् । एव । अग्निः । तस्य । शुचम् । शमयति । त्रिः । पुनः । परीति । एति । षट् । समिति । पद्यन्ते । षट् । वै । ऋतवः । ऋतुभिरित्यृतु—भिः । एव । अस्य । शुचम् । शमयति । अपाम् । वै । एतत् । पुष्पम् । यत् । वेतसः । अपाम् ( २ ) । शरः । अवकाः । वेतसशाखयेति वेतस—शाखया । च । अवकाभिः । च । वीति । कर्षति । आपः । वै । शान्ताः । शान्ताभिः । एव । अस्य । शुचम् । शमयति । यः । वै । अग्निम् । चितम् । प्रथमः । पशुः । अधिक्रामतीत्यधि—क्रामति । ईश्वरः । वै । तम् । शुचा । प्रदह इति प्र—दहः । मण्डूकेन । वीति । कर्षति । एषः । वै । पशूनाम् । अनुपजीवनीय इत्यनुप—जीवनीयः । न । वै । एषः । ग्राम्येषु । पशुषु । हितः । न । आरण्येषु । तम् । एव । शुचा । अर्पयति । अष्टाभिः ।

वीति । कर्षति ( ३ ) । अष्टाक्षरेत्यष्टा—अक्षरा । गायत्री । गायत्रः । अग्निः । यावान् । एव । अग्निः । तस्य । शुचम् । शमयति । पावकवतीभिरिति पावक—वतीभिः । अन्नम् । वै । पावकः । अन्नेन । एव । अस्य । शुचम् । शमयति । मृत्युः । वै । एषः । यत् । अग्निः । ब्रह्मणः । एतत् । रूपम् । यत् । कृष्णाजिनमिति कृष्ण—अजिनम् । कार्ष्णी इति । उपानहौ । उपेति । मुञ्चते । ब्रह्मणा । एव । मृत्योः । अन्तः । धत्ते । अन्तः । मृत्योः । धत्ते । अन्तः । अन्नाद्यादित्यन्न—अद्यात् । इति । आहुः । अन्याम् । उपमुञ्चत इत्युप—मुञ्चेत । अन्याम् । न । अन्तः । ( ४ ) । एव । मृत्योः । धत्ते । अवेति । अन्नाद्यमित्यन्न—अद्यम् । रुन्धे । नमः । ते । हरसे । शोचिषे । इति । आह । नमस्कृत्येति नमः—कृत्य । हि । वसीयांसम् । उपचरन्तीत्युप—चरन्ति । अन्यम् । ते । अस्मत् । तपन्तु । हेतयः । इति । आह । यम् । एव । द्वेष्टि । तम् । अस्य । शुचा । अर्पयति । पावकः । अस्मभ्यमित्यस्म—भ्यम् । शिवः । भव । इति । आह । अन्नम् । वै । पावकः । अन्नम् । एव । अवेति । रुन्धे । द्वाभ्याम् । अधीति । क्रामति ।

(व्याघारणाद्यभिधानम्)

प्रतिष्ठित्या इति प्रति—स्थित्यै। अपस्यवतीभ्यामित्यपस्य—वतीभ्याम्। शान्त्यै (५)॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे पञ्चमाष्टके चतुर्थप्रपाठके चतुर्थोऽनुवाकः॥ ४॥

(अथ पञ्चमाष्टके चतुर्थप्रपाठके पञ्चमोऽनुवाकः।)

नृषदे वडिति व्याघारयति पङ्क्त्याऽऽहुत्या यज्ञमुखमा रंभतेऽक्ष्णया व्याघारयति तस्मादक्ष्णया पशवोऽङ्गानि प्र हरन्ति प्रतिष्ठित्यै यद्वषट्कुर्याद्यातयामाऽस्य वषट्कारः स्याद्यन्न वषट्कुर्याद्रक्षांसि यज्ञं हन्युर्वडित्याह परोक्षमेव वषट्करोति नास्य यातयामा वषट्कारो भवति न यज्ञं रक्षांसि घ्नन्ति हुतादो वा अन्ये देवाः (१) अहुतादोऽन्ये तानग्निचिदेवोभयान्प्रीणाति ये देवा देवानामिति दध्ना मधुमिश्रेणावोक्षति हुतादश्चैव देवानहुतादश्च यजमानः प्रीणाति ते यजमानं प्रीणन्ति दध्नैव हुतादः प्रीणाति मधुषाऽहुतादो ग्राम्यं वा एतदन्नं यद्दध्यारण्यं मधु यद्दध्ना मधुमिश्रेणावोक्षत्युभयस्यावरुद्ध्यै ग्रुमुष्टिनाऽवोक्षति प्राजापत्यः (२) वै ग्रुमुष्टिः

संयोनित्वाय द्वाभ्यां प्रतिष्ठित्या अनुपरिचार-
मवोक्षत्यपरिवर्गमेवैनान्प्रीणाति वि वा एष
प्राणैः प्रजया पशुभिर्ऋध्यते योऽग्निं चिन्वन्ने-
धिक्रामति प्राणदा अपानदा इत्याह प्राणाने-
वाऽऽत्मन्धत्ते वर्चोदा वरिवोदा इत्याह प्रजा
वै वर्चः पशवो वरिवः प्रजामेव पशूनात्मन्धत्त
इन्द्रो वृत्रमहन्तं वृत्रः ( ३ ) हतः षोडशभि-
र्भोगैरसिनात्स एतामग्नयेऽनीकवत आहुतिम-
पश्यत्तामजुहोत्तस्याग्निरनीकवान्त्स्वेन भागधे-
येन प्रीतः षोडशधा वृत्रस्य भोगानप्यदहद्वै-
श्वकर्मणेन पाप्मनो निरमुच्यत यदग्नयेऽनी-
कवत आहुतिं जुहोत्यग्निरेवास्यानीकवान्त्स्वेन
भागधेयेन प्रीतः पाप्मानमपि दहति वैश्वक-
र्मणेन पाप्मनो निर्मुच्यते यं कामयेत चिरं
पाप्मनः ( ४ ) निर्मुच्येतेत्येकैकं तस्य जुहु-
याच्चिरमेव पाप्मनो निर्मुच्यते यं कामयेत
ताजक्पाप्मनो निर्मुच्येतेति सर्वाणि तस्या-
नुद्रुत्य जुहुयात्ताजगेव पाप्मनो निर्मुच्यतेऽथो
खलु नानेव सूक्ताभ्यां जुहोति नानेव सूक्तयो-
र्वीर्यं दधात्यथो प्रतिष्ठित्यै ( ५ ) ॥

(देवाः प्राजापत्यो वृत्रश्श्रिरं पाप्मनेश्चत्वारिंशच्च।)

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां पञ्चमाष्टके चतुर्थप्रपाठके पञ्चमोऽनुवाकः ॥ ५ ॥

---

(अथ पञ्चमाष्टके चतुर्थप्रपाठके षष्ठोऽनुवाकः।)

---

नृषद् इति॑ नृ—सदे॑। वट्। इति॑। व्याघा॑रयतीति॑ वि—आघा॑रयति। पङ्क्त्या। आहुत्येत्या—हुत्या। यज्ञमुखमिति॑ यज्ञ—मुखम्। एति॑। रभते। अक्ष्णया। व्याघा॑रयतीति॑ वि—आघा॑रयति। तस्मा॑त्। अक्ष्णया। पशवः॑। अङ्गा॑नि। प्रेति॑। हरन्ति। प्रति॑ष्ठित्या इति प्रति॑—स्थित्यै। यत्। वषट्कुर्यादिति॑ वषट्—कुर्यात्। यातयामेति॑ यात—यामा। अस्य। वषट्कार इति॑ वषट्—कारः। स्यात्। यत्। न। वषट्कुर्यादिति॑ वषट्—कुर्यात्। रक्षा॑ꣳसि। यज्ञम्। हन्युः। वट्। इति॑। आह। परोक्षमिति॑ परः—अक्षम्। एव। वषट्। करोति। न। अस्य। यातयामेति॑ यात—यामा। वषट्कार इति॑ वषट्—कारः। भवति। न। यज्ञम्। रक्षा॑ꣳसि। घ्नन्ति। हुताद इति॑ हुत—अदः। वै। अन्ये। देवाः (१)। अहुताद इत्यहुत—अदः। अन्ये। तान्। अग्निचिदित्य॑ग्नि—चित्। एव। उभ-

यान् । प्रीणाति । ये । देवाः । देवानाम् । इति । दध्ना । मधुमिश्रेणेति मधु—मिश्रेण । अवेति । उक्षति । हुताद इति हुत—अदः । च । एव । देवान् । अहुताद इत्यहुत—अदः । च । यजमानः । प्रीणाति । ते । यजमानम् । प्रीणन्ति । दध्ना । एव । हुताद इति हुत—अदः । प्रीणाति । मधुषा । अहुताद इत्यहुत—अदः । ग्राम्यम् । वै । एतत् । अन्नम् । यत् । दधि । आरण्यम् । मधु । यत् । दध्ना । मधुमिश्रेणेति मधु—मिश्रेण । अवोक्षतीत्यव—उक्षति । उभयस्य । अवरुद्ध्या इत्यव—रुद्ध्यै । ग्रमुष्टिना । अवेति । उक्षति । प्राजापत्य इति प्राजा—पत्यः ( २ ) । वै । ग्रमुष्टिः । सयोनित्वायेति सयोनि—त्वाय । द्वाभ्याम् । प्रतिष्ठित्या इति प्रति—स्थित्यै । अनुपरिचारमित्यनु—परिचारम् । अवेति । उक्षति । अपरिवर्गमित्यपरि—वर्गम् । एव । एनान् । प्रीणाति । वीति । वै । एषः । प्राणैरिति प्र—अनैः । प्रजयेति प्र—जया । पशुभिरिति पशु—भिः । ऋध्यते । यः । अग्निम् । चिन्वन् । अधिक्रामतीत्यधि—क्रामति । प्राणदा इति प्राण—दाः । अपानदा इत्यपान—दाः । इति ।

आह। प्राणानिति प्र—अनान्। एव। आत्मन्। धत्ते। वर्चोदा इति वर्चः—दाः। वरिवोदा इति वरिवः—दाः। इति। आह। प्रजेति प्र—जा। वै। वर्चः। पशवः। वरिवः। प्रजामिति प्र—जाम्। एव। पशून्। आत्मन्। धत्ते। इन्द्रः। वृत्रम्। अहन्। तम्। वृत्रः ( ३ )। हतः। षोडशभिरिति षोडश—भिः। भोगैः। असिनात्। सः। एताम्। अग्नये। अनीकवत इत्यनीक—वते। आहुतिमित्या—हुतिम्। अपश्यत्। ताम्। अजुहोत्। तस्य। अग्निः। अनीकवानित्यनीक—वान्। स्वेन। भागधेयेनेति भाग—धेयेन। प्रीतः। षोडशधेति षोडश—धा। वृत्रस्य। भोगान्। अपीति। अदहत्। वैश्वकर्मणेनेति वैश्व—कर्मणेन। पाप्मनः। निरिति। अमुच्यत। यत्। अग्नये। अनीकवत इत्यनीक—वते। आहुतिमित्या—हुतिम्। जुहोति। अग्निः। एव। अस्य। अनीकवानित्यनीक—वान्। स्वेन। भागधेयेनेति भाग—धेयेन। प्रीतः। पाप्मानम्। अपीति। दहति। वैश्वकर्मणेनेति वैश्व—कर्मणेन। पाप्मनः। निरिति। मुच्यते। यम्। कामयेत। चिरम्। पाप्मनः ( ४ )। निरिति। मुच्येत। इति।

एकैकमित्येकंम्—एकम् । तस्यं । जुहुयात् । चिरम् । एव । पाप्मनंः । निरिति । मुच्यते । यम् । कामयेत । ताजक् । पाप्मनंः । निरिति । मुच्येत । इति । सर्वाणि । तस्यं । अनुद्रुत्येत्यंनु—द्रुत्यं । जुहुयात् । ताजक् । एव । पाप्मनंः । निरिति । मुच्यते । अथो इति । खलुं । नानां । एव । सूक्ताभ्यामिति सु—उक्ताभ्याम् । जुहोति । नानां । एव । सूक्तयोरिति सु—उक्तयोः । वीर्यम् । दधाति । अथो इति । प्रतिष्ठित्या इति प्रति—स्थित्यै ( ५ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे पञ्चमाष्टके चतुर्थप्रपाठके पञ्चमोऽनुवाकः ॥ ५ ॥

---

( अथ पञ्चमाष्टके चतुर्थप्रपाठके षष्ठोऽनुवाकः । )

---

उदेनमुत्तरां नयेति समिध आ दंधाति यथा जनं यतेऽवसं करोति तादृगेव तत्तिस्र आ दंधाति त्रिवृद्वा अग्निर्यावानेवाग्निस्तस्मै भागधेयं करोत्यौदुम्बरीर्भवन्त्यूर्ग्वा उदुम्बर ऊर्जमेवास्मा अपि दधात्युदु त्वा विश्वे देवा इत्याह प्राणा वै विश्वे देवाः प्राणैः ( १ ) एवैनमुद्यच्छतेऽग्ने भरंन्तु चित्तिभिरित्याह यस्मां एवैनं चित्तायोद्यच्छंते तेनैवैनं समर्ध-

यति पञ्च दिशो दैवीर्यज्ञमवन्तु देवीरित्याह दिशो ह्येषोऽनु प्रच्यवतेऽपामतिं दुर्मतिं बाधमाना इत्याह रक्षसामपहत्यै रायस्पोषे यज्ञपतिमाभजन्तीरित्याह पशवो वै रायस्पोषः ( २ ) पशूनेवाव रुन्धे षड्भिर्हरति षड्वा ऋतव ऋतुभिरेवैनꣳ हरति द्वे परिगृह्यवती भवतो रक्षसामपहत्यै सूर्यरश्मिर्हरिकेशः पुरस्तादित्याह प्रसूत्यै ततः पावका आशिषो नो जुषन्तामित्याहान्नं वै पावकोऽन्नमेवाव रुन्धे देवासुराः संयत्ता आसन्ते देवा एतदप्रतिरथमपश्यन्तेन वै तेऽप्रति ( ३ ) असुरानजयन्तदप्रतिरथस्याप्रतिरथत्वं यदप्रतिरथं द्वितीयो होताऽन्वाहाप्रत्येव तेन यजमानो भ्रातृव्यान्जयत्यथो अनभिजितमेवाभि जयति दशर्चं भवति दशाक्षरा विराड्विराजेमौ लोकौ विधृतावनयोर्लोकयोर्विधृत्या अथो दशाक्षरा विराडन्नं विराड्विराज्येवान्नाद्ये प्रति तिष्ठत्यसदिव वा अन्तरिक्षमन्तरिक्षमिवाऽऽग्नीध्रमाग्नीध्रे( ४ ) अश्मानं नि दधाति सत्त्वाय द्वाभ्यां प्रतिष्ठित्यै विमान एष दिवो मध्य आस्त इत्याह व्येवै-

तथा मिमीते मध्ये दिवो निहितः पृश्निरश्मे-
त्याहान्नं वै पृश्न्यन्नमेवाव रुन्धे चतसृभिरा
पुच्छादेति चत्वारि छन्दाꣳसि छन्दोभिरेवेन्द्रं
विश्वा अवीवृधन्नित्याह वृद्धिमेवोपावर्तते वाजा-
नाꣳ सत्पतिं पतिम् ( ५ ) इत्याहान्नं वै
वाजोऽन्नमेवाव रुन्धे सुम्नहूर्यज्ञो देवाꣳ आ चं
वक्षदित्याह प्रजा वै पशवः सुम्नं प्रजामेव
पशूनात्मन्धत्ते यक्षदग्निर्देवो देवाꣳ आ चं
वक्षदित्याह स्वगाकृत्यै वाजस्य मा प्रसवेनो-
द्ग्राभेणोदग्रभीदित्याहासौ वा आदित्य उद्य-
न्नुद्ग्राभ एष निम्रोचन्निग्राभो ब्रह्मणैवाऽऽत्मा-
नमुद्गृह्णाति ब्रह्मणा भ्रातृव्यं नि गृह्णाति (६)॥

( प्राणैः पोषोऽप्रत्याग्नीध्रे पतिमेष दश च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां पञ्चमाष्टके
चतुर्थप्रपाठके षष्ठोऽनुवाकः ॥ ६ ॥

---

( अथ पञ्चमाष्टके चतुर्थप्रपाठके षष्ठोऽनुवाकः । )

---

उदिति । एनम् । उत्तरामित्युत्—तराम् । नय ।
इति । समिध इति सम्—इधः । एति । दधाति ।
यथा । जनम् । यते । अवसम् । करोति । तादृक् ।
एव । तत् । तिस्रः । एति । दधाति । त्रिवृदिति

(समिदाधानादिविधिः)

त्रि—वृत्। वै। अग्निः। यावान्। एव। अग्निः। तस्मै। भागधेयमिति भाग—धेयम्। करोति। औदुम्बरीः। भवन्ति। ऊर्क्। वै। उदुम्बरः। ऊर्जम्। एव। अस्मै। अपीति। दधाति। उदिति। उ। त्वा। विश्वे। देवाः। इति। आह। प्राणा इति प्र—अनाः। वै। विश्वे। देवाः। प्राणैरिति प्र—अनैः (१)। एव। एनम्। उदिति। यच्छते। अग्ने। भरन्तु। चित्तिभिरिति चित्ति—भिः। इति। आह। यस्मै। एव। एनम्। चित्ताय। उद्यच्छत इत्युत्—यच्छते। तेन। एव। एनम्। समिति। अर्धयति। पञ्च। दिशः। दैवीः। यज्ञम्। अवन्तु। देवीः। इति। आह। दिशः। हि। एषः। अन्विति। प्रच्यवत इति प्र—च्यवते। अपेति। अमतिम्। दुर्मतिमिति दुः—मतिम्। बाधमानाः। इति। आह। रक्षसाम्। अपहत्या इत्यप—हत्यै। रायः। पोषे। यज्ञपतिमिति यज्ञ—पतिम्। आभजन्तीरित्या—भजन्तीः। इति। आह। पशवः। वै। रायः। पोषः (२)। पशून्। एव। अवेति। रुन्धे। षड्भिरिति षट्—भिः। हरति। षट्। वै। ऋतवः। ऋतुभिरित्यृतु—भिः। एव। एनम्। हरति। द्वे इति। परिगृह्यवती इति.

परिगृह्य—वती । भवतः । रक्षसाम् । अपहत्या इत्यप—हत्यै । सूर्यरश्मिरिति सूर्य—रश्मिः । हरिकेश इति हरि—केशः । पुरस्तात् । इति । आह । प्रसूत्या इति प्र—सूत्यै । ततः । पावकाः । आशिष इत्या—शिषः । नः । जुषन्ताम् । इति । आह । अन्नम् । वै । पावकः । अन्नम् । एव । अवेति । रुन्धे । देवासुरा इति दे-व—असुराः । संयत्ता इति सं—यत्ताः । आसन् । ते । देवाः । एतत् । अप्रतिरथमित्यप्रति—रथम् । अपश्यन् । तेन । वै । ते । अप्रति ( ३ ) । असुरान् । अजयन् । तत् । अप्रतिरथस्येत्यप्रति—रथस्य । अप्रतिरथत्वमित्यप्रतिरथ—त्वम् । यत् । अप्रतिरथमित्यप्रति—रथम् । द्वितीयः । होता । अन्वाहेत्य-नु—आह । अप्रति । एव । तेन । यजमानः । भ्रातृव्यान् । जयति । अथो इति । अनभिजितमित्यन-भि—जितम् । एव । अभीति । जयति । दशर्चमिति दश—ऋचम् । भवति । दशाक्षरेति दश—अक्षरा । विराडिति वि—राट् । विराजेति वि—राजा । इमौ । लोकौ । विधृताविति वि—धृतौ । अनयोः । लोकयोः । विधृत्या इति वि—धृत्यै । अथो इति । दशाक्षरेति दश—अक्षरा । विराडिति वि—राट् । अन्नम् ।

( समिदाधानादिविधिः )

विराडिति वि—राट्। विराजीति वि—राजि। एव। अन्नाद्य इत्यन्न—अद्ये। प्रतीति। तिष्ठति। असत्। इव। वै। अन्तरिक्षम्। अन्तरिक्षम्। इव। आग्नीध्रमित्याग्नि—इध्रम्। आग्नीध्र इत्याग्नि—इध्रे ( ४ )। अश्मानम्। नीति। दधाति। सत्त्वायेति सत्—त्वाय। द्वाभ्याम्। प्रतिष्ठित्या इति प्रति—स्थित्यै। विमान इति वि—मानः। एषः। दिवः। मध्ये। आस्ते। इति। आह। वीति। एव। एतया। मिमीते। मध्ये। दिवः। निहित इति नि—हितः। पृश्निः। अश्मा। इति। आह। अन्नम्। वै। पृश्नि। अन्नम्। एव। अवेति। रुन्धे। चतसृभिरिति चतसृ—भिः। एति। पुच्छात्। एति। चत्वारि। छन्दांसि। छन्दोभिरिति छन्दः—भिः। एव। इन्द्रम्। विश्वाः। अवीवृधन्। इति। आह। वृद्धिम्। एव। उपावर्तत इत्युप—आवर्तते। वाजानाम्। सत्पतिमिति सत्—पतिम्। पतिम् ( ५ )। इति। आह। अन्नम्। वै। वाजः। अन्नम्। एव। अवेति। रुन्धे। सुम्नहूरिति सुम्न—हूः। यज्ञः। देवान्। एति। च। वक्षत्। इति। आह। प्रजेति प्र—जा। वै। पशवः। सुम्नम्। प्रजामिति प्र—जाम्। एव। पशून्। आत्मन्।

धत्ते । यक्षत् । अग्निः । देवः । देवान् । एति । च । वक्षत् । इति । आह । स्वगाकृत्या इति स्वगा—कृत्यै । वाजस्य । मा । प्रसवेनेति प्र—सवेन । उद्ग्राभेणेत्युत्—ग्राभेण । उदिति । अग्रभीत् । इति । आह । असौ । वै । आदित्यः । उद्यन्नित्युत्—यन् । उद्ग्राभ इत्युत्—ग्राभः । एषः । निम्रोचन्निति नि—म्रोचन् । निग्राभ इति नि—ग्राभः । ब्रह्मणा । एव । आत्मानम् । उद्गृह्णातीत्युत्—गृह्णाति । ब्रह्मणा । भ्रातृव्यम् । नीति । गृह्णाति ( ६ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे पञ्चमाष्टके चतुर्थप्रपाठके षष्ठोऽनुवाकः ॥ ६ ॥

---

( अथ पञ्चमाष्टके चतुर्थप्रपाठके सप्तमोऽनुवाकः । )

---

प्राचीमनु प्रदिशं प्रेहि विद्वानित्याह देवलोकमेवैतयोपावर्तते क्रमध्वमग्निना नाकमित्याहेमानेवैतया लोकान्क्रमते पृथिव्या अहमुदन्तरिक्षमाऽरुहमित्याहेमानेवैतया लोकान्त्समारोहति सुवर्यन्तो नापेक्षन्त इत्याह सुवर्गमेवैतया लोकमेत्यग्ने प्रेहि ( १ ) प्रथमो देवयतामित्याहोभयेष्वेवैतया देवमनुष्येषु चक्षुर्दधाति पञ्चभिरधि क्रामति पाङ्क्तो यज्ञो

यावा॑नेव य॒ज्ञस्तेन॑ स॒ह सु॑व॒र्गं लो॒कमे॑ति॒ नक्तो॒षासेति॑ पुरोनुवा॒क्या॑मन्वा॑ह॒ प्रत्या॒ अग्ने॑ सहस्रा॒क्षेत्या॑ह साह॒स्रः प्र॒जाप॑तिः प्र॒जाप॑ते॒राप्त्यै॒ तस्मै॑ ते विधेम॒ वाजा॑य॒ स्वाहेत्या॒हान्नं॒ वै वाजोऽन्न॑मे॒वाव॑ ( २ ) रु॒न्धे॒ द॒ध्नः पू॒र्णामौदु॑म्बरी॒ꣳ स्वयमातृण्णायां जु॒हो॒त्यूर्ग्वै दध्यूर्गुदु॒म्बरो॒ऽसौ स्वयमातृण्णाऽमुष्या॑मे॒वोर्जं॑ दधाति॒ तस्मा॑द॒मुतो॒ऽर्वाची॒मूर्ज॒मुप॑ जीवामस्ति॒स्र॒भिः साद॑यति त्रि॒वृद्वा अ॒ग्निर्यावा॑नेवा॒ग्निस्तं॑ प्र॑ति॒ष्ठां ग॑मयति॒ प्रेद्धो॑ अग्ने दीदिहि पु॒रो न॒ इत्यौदु॑म्बरी॒मा द॑धात्ये॒षा वै सू॒र्मी कर्ण॑कावत्ये॒तया॑ ह स्म ( ३ ) वै दे॒वा असु॑राणाꣳ शतत॒र्हाꣳस्तृꣳह॑न्ति॒ यदे॒तया॑ स॒मिध॑मा॒दधा॑ति॒ वज्र॑मे॒वैतच्छ॑त॒घ्नीं यज॑मानो॒ भ्रातृ॑व्याय॒ प्र ह॑रति॒ स्तृत्या॒ अछ॑म्बट्कारं वि॒धेम॑ ते पर॒मे जन्म॑न्नग्न॒ इति॒ वैक॑ङ्कतीमा द॑धाति॒ भा ए॒वाव॑ रु॒न्धे॒ ताꣳ स॑वि॒तुर्वरे॑ण्यस्य चि॒त्रामिति॑ शमी॒मयी॒ꣳ शान्त्या॑ अ॒ग्निर्वै ह॒ वा अ॑ग्नि॒चितं॑ दु॒हेऽग्नि॒चिद्वा॒ऽग्निं दु॑हे॒ ताम् ( ४ ) स॒वि॒तुर्वरे॑ण्यस्य चि॒त्रामित्या॑है॒ष वा अ॒ग्नेर्दो॑ह॒स्तम॑स्य॒ कण्व॑ ए॒व श्रा॑य॒सो॒ऽवेत्तेन॑

ह स्मैनꣳ स दुंहे यदेतयां समिधंमादधांत्य-
ग्निचिदेव तदग्निं दुंहे सप्त तें अग्ने समिधंः सप्त
जिह्वा इत्यांह सप्तैवास्य साप्तांनि प्रीणाति पूर्णयां
जुहोति पूर्ण इंव हि प्रजापंतिः प्रजापंतेः
( ५ ) आप्त्यै न्यूंनया जुहोति न्यूंनाद्धि प्रजा-
पंतिः प्रजा असृंजत प्रजानाꣳ सृष्ट्यां आग्नि-
र्देवेभ्यो निलांयत स दिशोऽनु प्राविंशज्जुह्व-
न्मनंसा दिशों ध्यायेद्दिग्भ्य एवैनमवं रुन्धे
दध्ना पुरस्तांज्जुहोत्याज्येनोपरिंष्टात्तेजंश्चैवास्मां
इन्द्रियं चं समीचीं दधाति द्वादंशकपालो वैश्वा-
नरो भंवति द्वादंश मासांः संवत्सरः संवत्सरोंऽ-
ग्निर्वैश्वानरः साक्षाद् ( ६ ) एव वैश्वानरमवं
रुन्धे यत्प्रयाजानूयाजान्कुर्याद्विकंस्तिः सा य-
ज्ञस्यं दर्विहोमं करोति यज्ञस्य प्रतिंष्ठित्यै राष्ट्रं
वै वैश्वानरो विण्मरुतों वैश्वानरꣳ हुत्वा मांरुता-
ञ्जुंहोति राष्ट्र एव विशमनुं बध्नात्युच्चैर्वैश्वान-
रस्याऽऽश्रांवयत्युपाꣳशु मांरुताञ्जुंहोति तस्मां-
द्राष्ट्रं विशमतिं वदति मारुता भंवन्ति मरुतो
वै देवानां विशों देवविशेनैवास्मैं मनुष्यवि-
वशमवं रुन्धे सप्त भंवन्ति सप्तगंणा वै मरुतां

गणश एव विशमवं रुन्धे गणेनं गणमंनुद्रुत्यं जुहोति विशंमेवास्मा अनुंवर्त्मानं करोति (७)॥

( अग्ने प्रेद्धवं स्म दुहे तां प्रजापंतेः साक्षान्मंनुष्यविशमेकंविंशतिश्च।)

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां पञ्चमाष्टके चतुर्थप्रपाठके सप्तमोऽनुवाकः ॥ ७ ॥

---

( अथ पञ्चमाष्टके चतुर्थप्रपाठके सप्तमोऽनुवाकः । )

---

प्राचींम् । अन्विति । प्रदिशमितिं प्र—दिशंम् । प्रेतिं । इहि । विद्वान् । इतिं । आह । देवलोकमितिं देव—लोकम् । एव । एतयां । उपावंर्तत इत्युंप—आवंर्तते । क्रमंध्वम् । अग्निनां । नाकंम् । इतिं । आह । इमान् । एव । एतयां । लोकान् । क्रमते । पृथिव्याः । अहम् । उदितिं । अन्तरिंक्षम् । एतिं । अरुहम् । इतिं । आह । इमान् । एव । एतयां । लोकान् । समारोंहतीतिं सम्—आरोंहति । सुवंः । यन्तंः । न । अपेतिं । ईक्षन्ते । इतिं । आह । सुवर्गमितिं सुवः—गम् । एव । एतयां । लोकम् । एति । अग्ने । प्रेतिं । इहि (१)। प्रथमः । देवयतामितिं देव—यताम् । इतिं । आह । उभयेषु । एव । एतयां । देवमनुष्येष्वितिं देव—मनुष्येषुं । चक्षुंः । दधाति । पञ्चभिरितिं पञ्च—भिः । अधीतिं । क्रामति ।

पाङ्क्तः । यज्ञः । यावान् । एव । यज्ञः । तेन । सह । सुवर्गमिति सुवः—गम् । लोकम् । एति । नक्तोषासा । इति । पुरोनुवाक्यामिति पुरः—अनुवाक्याम् । अन्विति । आह । प्रत्यै । अग्ने । सहस्राक्षेति सहस्र—अक्ष । इति । आह । साहस्रः । प्रजापतिरिति प्रजा—पतिः । प्रजापतेरिति प्रजा—पतेः । आप्त्यै । तस्मै । ते । विधेम । वाजाय । स्वाहा । इति । आह । अन्नम् । वै । वाजः । अन्नम् । एव । अवेति ( २ ) । रुन्धे । दध्नः । पूर्णाम् । औदुम्बरीम् । स्वयमातृण्णायामिति स्वयम्—आतृण्णायाम् । जुहोति । ऊर्क् । वै । दधि । ऊर्क् । उदुम्बरः । असौ । स्वयमातृण्णेति स्वयम्—आतृण्णा । अमुष्याम् । एव । ऊर्जम् । दधाति । तस्मात् । अमुतः । अर्वाचीम् । ऊर्जम् । उपेति । जीवामः । तिसृभिरिति तिसृ—भिः । सादयति । त्रिवृदिति त्रि—वृत् । वै । अग्निः । यावान् । एव । अग्निः । तम् । प्रतिष्ठामिति प्रति—स्थाम् । गमयति । प्रेद्ध इति प्र—इद्धः । अग्ने । दीदिहि । पुरः । नः । इति । औदुम्बरीम् । एति । दधाति । एषा । वै । सूर्मी । कर्णकावतीति कर्णक—वती । एतया । ह । स्म ( ३ ) । वै । देवाः । असु-

राणाम्। शततर्हानिति शत—तर्हान्। तृंहन्ति। यत्। एतया। समिधमिति सम्—इधम्। आदधातीत्या—दधाति। वज्रम्। एव। एतत्। शतघ्नीमिति शत—घ्नीम्। यजमानः। भ्रातृव्याय। प्रेति। हरति। स्तृत्यै। अछम्बट्कारमित्यछम्बट्—कारम्। विधेम। ते। परमे। जन्मन्। अग्ने। इति। वैकङ्कतीम्। एति। दधाति। भाः। एव। अवेति। रुन्धे। ताम्। सवितुः। वरेण्यस्य। चित्राम्। इति। शमीमयीमिति शमी—मयीम्। शान्त्यै। अग्निः। वा। ह। वै। अग्निचितमित्यग्नि—चितम्। दुहे। अग्निचिदित्यग्नि—चित्। वा। अग्निम्। दुहे। ताम् (४)। सवितुः। वरेण्यस्य। चित्राम्। इति। आह। एषः। वै। अग्नेः। दोहः। तम्। अस्य। कण्वः। एव। श्रायसः। अवेत्। तेन। ह। स्म। एनम्। सः। दुहे। यत्। एतया। समिधमिति सम्—इधम्। आदधातीत्या—दधाति। अग्निचिदित्यग्नि—चित्। एव। तत्। अग्निम्। दुहे। सप्त। ते। अग्ने। समिध इति सम्—इधः। सप्त। जिह्वाः। इति। आह। सप्त। एव। अस्य। साप्तानि। प्रीणाति। पूर्णया। जुहोति। पूर्णः। इव। हि। प्रजापतिरिति

प्रजा—पतिः । प्रजापतेरिति प्रजा—पतेः ( ५ ) । आप्त्यै । न्यूनयेति नि—ऊनया । जुहोति । न्यूनादिति नि—ऊनात् । हि । प्रजापतिरिति प्रजा—पतिः । प्रजा इति प्र—जाः । असृजत । प्रजानामिति प्र—जानाम् । सृष्ट्यै । अग्निः । देवेभ्यः । निलायत । सः । दिशः । अनु । प्रेति । अविशत् । जुह्वत् । मनसा । दिशः । ध्यायेत् । दिग्भ्य इति दिक्—भ्यः । एव । एनम् । अवेति । रुन्धे । दध्ना । पुरस्तात् । जुहोति । आज्येन । उपरिष्टात् । तेजः । च । एव । अस्मै । इन्द्रियम् । च । समीची इति । दधाति । द्वादशकपाल इति द्वादश—कपालः । वैश्वानरः । भवति । द्वादश । मासाः । संवत्सर इति सं—वत्सरः । संवत्सर इति सं—वत्सरः । अग्निः । वैश्वानरः । साक्षादिति स—अक्षात् ( ६ ) । एव । वैश्वानरम् । अवेति । रुन्धे । यत् । प्रयाजानूयाजानिति प्रयाज—अनूयाजान् । कुर्यात् । विकस्तिरिति वि—कस्तिः । सा । यज्ञस्य । दर्विहोममिति दर्वि—होमम् । करोति । यज्ञस्य । प्रतिष्ठित्या इति प्रति—स्थित्यै । राष्ट्रम् । वै । वैश्वानरः । विट् । मरुतः । वैश्वानरम् । हुत्वा । मारुतान् । जुहोति । राष्ट्रे । एव ।

विशम्। अन्वितिं। बध्नाति। उच्चैः। वैश्वानरस्य। एतिं। श्रावयति। उपांश्विर्त्युप—अंशु। मारुतान्। जुहोति। तस्मात्। राष्ट्रम्। विशम्। अतीतिं। वदति। मारुताः। भवन्ति। मरुतः। वै। देवानाम्। विशः। देवविशेनेतिं देव—विशेनं। एव। अस्मै। मनुष्यविशमितिं मनुष्य—विशम्। अवेतिं। रुन्धे। सप्त। भवन्ति। सप्तगणा इतिं सप्त—गणाः। वै। मरुतः। गणश इतिं गण—शः। एव। विशम्। अवेतिं। रुन्धे। गणेन। गणम्। अनुद्रुत्येत्यनु—द्रुत्य। जुहोति। विशम्। एव। अस्मै। अनुवर्त्मानमित्यनु—वर्त्मानम्। करोति (७)॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे पञ्चमाष्टके चतुर्थप्रपाठके सप्तमोऽनुवाकः॥ ७॥

---

(अथ पञ्चमाष्टके चतुर्थप्रपाठकेऽष्टमोऽनुवाकः।)

---

वसोर्धारां जुहोति वसोर्मे धाराऽसदिति वा एषा हूयते घृतस्य वा एनमेषा धाराऽमुष्मिँल्लोके पिन्वमानोपतिष्ठत आज्येन जुहोति तेजो वा आज्यं तेजो वसोर्धारा तेजसैवास्मै तेजोऽवं रुन्धेऽथो कामा वै वसोर्धारा कामानेवाव रुन्धे यं कामयेत प्राणानस्यान्नाद्यं वि

( १ ) छिन्द्यामिति विग्राहं तस्य जुहुयात्प्राणानेवास्यान्नाद्यं वि च्छिनत्ति यं कामयेत प्राणानस्यान्नाद्यꣳ सं तनुयामिति संततां तस्य जुहुयात्प्राणानेवास्यान्नाद्यꣳ सं तनोति द्वादश द्वादशानि जुहोति द्वादश मासाः संवत्सरः संवत्सरेणैवास्मा अन्नमव रुन्धेऽन्नं च मेऽक्षुच्च म इत्याहैतद्वै ( २ ) अन्नस्य रूपꣳ रूपेणैवान्नमव रुन्धेऽग्निश्च म आपश्च म इत्याहैषा वा अन्नस्य योनिः सयोन्येवान्नमव रुन्धेऽर्धेन्द्राणि जुहोति देवता एवाव रुन्धे यत्सर्वेषामर्धमिन्द्रः प्रति तस्मादिन्द्रो देवतानां भूयिष्ठभाक्तम इन्द्रमुत्तरमाहेन्द्रियमेवास्मिन्नुपरिष्टाद्दधाति यज्ञायुधानि जुहोति यज्ञः ( ३ ) वै यज्ञायुधानि यज्ञमेवाव रुन्धेऽथो एतद्वै यज्ञस्य रूपꣳ रूपेणैव यज्ञमव रुन्धेऽवभृथश्च मे स्वगाकारश्च म इत्याह स्वगाकृत्या अग्निश्च मे घर्मश्च म इत्याहैतद्वै ब्रह्मवर्चसस्य रूपꣳ रूपेणैव ब्रह्मवर्चसमव रुन्ध ऋक्च मे साम च म इत्याह ( ४ ) एतद्वै छन्दसाꣳ रूपꣳ रूपेणैव छन्दाꣳस्यव रुन्धे गर्भाश्च मे वत्साश्च म

इत्याहैतद्वै पशूनाꣳ रूपꣳ रूपेणैव पशूनवं रुन्धे कल्पाञ्जुहोत्यक्लृप्तस्य क्लृप्त्यै युग्मदयुजे जुहोति मिथुनत्वायोत्तरावती भवतोऽभिक्रान्त्या एका च मे तिस्रश्च म इत्याह देवछन्दसं वा एका च तिस्रश्च (५) मनुष्यछन्दसं चतस्रश्चाष्टौ च देवछन्दसं चैव मनुष्यछन्दसं चाव रुन्ध आ त्रयस्त्रिꣳशतो जुहोति त्रयस्त्रिꣳशद्वै देवता देवता एवाव रुन्ध आऽष्टाचत्वारिꣳशतो जुहोत्यष्टाचत्वारिꣳशदक्षरा जगती जागताः पशवो जगत्यैवास्मै पशूनव रुन्धे वाजश्च प्रसवश्चेति द्वादशं जुहोति द्वादश मासाः संवत्सरः संवत्सर एव प्रति तिष्ठति(६)॥

( वि वै यज्ञः साम च म इत्याह च तिस्रश्चैकान्नपञ्चाशच्च ।)

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां पञ्चमाष्टके चतुर्थप्रपाठकेऽष्टमोऽनुवाकः ॥ ८ ॥

---

( अथ पञ्चमाष्टके चतुर्थप्रपाठकेऽष्टमोऽनुवाकः ।)

---

वसोः । धाराम् । जुहोति । वसोः । मे । धारा । असत् । इति । वै । एषा । हूयते । घृतस्य । वै । एनम् । एषा । धारा । अमुष्मिन् । लोके । पिन्वमाना । उपेति । तिष्ठते । आज्येन । जुहोति । तेजः ।

वै । आज्यम् । तेजः । वसोः । धारा । तेजसा । एव । अस्मै । तेजः । अवेति । रुन्धे । अथो इति । कामाः । वै । वसोः । धारा । कामान् । एव । अवेति । रुन्धे । यम् । कामयेत । प्राणानिति प्र—अनान् । अस्य । अन्नाद्यमित्यन्न—अद्यम् । वीति ( १ ) । छिन्द्याम् । इति । विग्राहमिति वि—ग्राहम् । तस्य । जुहुयात् । प्राणानिति प्र—अनान् । एव । अस्य । अन्नाद्यमित्यन्न—अद्यम् । वीति । छिनत्ति । यम् । कामयेत । प्राणानिति प्र—अनान् । अस्य । अन्नाद्यमित्यन्न—अद्यम् । समिति । तनुयाम् । इति । संततामिति सं—तताम् । तस्य । जुहुयात् । प्राणानिति प्र—अनान् । एव । अस्य । अन्नाद्यमित्यन्न—अद्यम् । समिति । तनोति । द्वादश । द्वादशानि । जुहोति । द्वादश । मासाः । संवत्सर इति सं—वत्सरः । संवत्सरेणेति सं—वत्सरेण । एव । अस्मै । अन्नम् । अवेति । रुन्धे । अन्नम् । च । मे । अक्षुत् । च । मे । इति । आह । एतत् । वै ( २ ) । अन्नस्य । रूपम् । रूपेण । एव । अन्नम् । अवेति । रुन्धे । अग्निः । च । मे । आपः । च । मे । इति । आह । एषा । वै । अन्नस्य । योनिः । सयोनीति स—योनि ।

एव । अन्नम् । अवेति । रुन्धे । अर्धेन्द्राणीत्यर्ध—इन्द्राणि । जुहोति । देवताः । एव । अवेति । रुन्धे । यत् । सर्वेषाम् । अर्धम् । इन्द्रः । प्रतीति । तस्मात् । इन्द्रः । देवतानाम् । भूयिष्ठभाक्तम इति भूयिष्ठभाक्—तमः । इन्द्रम् । उत्तरमित्युत्—तरम् । आह । इन्द्रियम् । एव । अस्मिन् । उपरिष्टात् । दधाति । यज्ञायुधानीति यज्ञ—आयुधानि । जुहोति । यज्ञः (३) । वै । यज्ञायुधानीति यज्ञ—आयुधानि । यज्ञम् । एव । अवेति । रुन्धे । अथो इति । एतत् । वै । यज्ञस्य । रूपम् । रूपेण । एव । यज्ञम् । अवेति । रुन्धे । अवभृथ इत्यव—भृथः । च । मे । स्वगाकार इति स्वगा—कारः । च । मे । इति । आह । स्वगाकृत्या इति स्वगा—कृत्यै । अग्निः । च । मे । घर्मः । च । मे । इति । आह । एतत् । वै । ब्रह्मवर्चसस्येति ब्रह्म—वर्चसस्य । रूपम् । रूपेण । एव । ब्रह्मवर्चसमिति ब्रह्म—वर्चसम् । अवेति । रुन्धे । ऋक् । च । मे । साम । च । मे । इति । आह(४)। एतत् । वै । छन्दसाम् । रूपम् । रूपेण । एव । छन्दांसि । अवेति । रुन्धे । गर्भाः । च । मे । वत्साः । च । मे । इति । आह । एतत् । वै । पशूनाम् ।

रूपम् । रूपेणं । एव । पशून् । अवेतिं । रुन्धे । कल्पांन् । जुहोति । अक्लृंप्तस्य । क्लृप्त्यैं । युग्मदयुजे इतिं युग्मत्—अयुजे । जुहोति । मिथुनत्वायेतिं मिथुन—त्वायं । उत्तरावंती इत्युंत्तरा—वती । भवतः । अभिक्रांन्त्या इत्यभि—क्रान्त्यै । एकां । च । मे । तिस्रः । च । मे । इतिं । आह । देवछन्दसमितिं देव—छन्दसम् । वै । एकां । च । तिस्रः । च (५) । मनुष्यछन्दसमितिं मनुष्य—छन्दसम् । चतंस्रः । च । अष्टौ । च । देवछन्दसमितिं देव—छन्दसम् । च । एव । मनुष्यछन्दसमितिं मनुष्य—छन्दसम् । च । अवेतिं । रुन्धे । एतिं । त्रयंस्त्रिंशत इति त्रयंः—त्रिंशतः । जुहोति । त्रयंस्त्रिंशदिति त्रयंः—त्रिंशत् । वै । देवतांः । देवतांः । एव । अवेतिं । रुन्धे । एतिं । अष्टाचंत्वारिंशत इत्यष्टा—चत्वारिंशतः । जुहोति । अष्टाचंत्वारिंशदक्षरेत्यष्टाचंत्वारिंशत्—अक्षरा । जगंती । जागंताः । पशवंः । जगंत्या । एव । अस्मै । पशून् । अवेतिं । रुन्धे । वाजंः । च । प्रसव इतिं प्र—सवः । च । इतिं । द्वादशम् । जुहोति । द्वादंश । मासांः । संवत्सर इतिं सं—वत्सरः । संवत्सर

इतिं सं—वत्सरे। एव। प्रतीतिं। तिष्ठति (६)॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे पञ्चमाष्टके चतुर्थप्रपाठकेऽष्टमोऽनुवाकः॥ ८॥

---

(अथ पञ्चमाष्टके चतुर्थप्रपाठके नवमोऽनुवाकः।)

---

अग्निर्देवेभ्योऽपाक्रामद्भागधेयमिच्छमानस्तं देवा अब्रुवन्नुप न आ वर्तस्व हव्यं नो वहेति सोऽब्रवीद्वरं वृणै मह्यमेव वाजप्रसवीयं जुहवन्निति तस्मादग्नये वाजप्रसवीयं जुह्वति यद्वाजप्रसवीयं जुहोत्यग्निमेव तद्भागधेयेन समर्धयत्यथो अभिषेक एवास्य स चतुर्दशभिर्जुहोति सप्त ग्राम्या ओषधयः सप्त (१) आरण्या उभयीषामवरुद्ध्या अन्नस्यान्नस्य जुहोत्यन्नस्यान्नस्यावरुद्ध्या औदुम्बरेण स्रुवेण जुहोत्यूर्ग्वा उदुम्बर ऊर्गन्नमूर्जैवास्मा ऊर्जमन्नमव रुन्धेऽग्निर्वै देवानामभिषिक्तोऽग्निचिन्मनुष्याणां तस्मादग्निचिद्वर्षति न धावेदवरुद्धꣳ ह्यस्यान्नमन्नमिव खलु वै वर्षं यद्धावेदन्नाद्याद्धावेदुपावर्ततान्नाद्यमेवाभि (२) उपावर्तते नक्तोषासेति कृष्णायै श्वेतवत्सायै पयसा जुहोत्यह्नैवास्मै रात्रिं प्र दापयति रात्रियाऽहरहोरात्रे

एवास्मै प्रत्ते काममन्नाद्यं दुहाते राष्ट्रभृतो जुहोति राष्ट्रमेवाव रुन्धे षड्भिर्जुहोति षड्वा ऋतवं ऋतुष्वेव प्रति तिष्ठति भुवनस्य पत इति रथमुखे पञ्चाऽऽहुतीर्जुहोति वज्रो वै रथो वज्रेणैव दिशः ( ३ ) अभि जयत्यग्निचितꣳ ह वा अमुष्मिँल्लोके वातोऽभि पवते वातनामानि जुहोत्यभ्येवैनममुष्मिँल्लोके वातः पवते त्रीणि जुहोति त्रय इमे लोका एभ्य एव लोकेभ्यो वातमव रुन्धे समुद्रोऽसि नभस्वानित्याहैतद्वै वातस्य रूपꣳ रूपेणैव वातमव रुन्धेऽञ्जलिना जुहोति न ह्येतेषामन्यथाऽऽहुतिरवकल्पते ( ४ ) ॥

( ओषधयः सप्ताभि दिशोऽन्यथा द्वे च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां पञ्चमाष्टके चतुर्थप्रपाठके नवमोऽनुवाकः ॥ ९ ॥

---

( अथ पञ्चमाष्टके चतुर्थप्रपाठके नवमोऽनुवाकः । )

---

अग्निः । देवेभ्यः । अपेति । अक्रामत् । भागधेयमिति भाग—धेयम् । इच्छमानः । तम् । देवाः । अब्रुवन् । उपेति । नः । एति । वर्तस्व । हव्यम् । नः । वह । इति । सः । अब्रवीत् । वरम् । वृणे ।

मह्यम् । एव । वाजप्रसवीयमिति वाज—प्रसवीयम् । जुहवन् । इति । तस्मात् । अग्नये । वाजप्रसवीयमिति वाज—प्रसवीयम् । जुह्वति । यत् । वाजप्रसवीयमिति वाज—प्रसवीयम् । जुहोति । अग्निम् । एव । तत् । भागधेयेनेति भाग—धेयेन । समिति । अर्धयति । अथो इति । अभिषेक इत्यभि—सेकः । एव । अस्य । सः । चतुर्दशभिरिति चतुर्दश—भिः । जुहोति । सप्त । ग्राम्याः । ओषधयः । सप्त ( १ ) । आरण्याः । उभयीषाम् । अवरुद्ध्या इत्यव—रुद्ध्यै । अन्नस्यान्नस्येत्यन्नस्य—अन्नस्य । जुहोति । अन्नस्यान्नस्येत्यन्नस्य—अन्नस्य । अवरुद्ध्या इत्यव—रुद्ध्यै । औदुम्बरेण । स्रुवेण । जुहोति । ऊर्क् । वै । उदुम्बरः । ऊर्क् । अन्नम् । ऊर्जा । एव । अस्मै । ऊर्जम् । अन्नम् । अवेति । रुन्धे । अग्निः । वै । देवानाम् । अभिषिक्त इत्यभि—सिक्तः । अग्निचिदित्यग्नि—चित् । मनुष्याणाम् । तस्मात् । अग्निचिदित्यग्नि—चित् । वर्षति । न । धावेत् । अवरुद्धमित्यव—रुद्धम् । हि । अस्य । अन्नम् । अन्नम् । इव । खलु । वै । वर्षम् । यत् । धावेत् । अन्नाद्यादित्यन्न—अद्यात् । धावेत् । उपावर्ततेत्युप—आवर्तेत ।

अन्नाद्यमित्यन्न—अद्यम् । एव । अभीति ( २ )। उपावर्तत इत्युप—आवर्तते । नक्तोषासा । इति । कृष्णायै । श्वेतवत्साया इति श्वेत—वत्सायै । पयसा । जुहोति । अह्ना । एव । अस्मै । रात्रिम् । प्रेति । दापयति । रात्रिया । अहः । अहोरात्रे इत्यहः—रात्रे । एव । अस्मै । प्रत्ते इति । कामम् । अन्नाद्यमित्यन्न—अद्यम् । दुहाते इति । राष्ट्रभृत इति राष्ट्र—भृतः । जुहोति । राष्ट्रम् । एव । अवेति । रुन्धे । षड्भिरिति षट्—भिः । जुहोति । षट् । वै । ऋतवः । ऋतुषु । एव । प्रतीति । तिष्ठति । भुवनस्य । पते । इति । रथमुख इति रथ—मुखे । पञ्च । आहुतीरित्या—हुतीः । जुहोति । वज्रः । वै । रथः । वज्रेण । एव । दिशः ( ३ )। अभीति । जयति । अग्निचितमित्यग्नि—चितम् । ह । वै । अमुष्मिन् । लोके । वातः । अभीति । पवते । वातनामानीति वात—नामानि । जुहोति । अभीति । एव । एनम् । अमुष्मिन् । लोके । वातः । पवते । त्रीणि । जुहोति । त्रयः । इमे । लोकाः । एभ्यः । एव । लोकेभ्यः । वातम् । अवेति । रुन्धे । समुद्रः । असि । नभस्वान् । इति । आह । एतत् । वै । वातस्य ।

रूपम् । रूपेणं । एव । वातम् । अवेतिं । रुन्धे । अञ्जलिनां । जुहोति । न । हि । एतेषाम् । अन्यथां । आहुतिरित्या—हुतिः । अवकल्पंत इत्यंव—कल्पंते ( ४ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे पञ्चमाष्टके चतुर्थप्रपाठके नवमोऽनुवाकः ॥ ९ ॥

---

( अथ पञ्चमाष्टके चतुर्थप्रपाठके दशमोऽनुवाकः । )

---

सुवर्गाय वै लोकायं देवरथो युंज्यते यत्राकूतायं मनुष्यरथ एष खलु वै देवरथो यदग्निरग्निं युंनज्मि शवंसा घृतेनेत्यांह युनक्त्येवैनः स एंनं युक्तः सुंवर्गं लोकमभि वंहति यत्सर्वांभिः पञ्चभिर्युञ्ज्याद्युक्तोंऽस्याग्निः प्रच्युंतः स्यादप्रंतिष्ठिता आहुंतयः स्युरप्रंतिष्ठिताः स्तोमा अप्रंतिष्ठितान्युक्थानिं तिसृभिः प्रातःसवनेऽभि मृंशति त्रिवृत् ( १ ) वा अग्निर्यावांनेवाग्निस्तं युंनक्ति यथाऽनंसि युक्त आंधीयतं एवमेव तत्प्रत्याहुंतयस्तिष्ठंन्ति प्रति स्तोमाः प्रत्युक्थानिं यज्ञायज्ञियंस्य स्तोत्रे द्वाभ्यांमभि मृंशत्येतावान्वै यज्ञो यावांनग्निष्टोमो भूमा त्वा अस्यातं ऊर्ध्वः क्रियते यावांनेव यज्ञस्तमंन्त-

तेऽन्वारोहति द्वाभ्यां प्रतिष्ठित्या एकयाऽप्र-
स्तुतं भवत्यर्थ (२) अभि मृशत्युपैनमुत्तरो
यज्ञो नमत्यथो संतत्यै प्र वा एषोऽस्माल्लोका-
च्च्यवते योऽग्निं चिनुते न वा एतस्यानिष्टक
आहुतिरवं कल्पते यां वा एषोऽनिष्टक आहु-
तिं जुहोति स्रवति वै सा तां स्रवन्तीं यज्ञोऽ-
नु परा भवति यज्ञं यजमानो यत्पुनश्चितिं
चिनुत आहुतीनां प्रतिष्ठित्यै प्रत्याहुतयस्तिष्ठ-
न्ति (३) न यज्ञः पराभवति न यजमानोऽ-
ष्टावुप दधात्यष्टाक्षरा गायत्री गायत्रेणैवेनं
छन्दसा चिनुते यदेकादश त्रैष्टुभेन यद्द्वादश
जागतेन छन्दोभिरेवैनं चिनुते नपात्को वै
नामैषोऽग्निर्यत्पुनश्चितिर्य एवं विद्वान्पुनश्चितिं
चिनुत आ तृतीयात्पुरुषादन्नमत्ति यथा वै
पुनराधेयं एवं पुनश्चितिर्योऽग्न्याधेयेन न (४)
ऋध्नोति स पुनराधेयमा धत्ते योऽग्निं चित्वा
नर्ध्नोति स पुनश्चितिं चिनुते यत्पुनश्चितिं चि-
नुत ऋद्ध्या अथो खल्वाहुर्न चेतव्येति रुद्रो
वा एष यदग्निर्यथा व्याघ्रः सुप्तं बोधयति
तादृगेव तदथो खल्वाहुश्चेतव्येति यथा वसी-

या॑ऽसं भा॒ग॒धेये॑न बो॒धय॑ति ता॒दृगे॒व तन्मनु॑-
र॒ग्निम॑चिनु॒त तेन॒ नाऽऽर्ध्नो॒त्स ए॒तां पुन॑श्चि॒ति-
म॑पश्य॒त्ताम॑चिनु॒त तया॒ वै स आ॑र्ध्नो॒द्यत्पुन॑-
श्चि॒तिं चि॑नु॒त ऋद्ध्यै॑ ( ५ ) ॥

( त्रि॒वृद॒थ॒ तिष्ठ॑न्त्यग्न्याधेये॑न॒ नाचि॑नुत स॒प्तद॑श च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां पञ्चमाष्टके
चतुर्थप्रपाठके दशमोऽनुवाकः ॥ १० ॥

---

( अथ पञ्चमाष्टके चतुर्थप्रपाठके दशमोऽनुवाकः । )

---

सु॒व॒र्गा॑येति॑ सुवः—गाय॑ । वै । लो॒काय॑ । दे॒व॒र॒थ
इति॑ देव—र॒थः । यु॒ज्य॒ते । य॒त्रा॒कू॒ता॒येति॑ यत्र—
आ॒कू॒ताय॑ । म॒नु॒ष्य॒रथ इति॑ मनुष्य—र॒थः । ए॒षः ।
खलु॑ । वै । दे॒व॒र॒थ इति॑ देव—र॒थः । यत् । अ॒ग्निः ।
अ॒ग्निम् । यु॒न॒ज्मि । शव॑सा । घृ॒तेन॑ । इति॑ । आ॒ह॒ ।
यु॒नक्ति॑ । ए॒व । ए॒न॒म् । सः । ए॒न॒म् । यु॒क्तः । सु॒व॒-
र्गमिति॑ सुवः—गम् । लो॒कम् । अ॒भीति॑ । व॒ह॒ति॒ ।
यत् । सर्वा॑भिः । प॒ञ्च॒भि॒रिति॑ प॒ञ्च—भि॒ः । यु॒ञ्ज्यात् ।
यु॒क्तः । अ॒स्य॒ । अ॒ग्निः । प्रच्यु॑त॒ इति॒ प्र—च्यु॒तः ।
स्या॒त् । अप्र॑तिष्ठि॒ता इत्यप्र॑ति—स्थि॒ता॒ः । आहु॑तय॒
इत्या—हु॒त॒यः । स्युः । अप्र॑तिष्ठि॒ता इत्यप्र॑ति—स्थि॒ता॒ः ।
स्तोमा॑ः । अप्र॑तिष्ठि॒ता॒नीत्यप्र॑ति—स्थि॒ता॒नि॒ ।

उक्थानि । तिसृभिरिति तिसृ—भिः । प्रातःसवन इति प्रातः—सवने । अभीति । मृशति । त्रिवृदिति त्रि—वृत् ( १ ) । वै । अग्निः । यावान् । एव । अग्निः । तम् । युनक्ति । यथा । अनांसि । युक्ते । आधीयत इत्या—धीयते । एवम् । एव । तत् । प्रतीति । आहुतय इत्या—हुतयः । तिष्ठन्ति । प्रतीति । स्तोमाः । प्रतीति । उक्थानि । यज्ञायज्ञियस्य । स्तोत्रे । द्वाभ्याम् । अभीति । मृशति । एतावान् । वै । यज्ञः । यावान् । अग्निष्टोम इत्यग्नि—स्तोमः । भूमा । तु । वै । अस्य । अतः । ऊर्ध्वः । क्रियते । यावान् । एव । यज्ञः । तम् । अन्ततः । अन्वारोहतीत्यनु—आरोहति । द्वाभ्याम् । प्रतिष्ठित्या इति प्रति—स्थित्यै । एकया । अप्रस्तुतमित्यप्र—स्तुतम् । भवति । अथ ( २ ) । अभीति । मृशति । उपेति । एनम् । उत्तर इत्युत्—तरः । यज्ञः । नमति । अथो इति । संतत्या इति सं—तत्यै । प्रेति । वै । एषः । अस्मात् । लोकात् । च्यवते । यः । अग्निम् । चिनुते । न । वै । एतस्य । अनिष्टके । आहुतिरित्या—हुतिः । अवेति । कल्पते । याम् । वै । एषः । अनिष्टके । आहुतिमित्या—हुतिम् । जुहोति । स्रवति ।

वै । सा । ताम् । स्रवन्तीम् । यज्ञः । अनु । परेति । भवति । यज्ञम् । यजमानः । यत् । पुनश्चितिमिति पुनः—चितिम् । चिनुते । आहुतीनामित्या—हुतीनाम् । प्रतिष्ठित्या इति प्रति—स्थित्यै । प्रतीति । आहुतय इत्या—हुतयः । तिष्ठन्ति ( ३ ) । न । यज्ञः । पराभवतीति परा—भवति । न । यजमानः । अष्टौ । उपेति । दधाति । अष्टाक्षरेत्यष्टा—अक्षरा । गायत्री । गायत्रेण । एव । एनम् । छन्दसा । चिनुते । यत् । एकादश । त्रैष्टुभेन । यत् । द्वादश । जागतेन । छन्दोभिरिति छन्दः—भिः । एव । एनम् । चिनुते । नपात्कः । वै । नाम । एषः । अग्निः । यत् । पुनश्चितिरिति पुनः—चितिः । यः । एवम् । विद्वान् । पुनश्चितिमिति पुनः—चितिम् । चिनुते । एति । तृतीयात् । पुरुषात् । अन्नम् । अत्ति । यथा । वै । पुनराधेय इति पुनः—आधेयः । एवम् । पुनश्चितिरिति पुनः—चितिः । यः । अग्न्याधेयेनेत्यग्नि—आधेयेन । न ( ४ ) । ऋध्नोति । सः । पुनराधेयमिति पुनः—आधेयम् । एति । धत्ते । यः । अग्निम् । चित्वा । न । ऋध्नोति । सः । पुनश्चितिमिति पुनः—चितिम् । चिनुते । यत् । पुनश्चितिमिति पुनः—चितिम् ।

चिनुते । ऋद्ध्यै । अथो इति । खलु । आहुः । न । चेतव्यां । इति । रुद्रः । वै । एषः । यत् । अग्निः । यथा । व्याघ्रम् । सुप्तम् । बोधयति । तादृक् । एव । तत् । अथो इति । खलु । आहुः । चेतव्यां । इति । यथा । वसीयाꣳसम् । भागधेयेनेति भाग—धेयेन । बोधयति । तादृक् । एव । तत् । मनुः । अग्निम् । अचिनुत । तेन । न । आर्ध्नोत् । सः । एताम् । पुनश्चितिमिति पुनः—चितिम् । अपश्यत् । ताम् । अचिनुत । तया । वै । सः । आर्ध्नोत् । यत् । पुनश्चितिमिति पुनः—चितिम् । चिनुते । ऋद्ध्यै (५)॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे पञ्चमाष्टके चतुर्थप्रपाठके दशमोऽनुवाकः ॥ १० ॥

( अथ पञ्चमाष्टके चतुर्थप्रपाठक एकादशोऽनुवाकः । )

छन्दश्चितं चिन्वीत पशुकामः पशवो वै छन्दाꣳसि पशुमानेव भवति श्येनचितं चिन्वीत सुवर्गकामः श्येनो वै वयसां पतिष्ठः श्येन एव भूत्वा सुवर्गं लोकं पतति कङ्कचितं चिन्वीत यः कामयेत शीर्षण्वानमुष्मिंल्लोके स्यामिति शीर्षण्वानेवामुष्मिंल्लोके भवत्यलजचितं चिन्वीत चतुःसीतं प्रतिष्ठाकामश्चतस्रो दिशो दि-

क्ष्वेव प्रति तिष्ठति प्रउगचितं चिन्वीत भ्रातृ-
व्यवान्प्र ( १ ) एव भ्रातृव्यान्नुदत उभयतः-
प्रउगं चिन्वीत यः कामयेत प्रजातान्भ्रातृव्यान्नु-
देय प्रति जनिष्यमाणानिति प्रैव जातान्भ्रा-
तृव्यान्नुदते प्रति जनिष्यमाणान्रथचक्रचितं
चिन्वीत भ्रातृव्यवान्वज्रो वै रथो वज्रमेव
भ्रातृव्येभ्यः प्र हरति द्रोणचितं चिन्वीतान्न-
कामो द्रोणे वा अन्नं भ्रियते सयोन्येवान्नमव
रुन्धे समूह्यं चिन्वीत पशुकामः पशुमानेव
भवति ( २ ) परिचाय्यं चिन्वीत ग्रामकामो
ग्राम्येव भवति श्मशानचितं चिन्वीत यः
कामयेत पितृलोक ऋध्नुयामिति पितृलोक
एवर्ध्नोति विश्वामित्रजमदग्नी वसिष्ठेनास्पर्धे-
तां स एता जमदग्निर्विहव्या अपश्यत्ता उपा-
धत्त ताभिर्वै स वसिष्ठस्येन्द्रियं वीर्यमवृङ्क्त
यद्विहव्या उपदधातीन्द्रियमेव ताभिर्वीर्यं य-
जमानो भ्रातृव्यस्य वृङ्क्ते होतुर्धिष्णिय उप
दधाति यजमानायतनं वै ( ३ ) होता स्व
एवास्मा आयतन इन्द्रियं वीर्यमव रुन्धे द्वाद-
शोप दधाति द्वादशाक्षरा जगती जागताः

पशवो जगत्यैवास्मै पशूनव रुन्धेऽष्टावष्टावन्ये-षु धिष्णियेषूप दधात्यष्टाशफाः पशवः पशू-नेवाव रुन्धे षण्मार्जालीये षड्वा ऋतव ऋत-वः खलु वै देवाः पितर ऋतूनेव देवान्पितॄन्प्री-णाति ( ४ )।

( प्र भवति यजमानायतनं वा अष्टाचत्वारिंशच्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां पञ्चमाष्टके चतुर्थप्रपाठक एकादशोऽनुवाकः ॥ ११ ॥

---

( अथ पञ्चमाष्टके चतुर्थप्रपाठक एकादशोऽनुवाकः । )

---

छन्दश्चितमिति छन्दः—चितम् । चिन्वीत । पशु-काम इति पशु—कामः । पशवः । वै । छन्दांसि । पशुमानिति पशु—मान् । एव । भवति । श्येनचि-तमिति श्येन—चितम् । चिन्वीत । सुवर्गकाम इति सुवर्ग—कामः । श्येनः । वै । वयसाम् । पतिष्ठः । श्येनः । एव । भूत्वा । सुवर्गमिति सुवः—गम् । लोकम् । पतति । कङ्कचितमिति कङ्क—चितम् । चिन्वीत । यः । कामयेत । शीर्षण्वानिति शीर्षण्—वान् । अमुष्मिन् । लोके । स्याम् । इति । शीर्ष-ण्वानिति शीर्षण्—वान् । एव । अमुष्मिन् । लोके । भवति । अलजचितमित्यलज—चितम् । चिन्वीत ।

चतुःसीतमिति चतुः—सीतम् । प्रतिष्ठाकाम इति प्रतिष्ठा—कामः । चतस्रः । दिशः । दिक्षु । एव । प्रतीति । तिष्ठति । प्रउगचितमिति प्रउग—चितम् । चिन्वीत । भ्रातृव्यवानिति भ्रातृव्य—वान् । प्रेति । ( १ ) । एव । भ्रातृव्यान् । नुदते । उभयतःप्रउगमित्युभयतः—प्रउगम् । चिन्वीत । यः । कामयेत । प्रेति । जातान् । भ्रातृव्यान् । नुदेय । प्रतीति । जनिष्यमाणान् । इति । प्रेति । एव । जातान् । भ्रातृव्यान् । नुदते । प्रतीति । जनिष्यमाणान् । रथचक्रचितमिति रथचक्र—चितम् । चिन्वीत । भ्रातृव्यवानिति भ्रातृव्य—वान् । वज्रः । वै । रथः । वज्रम् । एव । भ्रातृव्येभ्यः । प्रेति । हरति । द्रोणचितमिति द्रोण—चितम् । चिन्वीत । अन्नकाम इत्यन्न—कामः । द्रोणे । वै । अन्नम् । भ्रियते । सयोनीति स—योनि । एव । अन्नम् । अवेति । रुन्धे । समूह्यमिति सम्—ऊह्यम् । चिन्वीत । पशुकाम इति पशु—कामः । पशुमानिति पशु—मान् । एव । भवति ( २ ) । परिचाय्यमिति परि—चाय्यम् । चिन्वीत । ग्रामकाम इति ग्राम—कामः । ग्रामी । एव । भवति । श्मशानचितमिति श्मशान—चितम् ।

चिन्वीत । यः । कामयेत । पितृलोक इति पितृ—लोके । ऋध्नुयाम् । इति । पितृलोक इति पितृ—लोके । एव । ऋध्नोति । विश्वामित्रजमदग्नी इति विश्वामित्र—जमदग्नी । वसिष्ठेन । अस्पर्धेताम् । सः । एताः । जमदग्निः । विहव्या इति वि—हव्याः । अपश्यत् । ताः । उपेति । अधत्त । ताभिः । वै । सः । वसिष्ठस्य । इन्द्रियम् । वीर्यम् । अवृङ्क्त । यत् । विहव्या इति वि—हव्याः । उपदधातीत्युप—दधाति । इन्द्रियम् । एव । ताभिः । वीर्यम् । यजमानः । भ्रातृव्यस्य । वृङ्क्ते । होतुः । धिष्णिये । उपेति । दधाति । यजमानायतनमिति यजमान—आयतनम् । वै ( ३ ) । होता । स्वे । एव । अस्मै । आयतन इत्या—यतने । इन्द्रियम् । वीर्यम् । अवेति । रुन्धे । द्वादश । उपेति । दधाति । द्वादशाक्षरेति द्वादश—अक्षरा । जगती । जागताः । पशवः । जगत्या । एव । अस्मै । पशून् । अवेति । रुन्धे । अष्टावष्टावित्यष्टौ—अष्टौ । अन्येषु । धिष्णियेषु । उपेति । दधाति । अष्टाशफा इत्यष्टा—शफाः । पशवः । पशून् । एव । अवेति । रुन्धे । षट् । मार्जालीये । षट् । वै । ऋतवः । ऋतवः । खलु । वै । देवाः ।

पितरः । ऋतून् । एव । देवान् । पितॄन् । प्रीणाति ( ४ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे पञ्चमाष्टके चतुर्थप्रपाठक एकादशोऽनुवाकः ॥ ११ ॥

---

( अथ पञ्चमाष्टके चतुर्थप्रपाठके द्वादशोऽनुवाकः । )

---

पवस्व वाजसातय इत्यनुष्टुक्प्रतिपद्भवति तिस्रोऽनुष्टुभश्चतस्रो गायत्रियो यत्तिस्रोऽनुष्टुभस्तस्मादश्वस्त्रिभिस्तिष्ठꣳस्तिष्ठति यच्चतस्रो गायत्रियस्तस्मात्सर्वाꣳश्चतुरः पदः प्रतिदधत्पलायते परमा वा एषा छन्दसां यदनुष्टुक्परमश्चतुष्टोमः स्तोमानां परमस्त्रिरात्रो यज्ञानां परमोऽश्वः पशूनां परमेणैवैनं परमतां गमयत्येकविꣳशमहर्भवति ( १ ) यस्मिन्नश्व आलभ्यते द्वादश मासाः पञ्चर्तवस्त्रय इमे लोका असावादित्य एकविꣳश एष प्रजापतिः प्राजापत्योऽश्वस्तमेव साक्षादृध्नोति शक्वरयः पृष्ठं भवन्त्यन्यदन्यच्छन्दोऽन्येऽन्ये वा एते पशव आ लभ्यन्त उतेव ग्राम्या उतेवाऽऽरण्या यच्छक्वरयः पृष्ठं भवन्त्यश्वस्य सर्वत्वाय पार्थुरश्मं

ब्रह्मसामं भवति रश्मिना वा अश्वः ( २ ) यत ईश्वरो वा अश्वोऽयतोऽप्रतिष्ठितः परां परावतं गन्तोर्यत्पार्थुरश्मं ब्रह्मसामं भवत्यश्वस्य यत्यै धृत्यै संकृत्यच्छावाकसामं भवत्युत्सन्नयज्ञो वा एष यदश्वमेधः कस्तद्वेदेत्याहुर्यदि सर्वो वा क्रियते न वा सर्व इति यत्संकृत्यच्छावाकसामं भवत्यश्वस्य सर्वत्वाय पर्याप्त्या अनन्तरायाय सर्वस्तोमोऽतिरात्र उत्तममहर्भवति सर्वस्याऽऽप्त्यै सर्वस्य जित्यै सर्वमेव तेनाऽऽप्नोति सर्वं जयति ( ३ ) ॥

( अहर्भवति वा अश्वोऽहर्भवति दश च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां पञ्चमाष्टके चतुर्थप्रपाठके द्वादशोऽनुवाकः ॥ १२ ॥

---

देवासुरास्तेनर्त्व्यां रुद्रोऽश्मन्नृषदे वडुदेनं प्राचीमिति वसोर्धारामग्निर्देवेभ्यः सुवर्गाय यत्राकूताय छन्दश्चितं पवस्व द्वादश ॥ १२ ॥

देवासुरा अजायां वै प्रमुष्टिः प्रथमो देवयतामेतद्वै छन्दसा२ रूपमृध्नोत्यष्टौ पञ्चाशत् ॥ ५८ ॥

हरिः ॐ ।

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां पञ्चमाष्टके चतुर्थः प्रपाठकः ॥ ४ ॥

---

( अथ पञ्चमाष्टके चतुर्थप्रपाठके द्वादशोऽनुवाकः। )

---

पर्वस्व। वाजसातय इति वाज—सातये। इति। अनुष्टुगित्यनु—स्तुक्। प्रतिपदिति प्रति—पत्। भवति। तिस्रः। अनुष्टुभ इत्यनु—स्तुभः। चतस्रः। गायत्रियः। यत्। तिस्रः। अनुष्टुभ इत्यनु—स्तुभः। तस्मात्। अश्वः। त्रिभिरिति त्रि—भिः। तिष्ठन्। तिष्ठति। यत्। चतस्रः। गायत्रियः। तस्मात्। सर्वान्। चतुरः। पदः। प्रतिदधदिति प्रति—दधत्। पलायते। परमा। वै। एषा। छन्दसाम्। यत्। अनुष्टुगित्यनु—स्तुक्। परमः। चतुष्टोम इति चतुः—स्तोमः। स्तोमानाम्। परमः। त्रिरात्र इति त्रि—रात्रः। यज्ञानाम्। परमः। अश्वः। पशूनाम्। परमेण। एव। एनम्। परमताम्। गमयति। एकविंशमित्येक—विंशम्। अहः। भवति (१)। यस्मिन्। अश्वः। आलभ्यत इत्या—लभ्यते। द्वादश। मासाः। पञ्च। ऋतवः। त्रयः। इमे। लोकाः। असौ। आदित्यः। एकविंश इत्येक—विंशः। एषः। प्रजापतिरिति प्रजा—पतिः। प्राजापत्य इति प्राजा—पत्यः। अश्वः। तम्। एव। साक्षादिति स—अक्षात्। ऋध्नोति। शक्वरयः। पृ-

ष्ठम् ॑। भवन्ति । अन्यदंन्यदित्यन्यत्—अन्यत् । छन्दः । अन्येंन्य इत्यन्ये—अन्ये । वै । एते । पशवः । एतिं । लभ्यन्ते । उत । इव । ग्राम्याः । उत । इव । आरण्याः । यत् । शक्वंरयः । पृष्ठम् । भवंन्ति । अश्वंस्य । सर्वत्वायेतिं सर्व—त्वायं । पार्थुरश्ममितिं पार्थु—रश्मम् । ब्रह्मसाममितिं ब्रह्म—सामम् । भवति । रश्मिना । वै । अश्वंः ( २ )। यतः । ईश्वरः । वै । अश्वंः । अयंतः । अप्रंतिष्ठित इत्यप्रंति—स्थितः । परांम् । परावतमितिं परा—वतम् । गन्तोः । यत् । पार्थुरश्ममितिं पार्थु—रश्मम् । ब्रह्मसाममितिं ब्रह्म—सामम् । भवंति । अश्वंस्य । यत्यै । धृत्यै । संकृतीति सं—कृति । अच्छावाकसाममित्यंच्छावाक—सामम् । भवति । उत्सन्नयज्ञ इत्युंत्सन्न—यज्ञः । वै । एषः । यत् । अश्वमेध इत्यंश्व—मेधः । कः । तत् । वेद । इतिं । आहुः । यदिं । सर्वः । वा । क्रियतें । न । वा । सर्वः । इतिं । यत् । संकृतीति सं—कृति । अच्छावाकसाममित्यंच्छावाक—सामम् । भवांति । अश्वंस्य । सर्वत्वायेतिं सर्व—त्वायं । पर्याप्त्या इति परिं—आप्त्यै । अनंन्तरायायेत्यनंन्तः—आयाय । सर्वस्तोम इति सर्वं—स्तोमः । अतिरात्र

इत्यति—रात्रः। उत्तममित्युत्—तमम्। अहः। भवति। सर्वस्य। आप्त्यै। सर्वस्य। जित्यै। सर्वम्। एव। तेन। आप्नोति। सर्वम्। जयति (३)॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे पञ्चमाष्टके चतुर्थप्रपाठके द्वादशोऽनुवाकः ॥ १२ ॥

---

हरिः ॐ।

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे पञ्चमाष्टके चतुर्थः प्रपाठकः ॥ ४ ॥

---

( अथ पञ्चमकाण्डे चतुर्थः प्रपाठकः। )

---

( तत्र प्रथमादिद्वादशान्ता अनुवाकाः। )

---

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत्।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥
प्रपाठके तु तार्तीये वर्णिताश्चितयोऽखिलाः।
चतुर्थे चितिसंस्कारो द्वादशात्रानुवाककाः ॥ २ ॥
इष्टका इन्द्रतन्वाख्या यज्ञतन्वभिधास्तथा।
नक्षत्राख्याश्च विहिताः प्रथमेऽप्यनुवाकके ॥ ३ ॥
ऋतव्या वैश्वदेव्यश्च द्वितीये प्रोक्षणं तथा।
शतरुद्रीयहोमस्तु तृतीये समुदीरितः ॥ ४ ॥
परिषेचनमप्युक्तं तुर्ये तद्वद्विकर्षणम्।
व्याघारणं वैश्वकर्मणाऽऽहुतिश्चात्र पञ्चमे ॥ ५ ॥
षष्ठे तु समिदाधानमग्निप्रणयनं तथा।
होताऽन्वाहाप्रतिरथं दशर्चं सविकल्पकम् ॥ ६ ॥
सप्तमे चितिमारुह्य वह्निं तत्र विनिक्षिपेत्।
वसोर्धाराऽष्टमे वाजप्रसवीयोऽप्यनन्तरे ॥ ७ ॥
दशमे वह्नियोगश्च पुनश्चितिरितीरितः।
एकादशे तु काम्यानि विहव्याश्च समीरिताः ॥ ८ ॥

द्वादशे त्वश्वमेधीयस्तोत्रे त्रयमुदीरितम् ।
ऋक्स्तोमः साम चेत्येवं प्रपाठक उदीरितः ॥ ९ ॥

तत्राऽऽदौ बहिष्पवमानस्तोत्रे चोदकप्राप्तां गायत्रीमपवदितुमन्यामृचं विधत्ते—

पवस्व वाजसातय इत्यनुष्टुक्प्रतिपद्भवति तिस्रोऽनुष्टुभश्चतस्रो गायत्रियो यत्तिस्रोऽनुष्टुभस्तस्मादश्वस्त्रिभिस्तिष्ठꣳस्तिष्ठति यच्चतस्रो गायत्रियस्तस्मात्सर्वाꣳश्चतुरः पदः प्रति दधत्पलायते, इति ।

बहिष्पवमानस्तोत्रे प्राकृते त्रयस्तृचा गायत्राः । तेऽत्र चोदकेन प्राप्ताः । तत्परित्यागेन पवस्वेत्यादिका येयमृगनुष्टुक्सा प्रतिपत्प्रथमा कार्या । प्रतिपद्यते प्रारभ्यतेऽनयेति प्रतिपत् । अस्मिंस्तृचे चतुष्पादो यास्तिस्रोऽनुष्टुभस्तास्त्रिपात्त्वेन विभज्यमानाश्चतस्रो गायत्रियो भवन्ति । तत्र यस्मात्स्वरूपेण तिस्रोऽनुष्टुभस्तस्मादश्वो गमनं परित्यज्यैकत्र यदा तिष्ठति तदानीमेकस्मिन्पादे भारमुपेक्ष्य त्रिष्वेव पादेषु भारमवलम्ब्य तिष्ठति । यस्मादेता विभज्यमानाश्चतस्रो गायत्रियस्तस्मात्पलायमानोऽश्वश्चतुरः पादान्सर्वानपि भूमौ प्रक्षिपन्नेव पलायते ॥

प्रकारान्तरेणानुष्टुभं प्रशंसति—

परमा वा एषा छन्दसां यदनुष्टुक्परमश्चतुष्टोमः स्तोमानां परमस्त्रिरात्रो यज्ञानां परमोऽश्वः पशूनां परमेणैवैनं परमतां गमयति, इति ।

सर्ववागात्मकत्वाच्छन्दसां मध्येऽनुष्टुभः परमत्वं वाग्वा अनुष्टुबिति बहुशः श्रुतम् । स्तोमानां त्रिवृदग्निष्टोमादीनां मध्ये प्रकृतत्वाच्चतुष्टोमस्य परमत्वम् । त्रिरात्रस्याश्वमेधस्य महापातकप्रायश्चित्तरूपत्वाद्यज्ञानां मध्ये परमत्वम् । तादृशयज्ञसाधनत्वात्सङ्ग्रामजयहेतुत्वाच्च पशूनां मध्येऽश्वस्य परमत्वम् । एवं सति परमस्य त्रिरात्रस्य परमे चतुष्टोमे परमस्याश्वस्य संबन्धित्वेनानुष्टुभि परमायां प्रयुज्यमानायां परमेणैवैनं साधनसमूहेन परमतां श्रेष्ठतां प्राप्नोति ॥

प्रकृतिप्राप्तांस्त्रिवृदादिस्तोमान्बाधितुं स्तोमान्तरं विधत्ते—

एकविꣳशमहर्भवति यस्मिन्नश्व आलभ्यते द्वादश मासाः पञ्चर्तवस्त्रय इमे लोका असावादित्य एकविꣳश एष प्रजापतिः प्राजापत्योऽश्वस्तमेव साक्षादृध्नोति, इति।

एकविंशावृत्त्यात्मकेन स्तोमेन सर्वत्र युक्तं न तु स्तोमान्तरेण तादृशमेकविंशमहः कर्तव्यम्। प्रथमतृतीययोरह्नोर्व्यावृत्तये विशेष्यते—यस्मिन्मध्यमेऽहन्ययमश्व आलभ्यते तदहरेकविंशम्। अश्वो ह्युक्थ्यसंज्ञके द्वितीयेऽहन्यालभ्यते। मासर्तुलोकादित्यानामेकविंशतिसंख्योपेतत्वाज्जगद्रूपेण प्रजापतिशरीरत्वादश्वस्य प्रजापतिजन्यत्वाच्च तस्याश्वस्य समृध्द्यर्थमयमेकविंशतिस्तोमो युक्तः॥

अथ पृष्ठस्तोत्रगतानामृचां छन्दोन्तरं वारयितुं शक्वर्याख्यं छन्दो विधत्ते—

शक्वरयः पृष्ठं भवन्त्यन्यदन्यच्छन्दोऽन्येन्ये वा एते पशव आ लभ्यन्त उतेव ग्राम्या उतेवाऽऽरण्या यच्छक्वरयः पृष्ठं भवन्त्यश्वस्य सर्वत्वाय, इति।

शक्वरीछन्दोपेता ऋचः शक्वरयस्ताभिर्युक्तं पृष्ठस्तोत्रं कुर्यात्। सप्तपादात्मके शक्वर्यात्मके( ख्ये ) छन्दसि पादत्रयात्मकं गायत्र्याख्यं छन्दः, पादचतुष्टयात्मकं त्रिष्टुबाख्यं छन्दः, पादपञ्चकात्मकं पङ्क्त्यात्मकं( ख्यं ) छन्द इत्येवमन्यदन्यन्नानाविधं छन्दोऽन्तर्भवति। अश्वमेधेऽप्यश्वप्रधानकेऽन्येऽन्ये नानाजातीया एव पशव आलभ्यन्ते। तत्र केचन ग्राम्या एव केचनाऽऽरण्या एव। तत्राप्यवान्तरभेदा बहुधा द्रष्टव्याः। एवं सर्वपृष्ठस्तोत्रेऽश्वमेधसंबन्धिनि नानाछन्दोगर्भितशक्वरीस्वीकारे सति मुख्यस्याश्वस्य सर्वपश्वात्मकत्वं संपादितं भवति॥

अथ चोदकप्राप्तं सामान्तरमपवदितुं सामविशेषं विधत्ते—

पार्थुरश्मं ब्रह्मसामं भवति रश्मिना वा अश्वो यत ईश्वरो वा अश्वोऽयतोऽप्रतिष्ठितः परां परावतं गन्तोर्यत्पार्थुरश्मं ब्रह्मसामं भवत्यश्वस्य यत्यै धृत्यै, इति।

पृथुरश्मिना महर्षिणा दृष्टं साम पार्थुरश्मं, ब्रह्माणमृत्विजमभिलक्ष्य गीयमानं साम ब्रह्मसामं, तच्च नात्र प्रकृतं कार्यं किंतु पार्थुरश्मं कार्यम्। यस्मात्का-

रणाद्रश्मिना रज्जुविशेषेण दृढीभूतोऽश्वः पुरुषमपेक्षितदेशे नेतुमीश्वरः समर्थः, यस्माच्च कारणादयतो नियमनरहितोऽश्वः क्वाप्यप्रतिष्ठितः सन्नत्यन्तं दूरं गन्तुं समर्थस्तस्मादश्वस्य यत्यै दूरगमननियमनायोपरितनपुरुषेण धारणाय च पार्थुरश्मं कार्यम् ॥

तथैवाच्छावाकं प्रति गातव्यं सामविशेषं विधत्ते—

संकृत्यच्छावाकसामं भवत्युत्सन्नयज्ञो वा एष यदश्वमेधः कस्तद्वेदेत्याहुर्यदि सर्वो वा क्रियते न वा सर्व इति यत्संकृत्यच्छावाकसामं भवत्यश्वस्य सर्वत्वाय पर्याप्त्या अनन्तरायाय, इति ।

समीचीनाऽऽकृतिर्यस्य साम्नस्तत्संकृति विकलमङ्गं सम्यक्कर्तुं समर्थमित्यर्थः। एतन्नामकं सामगानां यत्प्रसिद्धं तदच्छावाकमभिलक्ष्य गातव्यम् । योऽयमश्वमेधः क्रतुः सोऽयं विनष्टयज्ञावयवो बहुभिरवयवैरुपेतत्वात्कृत्स्नोऽयमवयवसंघातः क्रियते क्वचित्किंचिदवयवो विस्मृतो वेति को नाम लोके वेत्ति । तस्मात्संकृतिगानेनाश्वसंबन्धिनः क्रतोः सर्वावयवसाकल्यं भवति । तच्च देवानां संपूर्त्यै यजमानस्य च स्वर्गप्राप्तिविघ्नपरिहाराय संपद्यते ॥

अपेक्षितविशेषगुणैर्युक्तं द्वितीयमहर्विधायाथ तृतीयमहर्विधत्ते—

सर्वस्तोमोऽतिरात्र उत्तममहर्भवति सर्वस्याऽऽप्त्यै सर्वस्य जित्यै सर्वमेव तेनाऽऽप्नोति सर्वं जयति ॥, इति ॥

त्रिवृदाद्यास्त्रयस्त्रिंशदन्ता आम्नाताः सर्वेऽपि स्तोमा यस्मिन्नतिरात्रे सन्ति सोऽयमतिरात्रस्तृतीयदिवसे कर्तव्यः । तच्च स्तोमगतं सर्वत्वं स्वेन पूर्वमप्राप्तस्य सर्वस्यापि प्राप्त्यै भवति । यस्तु वैरी पूर्वमजितस्तस्य सर्वस्यापि जयाय भवति । तस्मादयं यजमानस्तेन सर्वस्तोमेन प्राप्तव्यं धनादिकं सर्वं प्राप्नोति, जेतव्यं वैरिवर्गं सर्वं जयति ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये पञ्चमकाण्डे चतुर्थप्रपाठके प्रथमादिद्वादशान्ता अनुवाकाः ॥ १—१२ ॥

———

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥ १ ॥

इति श्रीमद्विद्यातीर्थमहेश्वरापरावतारस्य श्रीमद्राजाधिराजपरमेश्वरस्य श्रीवीरबुक्कमहाराजस्याऽऽज्ञापरिपालकेन माधवाचार्येण विरचिते वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये पञ्चमकाण्डे चतुर्थः प्रपाठकः ॥ ४ ॥

---

( अथ पञ्चमाष्टके पञ्चमः प्रपाठकः । )

---

( तत्र प्रथमोऽनुवाकः । )

---

हरिः ॐ ।

यदेकेन सꣳस्थापयति यज्ञस्य संतत्या अविच्छेदायैन्द्राः पशवो ये मुष्करा यदैन्द्राः सन्तोऽग्निभ्य आ लभ्यन्ते देवताभ्यः समदं दधात्याग्नेयीस्त्रिष्टुभो याज्यानुवाक्याः कुर्याद्यदाग्नेयीस्तेनाऽऽग्नेया यत्त्रिष्टुभस्तेनैन्द्राः समृद्ध्यै न देवताभ्यः समदं दधाति वायवे नियुत्वते तूपरमा लभते तेजोऽग्नेर्वायुस्तेजस एष आ लभ्यते तस्माद्यद्रियङ्वायुः ( १ ) वाति तद्रियङ्ङग्निर्दहति स्वमेव तत्तेजोऽन्वेति यन्न नियुत्वते स्यादुन्माद्येद्यजमानो नियुत्वते भवति यजमानस्यानुन्मादाय वायुमती श्वेतवती याज्यानुवाक्ये भवतः सतेजस्त्वाय हिरण्यग-

र्भः समवर्ततात्र इत्याघारमा घारयति प्रजापतिर्वै हिरण्यगर्भः प्रजापतेरनुरूपत्वाय सर्वाणि वा एष रूपाणि पशूनां प्रत्या लभ्यते यच्छ्मश्रुणस्तत् ( २ ) पुरुषाणाꣳ रूपं यत्तूपरस्तदश्वानां यदन्यतोदन्तद्गवां यदव्या इव शफास्तदवीनां यदजस्तदजानां वायुर्वै पशूनां प्रियं धाम यद्वायव्यो भवत्येतमेवैनमभि संजानानाः पशव उप तिष्ठन्ते वायव्यः कार्या३ः प्राजापत्या३ इत्याहुर्यद्वायव्यं कुर्यात्प्रजापतेरियाद्यत्प्राजापत्यं कुर्याद्वायोः ( ३ ) इयाद्यद्वायव्यः पशुर्भवति तेन वायोर्नैति यत्प्राजापत्यः पुरोडाशो भवति तेन प्रजापतेर्नैति यद्द्वादशकपालस्तेन वैश्वानरान्नैत्याग्नावैष्णवमेकादशकपालं निर्वपति दीक्षिष्यमाणोऽग्निः सर्वा देवता विष्णुर्यज्ञो देवताश्चैव यज्ञं चाऽऽरभतेऽग्निरवमो देवतानां विष्णुः परमो यदाग्नावैष्णवमेकादशकपालं निर्वपति देवताः ( ४ ) एवोभयतः परिगृह्य यजमानोऽव रुन्धे पुरोडाशेन वै देवा अमुष्मिँल्लोक आर्ध्नुवन्चरुणाऽस्मिन्यः कामयेतामुष्मिँल्लोक ऋध्नुयामिति स

पुरोडाशं कुर्वीतामुष्मिन्नेव लोक ऋध्नोति यदष्टाकपालस्तेनाऽऽग्नेयो यत्त्रिकपालस्तेन वैष्णवः समृद्ध्यै यः कामयेतास्मिँल्लोक ऋध्नुयामिति स चरुं कुर्वीताग्नेर्घृतं विष्णोस्तण्डुलास्तस्मात् ( ५ ) चरुः कार्योऽस्मिन्नेव लोक ऋध्नोत्यादित्यो भवती यं वा अदितिरस्यामेव प्रति तिष्ठत्यथो अस्यामेवाधि यज्ञं तनुते यो वै संवत्सरमुख्यमभृत्वाऽग्निं चिनुते यथा सामि गर्भोऽवपद्यते तादृगेव तदार्तिमार्छेद्वैश्वानरं द्वादशकपालं पुरस्तान्निर्वपेत्संवत्सरो वा अग्निर्वैश्वानरो यथा संवत्सरमाप्त्वा ( ६ ) काल आगते विजायत एवमेव संवत्सरमाप्त्वा काल आगतेऽग्निं चिनुते नाऽऽर्तिमार्छत्येषा वा अग्नेः प्रिया तनूर्यद्वैश्वानरः प्रियामेवास्य तनुवमव रुन्धे त्रीण्येतानि हवीꣳषि भवन्ति त्रय इमे लोका एषां लोकानाꣳ रोहाय ( ७ ) ॥

( यद्रियङ्वायुः श्मश्रुणस्तद्वायोर्निर्वपति देवतास्तस्मादाप्त्वाऽष्टात्रिꣳशच्च। )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां पञ्चमाष्टके पञ्चमप्रपाठके प्रथमोऽनुवाकः ॥ १ ॥

---

( अथ पञ्चमाष्टके पञ्चमः प्रपाठकः । )

तत्र प्रथमोऽनुवाकः । )



हरिः ॐ ।

यत् । एकेन । संस्थापयतीति सं—स्थापयति । यज्ञस्य । संतत्या इति सं—तत्यै । अविच्छेदायेत्यवि—च्छेदाय । ऐन्द्राः । पशवः । ये । मुष्कराः । यत् । ऐन्द्राः । सन्तः । अग्निभ्य इत्यग्नि—भ्यः । आलभ्यन्त इत्या—लभ्यन्ते । देवताभ्यः । समदमिति स—मदम् । दधाति । आग्नेयीः । त्रिष्टुभः । याज्यानुवाक्या इति याज्या—अनुवाक्याः । कुर्यात् । यत् । आग्नेयीः । तेन । आग्नेयाः । यत् । त्रिष्टुभः । तेन । ऐन्द्राः । समृद्ध्या इति सम्—ऋद्ध्यै । न । देवताभ्यः । समदमिति स—मदम् । दधाति । वायवे । नियुत्वत इति नि—युत्वते । तूपरम् । एति । लभते । तेजः । अग्नेः । वायुः । तेजसे । एषः । एति । लभ्यते । तस्मात् । यद्रियङ् । वायुः (१) । वाति । तद्रियङ् । अग्निः । दहति । स्वम् । एव । तत् । तेजः । अन्विति । एति । यत् । न । नियुत्वत इति नि—युत्वते । स्यात् । उदिति । माद्येत् । यजमानः ।

नियुत्वत इति नि—युत्वते। भवति। यजमानस्य। अनुन्मादायेत्यनुत्—मादाय। वायुमती इति वायु—मती। श्वेतवती इति श्वेत—वती। याज्यानुवाक्ये इति याज्या—अनुवाक्ये। भवतः। सतेजस्त्वायेति सतेजः—त्वाय। हिरण्यगर्भ इति हिरण्य—गर्भः। समिति। अवर्तत। अग्रे। इति। आघारमित्या—घारम्। एति। घारयति। प्रजापतिरिति प्रजा—पतिः। वै। हिरण्यगर्भ इति हिरण्य—गर्भः। प्रजापतेरिति प्रजा—पतेः। अनुरूपत्वायेत्यनुरूप—त्वाय। सर्वाणि। वै। एषः। रूपाणि। पशूनाम्। प्रति। एति। लभ्यते। यत्। श्मश्रुणः। तत् (२)। पुरुषाणाम्। रूपम्। यत्। तूपरः। तत्। अश्वानाम्। यत्। अन्यतोदन्नित्यन्यतः—दन्। तत्। गवाम्। यत्। अव्याः। इव। शफाः। तत्। अवीनाम्। यत्। अजः। तत्। अजानाम्। वायुः। वै। पशूनाम्। प्रियम्। धाम। यत्। वायव्यः। भवति। एतम्। एव। एनम्। अभीति। संजानाना इति सं—जानानाः। पशवः। उपेति। तिष्ठन्ते। वायव्यः। कार्या३ः। प्राजापत्या३ इति प्राजा—पत्या३ः। इति। आहुः। यत्।

वायव्यम् । कुर्यात् । प्रजापतेरिति प्रजा—पतेः । इयात् । यत् । प्राजापत्यमिति प्राजा—पत्यम् । कुर्यात् । वायोः ( ३ ) । इयात् । यत् । वायव्यः । पशुः । भवति । तेन । वायोः । न । एति । यत् । प्राजापत्य इति प्राजा—पत्यः । पुरोडाशः । भवति । तेन । प्रजापतेरिति प्रजा—पतेः । न । एति । यत् । द्वादशकपाल इति द्वादश—कपालः । तेन । वैश्वानरात् । न । एति । आग्नावैष्णवमित्याग्ना—वैष्णवम् । एकादशकपालमित्येकादश—कपालम् । निरिति । वपति । दीक्षिष्यमाणः । अग्निः । सर्वाः । देवताः । विष्णुः । यज्ञः । देवताः । च । एव । यज्ञम् । च । एति । रभते । अग्निः । अवमः । देवतानाम् । विष्णुः । परमः । यत् । आग्नावैष्णवमित्याग्ना—वैष्णवम् । एकादशकपालमित्येकादश—कपालम् । निर्वपतीति निः—वपति । देवताः ( ४ ) । एव । उभयतः । परिगृह्येति परि—गृह्य । यजमानः । अवेति । रुन्धे । पुरोडाशेन । वै । देवाः । अमुष्मिन् । लोके । आर्ध्नुवन् । चरुणा । अस्मिन् । यः । कामयेत । अमुष्मिन् । लोके । ऋध्नुयाम् । इति । सः । पुरोडाशम् । कुर्वीत । अमुष्मिन् । एव ।

लोके । ऋध्नोति । यत् । अष्टाकपाल इत्यष्टा—कपालः । तेन । आग्नेयः । यत् । त्रिकपाल इति त्रि—कपालः । तेन । वैष्णवः । समृद्ध्या इति सम्—ऋद्ध्यै । यः । कामयेत । अस्मिन् । लोके । ऋध्नुयाम् । इति । सः । चरुम् । कुर्वीत । अग्ने । घृतम् । विष्णोः । तण्डुलाः । तस्मात् ( ५ ) । चरुः । कार्यः । अस्मिन् । एव । लोके । ऋध्नोति । आदित्यः । भवति । इयम् । वै । अदितिः । अस्याम् । एव । प्रतीति । तिष्ठति । अथो इति । अस्याम् । एव । अधीति । यज्ञम् । तनुते । यः । वै । संवत्सर-मिति सं—वत्सरम् । उख्यम् । अभृत्वा । अग्निम् । चिनुते । यथा । सामि । गर्भः । अवपद्यत इत्यव—पद्यते । तादृक् । एव । तत् । आर्तिम् । एति । ऋच्छेत् । वैश्वानरम् । द्वादशकपालमिति द्वादश—कपालम् । पुरस्तात् । निरिति । वपेत् । संवत्सर इति सं—वत्सरः । वै । अग्निः । वैश्वानरः । यथा । संवत्सरमिति सं—वत्सरम् । आप्त्वा( ६ ) । काले । आगत इत्या—गते । विजायत इति वि—जायते । एवम् । एव । संवत्सरमिति सं—वत्सरम् । आप्त्वा । काले । आगत इत्या—गते । अग्निम् । चिनुते ।

न । आर्तिम् । एति । ऋच्छति । एषा । वै । अग्नेः । प्रिया । तनूः । यत् । वैश्वानरः । प्रियाम् । एव । अस्य । तनुवम् । अवेति । रुन्धे । त्रीणि । एतानि । हवींषि । भवन्ति । त्रयः । इमे । लोकाः । एषाम् । लोकानाम् । रोहाय ( ७ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे पञ्चमाष्टके पञ्चमप्रपाठके प्रथमोऽनुवाकः ॥ १ ॥

---

( अथ पञ्चमकाण्डे पञ्चमः प्रपाठकः । )
( तत्र प्रथमोऽनुवाकः । )

---

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥
मन्त्राणां ब्राह्मणं प्रोक्तं प्रपाठकचतुष्टये ।
अथ प्रश्नत्रये तत्र शिष्टमङ्गं विविच्यते ॥ २ ॥

प्रथमप्रपाठक एकविंशत्या माषैरित्यस्मिन्ननुवाकेऽग्निभ्यः पशूनालभत इति विधायान्येषां पशूनां पर्यग्निकृतानामुत्सर्गमुक्त्वा प्राजापत्येन संस्थापयतीति यदुक्तं तदनुस्मारयितुमनुवदति—

यदेकेन संस्थापयति यज्ञस्य संतत्या अविच्छेदाय, इति ।

इतरान्पशूनुत्सृज्य प्राजापत्येनैकेन समापनं यत्तत्प्रारब्धस्य पशुकर्मणः सांतत्याय भवति । असमापने तु विच्छेदः स्यात् ॥

अथ तस्मिन्कर्मणि मन्त्रविशेषं विधत्ते—

ऐन्द्राः पशवो ये मुष्करा यदैन्द्राः सन्तोऽग्निभ्य आ लभ्यन्ते देवताभ्यः समदं दधात्याग्नेयीस्त्रिष्टुभो याज्यानुवाक्याः कुर्याद्यदाग्नेयीस्तेनाऽऽग्नेया यत्त्रिष्टुभस्तेनैन्द्राः समृद्ध्यै न देवताभ्यः समदं दधाति, इति ।

( दीक्षणीयेष्ट्यभिधानम् )

ये लोके मुष्करा अण्डसहिताः पशवः सन्ति ते सर्वे पुंस्त्वलक्षणयेन्द्रियवृध्या युक्तत्वादिन्द्रदेवताकाः । तादृशानामन्यथालम्भनं देवतानां कलहं संपादयेत् । अतः कलहपरिहारायाग्निदेवताकास्त्रिष्टुप्छन्दस्का ऋचो याज्यानुवाक्याः कुर्यात् । तथा सति ऋचामाग्नेयत्वेन पशवोऽप्याग्नेयाः संपद्यन्ते । त्रिष्टुभ इन्द्रेण सहोत्पन्नत्वात्तेन च्छन्दसा पशव ऐन्द्रा अपि संपद्यन्ते । तदुभयं मिलित्वा कलहं परिहृत्य समृध्यै संपद्यते ॥

यदुक्तं सूत्रकारेण—" अपि वा सर्वेषामेतेषां स्थाने वायवे नियुत्वते श्वेतमजं तूपरमालभते वायुमती श्वेतवती वपाया याज्यानुवाक्ये " इति, तमिमं पक्षं विधत्ते—

वायवे नियुत्वते तूपरमा लभते तेजोऽग्नेर्वायुस्तेजस एष आ लभ्यते तस्माद्यद्रियङ्ङ्वायुर्वाति तद्रियङ्ङग्निर्दहाति स्वमेव तत्तेजोऽन्वेति , इति ।

नियुत्संज्ञका अश्वविशेषा यस्य वायोः सन्ति सोऽयं नियुत्वान् । तूपरः शृङ्गरहितः । अग्निज्वालाया उद्बोधकत्वाद्वायुरेवाग्नेस्तेजः । तस्मात्तेजस एष तूपर आलब्धो भवति । यां दिशं प्रति गच्छतीति यद्रियङ्ङ्वायुर्यद्दिगभिमुखो वाति तद्दिगभिमुख एवाग्निर्दहाति । तेन दहनेन स्वकीयमेव तेजोऽनुगतवान्भवति ॥

नियुत्वत इत्येतद्वायुविशेषणमन्वयव्यतिरेकाभ्यां प्रशंसति—

यन्न नियुत्वते स्यादुन्माद्येद्यजमानो नियुत्वते भवति यजमानस्यानुन्मादाय , इति ।

वायोर्नियामकाश्वाभावे सति यजमानोऽपि नियामकबुद्धिरहितः सन्नुन्मत्तो यत्र क्वापि गच्छेद्यत्किंचिद्वा वदेत् । अतस्तत्परिहाराय नियुत्वद्विशेषणं वायोरपेक्षितम् ॥

मन्त्रविशेषं विधत्ते—

वायुमती श्वेतवती याज्यानुवाक्ये भवतः सतेजस्त्वाय , इति ।

---

१ ख. °म्भने दे° ।

पीवोऽन्नाꣳ रयिवृध इत्यृचौ वायुमत्यौ श्वेतवत्यौ च, ते वायवे समनस इति वायुशब्दसद्भावाच्छ्वेतः सिषक्तीति श्वेतशब्दसद्भावाच्च । वायोरग्नितेजस्त्वात्पशुश्वैत्यस्य च तेजोरूपत्वात्तदुभयं सतेजस्त्वाय संपद्यते ॥

द्वितीयाघारे प्राकृतमन्त्रं बाधितुं विधत्ते—

हिरण्यगर्भः समवर्तताग्र इत्याघारमा घारयति प्रजापतिर्वै हिरण्यगर्भः प्रजापतेरनुरूपत्वाय, इति ।

हिरण्यं ब्रह्माण्डरूपं यस्येश्वरस्य प्रजापतेर्गर्भे वर्तते सोऽयं हिरण्यगर्भः । यद्वा हिरण्यस्य ब्रह्माण्डस्य मध्ये सत्यलोके गर्भरूपत्वेनावस्थितश्चतुर्मुखो हिरण्यगर्भः । अतोऽयं मन्त्रः प्रजापतेरनुरूपः ॥

पशुं प्रशंसति—

सर्वाणि वा एष रूपाणि पशूनां प्रत्यालभ्यते यच्छ्मश्रुणस्तत्पुरुषाणाꣳ रूपं यत्तूपरस्तदश्वानां यदन्यतोदन्तद्गवां यदव्या इव शफास्तदवीनां यदजस्तदजानाम्, इति ।

पशूनां द्विपदां चतुष्पदां च यानि रूपाणि सन्ति तानि सर्वाणि प्रति तद्रूपत्वेनैव पशुरालभ्यते । तत्र श्मश्रुयुक्तत्वेन द्विपदा पुरुषेण साम्यं, शृङ्गरहितत्वेनाश्वस्य साम्यम्, अधस्तनपङ्क्तावेव दन्तसद्भावेन गोसाम्यम्, अविसदृशैः क्षुल्लकैर्द्विखुरैरुपेतत्वादविसाम्यम्, अजजात्या सर्वेषामजानां साम्यम् ॥

अथ वायुदेवतां प्रशंसति—

वायुर्वै पशूनां प्रियं धाम यद्वायव्यो भवत्येतमेवैनमभि संजानानाः पशव उप तिष्ठन्ते, इति ।

पशूनां प्रावरणरहितत्वेन संचरणाद्वायुः प्रियं धाम । अतः पशोर्वायव्यत्वे सत्येनं वायुमभिलक्ष्य सम्यक्स्वकीयं धाम जानन्तः पशवः प्राप्यन्ते ॥

अत्र मीमांसया निर्णेतुं कंचिदर्थविशेषमनुप्रेयं विधत्ते—

वायव्यः कार्या३ः प्राजापत्या३ इत्याहुर्यद्वायव्यं कुर्यात्प्रजापतेरियाद्यत्प्राजापत्यं कुर्याद्वायोरियाद्यद्वायव्यः पशुर्भवति तेन वायोर्नैति

यत्प्राजापत्यः पुरोडाशो भवति तेन प्रजापते-
र्नैति यद्द्वादशकपालस्तेन वैश्वानरान्नैति, इति।

पशोर्वायव्यत्वे सत्ययं पशुः प्रजापतेरपेयात्। प्राजापत्ये सति वायोरपेयात्। एवमन्यदप्यत्राध्याहर्तव्यम्। पक्षद्वयेऽपि वैश्वानरादप्यपेयाद्वैश्वानरसंबन्धित्वे ताभ्यामपेयादिति प्रथमपक्षोपन्यासेऽपि वैश्वानरादित्यपि तृतीयः पक्षोऽध्याहर्तव्यः। तत्रायं निर्णयः—पशुर्वायव्यः पुरोडाशः प्राजापत्यस्तस्य द्वादशकपालत्वं वैश्वानरसंबन्धि तेन देवतात्रयान्नापैतीति॥

यदुक्तं सूत्रकारेण—"यत्प्राग्दीक्षणीयायास्तत्कृत्वा त्रिहविषं दीक्षणीयां निर्वपति वैश्वानरं द्वादशकपालं तृतीयं पुरस्तादसंवत्सरभृतः" इति। अत्राऽऽग्नावैष्णवमेकादशकपालमादित्यं चरुं चापेक्ष्य वैश्वानरस्य तृतीयत्वम्। तत्र प्रथमं हविर्विधत्ते—

आग्नावैष्णवमेकादशकपालं निर्वपति
दीक्षिष्यमाणोऽग्निः सर्वा देवता विष्णु-
र्यज्ञो देवताश्चैव यज्ञं चाऽऽरभते, इति।

अग्नेः सर्वदेवतारूपत्वं सोमप्रकरणे स्पष्टमाम्नातम्—"ते देवा बिभ्यतोऽग्निं प्राविशन्तस्मादाहुरग्निः सर्वा देवताः" इति। यज्ञस्य सर्वाङ्गव्यापित्वाद्विष्णुत्वम्। अत एतदीयेन हविषा सर्वा देवता यज्ञं चोपक्रान्तवान्भवति॥

प्रकारान्तरेण देवताद्वयं प्रशंसति—

अग्निरवमो देवतानां विष्णुः परमो यदाग्नावै-
ष्णवमेकादशकपालं निर्वपति देवता एवो-
भयतः परिगृह्य यजमानोऽव रुन्धे, इति।

शस्त्राणां मध्ये प्रथमशस्त्रे भूरग्निर्ज्योतिरित्युक्तत्वादग्नेरवमत्वं चरमशस्त्रे विष्णोर्नुकमित्युक्तत्वाद्विष्णुः परमः। अत आग्नावैष्णवनिर्वापेण मध्यवर्तिनीः सर्वा देवता उभयतः परिगृह्य स्वाधीनाः करोति॥

कामनाविशेषेण पुरोडाशं विधत्ते—

पुरोडाशेन वै देवा अमुष्मिँल्लोक आ-
र्ध्नुवन्चरुणाऽस्मिन्यः कामयेतामुष्मि-

---

१ ख. घ. ङ. च. °व्यः पशुपे।

ल्लोक ऋध्नुयामिति स पुरोडाशं कुर्वी-
तामुष्मिन्नेव लोक ऋध्नोति, इति ॥

अथ कपालगतामेकादशसंख्यां विभज्य प्रशंसति—

यदष्टाकपालस्तेनाऽऽग्नेयो यत्त्रिकपा-
लस्तेन वैष्णवः समृद्ध्यै, इति ।

अन्यत्र ह्याग्नेयमष्टाकपालं निर्वपतीत्युक्तत्वादष्टसंख्याऽग्नेः प्रिया । तथा वैष्णवं त्रिकपालमित्युक्तत्वात्त्रिसंख्या विष्णोः प्रिया । तदुभयं समृद्ध्यै भवति ॥

फलविशेषाय चरुं विधत्ते—

यः कामयेतास्मिँल्लोक ऋध्नुयामिति स चरुं
कुर्वीताग्नेर्घृतं विष्णोस्तण्डुलास्तस्मा-
च्चरुः कार्योऽस्मिन्नेव लोक ऋध्नोति, इति ।

घृतमग्नेः "घृतमस्य योनिर्घृते श्रितः" इत्यादिमन्त्रवर्णात् । तण्डुलास्तु विष्णोः प्रियाः "येऽणिष्ठास्तान्विष्णवे शिपिविष्टाय" इति श्रुतेः । तस्मादुभयप्रियत्वाद्घृतयुक्तश्चरुः कार्यः । एतेनास्मिँल्लोके समृद्धो भवति ॥

अथ हविरन्तरं विधत्ते—

आदित्यो भवतीयं वा अदितिरस्यामेव प्रति
तिष्ठत्यथो अस्यामेवाधि यज्ञं तनुते, इति ।

अदितिर्देवता यस्य चरोः सोऽयमादित्यः । आग्नावैष्णवं हविः प्रथमं कृत्वा द्वितीयहविष्ट्वेनायमादित्यश्चरुः कार्यः । अदितिशब्देनेयमेव भूमिरुच्यते । अस्यामेव भूमावुपरि यज्ञं कृतवान्भवति भूमौ प्रतिष्ठितश्च भवति ॥

अथ तृतीयं हविर्विधत्ते—

यो वै संवत्सरमुख्यमभृत्वाऽग्निं चिनुते यथा
सामि गर्भोऽवपद्यते तादृगेव तदार्तिमार्छेद्वै-
श्वानरं द्वादशकपालं पुरस्तान्निर्वपेत्संवत्सरो
वा अग्निर्वैश्वानरो यथा संवत्सरमाप्त्वा काल
आगते विजायत एवमेव संवत्सरमाप्त्वा काल
आगतेऽग्निं चिनुते नाऽऽर्तिमार्छति, इति ।

उख्यस्याग्नेः संवत्सरधारणमुपरिष्टाद्विधास्यति—" संवत्सरमुख्यं भृत्वा " इति। तेन च धारणेन विनाऽग्निचयनमपरिपक्वगर्भपातेन समानम्। अतो यजमानो म्रियते। तस्मात्संवत्सरं धारयितुमशक्तः पुमान्संवत्सरात्प्रागेव तिस्रः षड्वा दश वा रात्रीर्दीक्षाश्चिकीर्षुर्वैश्वानरं द्वादशकपालं निर्वपेत्, तस्य च वैश्वानरस्याग्नेः संवत्सररूपत्वात्। यथा लोके संवत्सरेण पूर्णो गर्भः काले सुखेन जायत एवमप्यनयेष्ट्या संवत्सरं प्राप्य काले प्राप्ते चितवान्भवति। ततो न म्रियते ॥

प्रकारान्तरेण प्रशंसति—

एषा वा अग्नेः प्रिया तनूर्यद्वैश्वानरः
प्रियामेवास्य तनुवमव रुन्धे , इति।

सर्वेषां पुरुषाणामुपकारकः कश्चिदग्निमूर्तिविशेषो वैश्वानरः। सा च मूर्तिरग्नेः प्रियं शरीरम्। ततस्तयेष्ट्याऽग्निसंबन्धिनीं प्रियामेव तनुवं प्राप्नोति ॥

विहितानां हविषां त्रित्वं प्रशंसति—

त्रीण्येतानि हवीꣳषि भवन्ति त्रय इमे
लोका एषां लोकानाꣳ रोहाय ॥, इति ॥

प्राप्तय इत्यर्थः। यद्यप्याग्नावैष्णवं हविः प्रकृतावपि विद्यमानत्वाचोदकप्राप्तं तथाऽप्युपरितनहविर्विधानायायमनुवाद इत्यविरोधः। सेयं दीक्षणीयेष्टिः षड्भिर्दीक्षयतीत्यस्मादनुवाकात्पूर्वं द्रष्टव्या। प्रकृतौ दीक्षाहुतीनामिष्ट्यनन्तरभावित्वात्। यत्तु रुक्ममन्तरं प्रतिमुञ्चत इति विहितं तत्तूपरितने न ह स्म वै पुराऽग्निरित्येतस्मिन्ननुवाके समाम्नातम् ॥

तत्रेयं मीमांसा।

पञ्चमाध्यायस्य द्वितीयपादे द्वादशाधिकरणे चिन्तितम्—

चयने रुक्मधृत्यादिः[1] पुरोत स्वामिसंस्कृतिः[2]।
पाठादाद्योऽन्तिमः क्लृप्तः(प्त)क्रमात्पाठस्य न क्षतिः ॥

अग्निचयने दीक्षणीयादेरूर्ध्वं रुक्मधारणमाम्नातम्। कण्ठे धृतः सन्नुरसि लम्बमानः सौवर्ण आभरणविशेषो रुक्मशब्दार्थः। उखास्थितोऽग्निः शिक्येऽवस्थापितः कण्ठे धार्यमाणो यथोरःप्रदेशं न दहति तथा व्यवधायकत्वेन तद्धारणम्। अत एव ब्राह्मणम् " रुक्ममन्तरं प्रति मुञ्चतेऽमृतमेव मृत्योरन्तर्धत्ते"

१ ख. °क्मभृत्या°। २ क. घ. ङ. °त्यादि पु°।

इति । यजमानसंस्कारा वपनादयः प्रकृतौ दीक्षणीयानन्तरभाविनश्चोदकेन प्राप्तास्तेभ्यः पूर्वमेव रुक्मप्रतिमोकः पदार्थः कार्यः, तस्य प्रत्यक्षपाठात्सावित्रादिषु तस्याऽऽदृतत्वादिति चेत् । मैवं, यजमानसंस्काराणां दीक्षणीयानन्तर्यं प्रकृतौ कृतम् । रुक्मस्य तु पाठेन तत्कल्पनीयम् । तस्मात्संस्काराः पूर्वभाविनः । न च सावित्रदृष्टान्तो युक्तः । दीक्षणीयाया इव संस्काराणां प्रतिमोकादूर्ध्वं पुनः पाठात् । नच दीक्षणीयानन्तर्ये बाधिते रुक्मप्रतिमोकपाठवैयर्थ्यं, स्वरूपबोधनेन चरितार्थत्वात् । ततो रुक्मप्रतिमोकः पश्चात्कार्यः ।

चतुर्थाध्यायस्य चतुर्थपादे षष्ठाधिकरणे चिन्तितम्—

नित्यो नैमित्तिको वा स्याद्यागो वैश्वानरश्रितौ ।
नित्यः पुरेव यच्छब्दादविरोधाच्च पश्चिमः ॥

अग्निचयने श्रूयते–" यो वै संवत्सरमुख्यमभृत्वाऽग्निं चिनुते यथा सामि गर्भोऽवपद्यते तादृगेव तदार्तिमार्छेद्वैश्वानरं द्वादशकपालं पुरस्तान्निर्वपेत्" इति । उखा पिठरः । तामुखां युञ्जानः प्रथमं मन इत्यादिप्रपाठकाम्नातैर्मन्त्रैः संपाद्य तस्यामुखायामग्निं निधाय षडुद्यामे द्वादशोद्यामे वा शिक्ये तामुखामवस्थाप्य तच्छिक्यं स्वकण्ठे बद्ध्वा तमुख्यमग्निं संवत्सरं भृत्वा पश्चादिष्टकाभिरग्निश्चेतव्यः । अभरणे त्वपूर्णगर्भपातवद्विनाशः स्यात् । अतो वैश्वानरेष्टिं चयनात्प्रागेव कुर्यादित्यर्थः। अत्राप्यन्तरायवाक्यवदभरणवाक्यस्यार्थवादत्वान्नित्या वैश्वानरेष्टिरिति चेन्मैवम् । यः पुमान्भृत्वा चिनुते स निर्वपेदिति कर्तृसमानाधिकृतयच्छब्दबलादभरणेष्ट्योर्निमित्तनैमित्तिकभावावभासात् । किंच, दधिग्रहस्य नित्यस्य पाक्षिकत्वरूपं नैमित्तिकत्वं विरुद्धम् । इह तु नित्यत्वे प्रमाणाभावादेकमेव नैमित्तिकत्वमित्यविरोधः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये पञ्चमकाण्डे पञ्चमप्रपाठके
प्रथमोऽनुवाकः ॥ १ ॥

---

( अथ पञ्चमाष्टके पञ्चमप्रपाठके द्वितीयोऽनुवाकः । )

---

प्रजापतिः प्रजाः सृष्ट्वा प्रेणाऽनु प्राविशत्ताभ्यः पुनः संभवितुं नाशक्नोत्सोऽब्रवीदृध्नवदि-

---

१ ख. च. ॅराश्च वॅ । २ ख. च. ॅन इह चोदॅ । ३ ख. च. बोधिते ।

रस यो मेतः पुनः संचिनवदिति तं देवाः समं-
चिन्वन्ततो वै त आर्ध्नुवन्यत्समचिन्वन्तच्चि-
त्यस्य चित्यत्वं य एवं विद्वानग्निं चिनुत
ऋध्नोत्येव कस्मै कमग्निश्चीयत इत्याहुरग्नि-
वान् ( १ ) असानीति वा अग्निश्चीयतेऽग्नि-
वानेव भवति कस्मै कमग्निश्चीयत इत्याहुर्देवा
मा वेदन्निति वा अग्निश्चीयते विदुरेनं देवाः
कस्मै कमग्निश्चीयत इत्याहुर्गृह्यसानीति वा
अग्निश्चीयते गृह्येव भवति कस्मै कमग्निश्चीयत
इत्याहुः पशुमानसानीति वा अग्निः ( २ )
चीयते पशुमानेव भवति कस्मै कमग्निश्चीयत
इत्याहुः सप्त मा पुरुषा उप जीवानिति वा अ-
ग्निश्चीयते त्रयः प्राञ्चस्त्रयः प्रत्यञ्च आत्मा सप्तम
एतावन्त एवैनममुष्मिँल्लोक उप जीवन्ति
प्रजापतिरग्निमचिकीषत तं पृथिव्यब्रवीन्न
मय्यग्निं चेष्यसेऽति मा धक्ष्यति सा त्वाऽति-
दह्यमाना वि धविष्ये ( ३ ) स पापीयान्भविष्य-
सीति सोऽब्रवीत्तथा वा अहं करिष्यामि यथा
त्वा नातिधक्ष्यतीति स इमामभ्यमृशत्प्रजाप-
तिस्त्वा सादयतु तया देवतयाऽङ्गिरस्वद्ध्रुवा

सीदेतीमामेवेष्टकां कृत्वोपाधत्तानंतिदाहाय यत्प्रस्यग्निं चिन्वीत तदभि मृंशेत्प्रजापंतिस्त्वा सादयतु तया देवतयाऽङ्गिरस्वद्ध्रुवा सीद (४) इतीमामेवेष्टकां कृत्वोपं धत्तेऽनंतिदाहाय प्रजापंतिरकामयत प्र जायेयेति स एतमुख्यंमपश्यत्तꣳ संवत्सरमंबिभस्ततो वै स प्राजायत तस्मात्संवत्सरं भार्यः प्रैव जायते तं वसवोऽब्रुवन्प्र त्वमंजनिष्ठा वयं प्र जायामहा इति तं वसुभ्यः प्रायच्छत्तं त्रीण्यहान्यबिभरुस्तेन (५) त्रीणि च शतान्यसृजन्त त्रयस्त्रिꣳशतं च तस्मात्त्र्यहं भार्यः प्रैव जायते तान्रुद्रा अंब्रुवन्प्र यूयमंजनिढ्वं वयं प्र जायामहा इति तꣳ रुद्रेभ्यः प्रायच्छन्तꣳ षडहान्यबिभरुस्तेन त्रीणि च शतान्यसृजन्त त्रयंस्त्रिꣳशतं च तस्मात्षडहं भार्यः प्रैव जायते तानादित्या अंब्रुवन्प्र यूयमंजनिढ्वं वयम् (६) प्र जायामहा इति तमादित्येभ्यः प्रायच्छन्तं द्वादशाहान्यबिभरुस्तेन त्रीणि च शतान्यसृजन्त त्रयंस्त्रिꣳशतं च तस्माद्द्वादशाहं भार्यः प्रैव जायते तेन वै ते सहस्रमसृजन्तोखाꣳ सहस्रत-

मीं य एवमुख्यं साहस्रं वेद प्र सहस्रं पशूनां-प्नोति ( ७ ) ॥

( अग्निवान्पंशुमानंसानीति वा अग्निर्धिंविष्ये मृशेत्प्रजापंतिस्त्वा सादयतु तयां देवतंयाऽङ्गिरस्वद्ध्रुवा सींद तेन तानांदित्या अंब्रुवन्प्र यूयमंजनिढ्वं वयं चंत्वारिꣳशच्चं । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां पञ्चमाष्टके पञ्चमप्रपाठके द्वितीयोऽनुवाकः ॥ २ ॥

---

( अथ पञ्चमाष्टके पञ्चमप्रपाठके द्वितीयोऽनुवाकः । )

---

प्रजापंतिरितिं प्रजा—पतिः । प्रजा इतिं प्र—जाः । सृष्ट्वा । प्रेणा । अनुं । प्रेतिं । अविशत् । ताभ्यः । पुनंः । संभंवितुमिति सं—भवितुम् । न । अशक्नोत् । सः । अब्रवीत् । ऋध्नवंत् । इत् । सः । यः । मा । इतः । पुनंः । संचिनवदितिं सं—चिनवंत् । इतिं । तम् । देवाः । समितिं । अचिन्वन् । ततंः । वै । ते । आर्ध्नुवन् । यत् । समचिंन्वन्नितिं सम्—अचिंन्वन् । तत् । चित्यंस्य । चित्यत्वमितिं चित्य—त्वम् । यः । एवम् । विद्वान् । अग्निम् । चिनुते । ऋध्नोतिं । एव । कस्मैं । कम् । अग्निः । चीयते । इतिं । आहुः । अग्निवानित्यंग्नि—वान् ( १ ) । असानि । इतिं । वै । अग्निः । चीयते । अग्निवानि-

त्यंग्नि—वान् । एव । भवति । कस्मै । कम् । अग्निः । चीयते । इति । आहुः । देवाः । मा । वेदन् । इति । वै । अग्निः । चीयते । विदुः । एनम् । देवाः । कस्मै । कम् । अग्निः । चीयते । इति । आहुः । गृही । असानि । इति । वै । अग्निः । चीयते । गृही । एव । भवति । कस्मै । कम् । अग्निः । चीयते । इति । आहुः । पशुमानिति पशु—मान् । असानि । इति । वै । अग्निः ( २ ) । चीयते । पशुमानिति पशु—मान् । एव । भवति । कस्मै । कम् । अग्निः । चीयते । इति । आहुः । सप्त । मा । पुरुषाः । उपेति । जीवान् । इति । वै । अग्निः । चीयते । त्रयः । प्राञ्चः । त्रयः । प्रत्यञ्चः । आत्मा । सप्तमः । एतावन्तः । एव । एनम् । अमुष्मिन् । लोके । उपेति । जीवन्ति । प्रजापतिरिति प्रजा—पतिः । अग्निम् । अचिकीषत । तम् । पृथिवी । अब्रवीत् । न । मयि । अग्निम् । चेष्यसे । अतीति । मा । धक्ष्यति । सा । त्वा । अतिदह्यमानेत्यति—दह्यमाना । वीति । धविष्ये ( ३ ) । सः । पापीयान् । भविष्यसि । इति । सः । अब्रवीत् । तथा । वै । अहम् । करिष्यामि । यथा । त्वा । न । अति-

धक्ष्यतीत्यंति—धक्ष्यतिं । इतिं । सः । इमाम् । अभीतिं । अमृशत् । प्रजापंतिरितिं प्रजा—पतिः । त्वा । सादयतु । तयां । देवतंया । अङ्गिरस्वत् । ध्रुवा । सीद । इतिं । इमाम् । एव । इष्टंकाम् । कृत्वा । उपेतिं । अधत्त । अनंतिदाहायेत्यनंति—दाहाय । यत् । प्रतीतिं । अग्निम् । चिन्वीत । तत् । अभीतिं । मृशेत् । प्रजापंतिरितिं प्रजा—पतिः । त्वा । सादयतु । तयां । देवतंया । अङ्गिरस्वत् । ध्रुवा । सीद ( ४ ) । इतिं । इमाम् । एव । इष्टं-काम् । कृत्वा । उपेतिं । धत्ते । अनंतिदाहायेत्यनं-ति—दाहाय । प्रजापंतिरितिं प्रजा—पतिः । अका-मयत । प्रेतिं । जायेय । इतिं । सः । एतम् । उख्यंम् । अपश्यत् । तम् । संवत्सरमितिं सं—वत्सरम् । अबिभः । ततः । वै । सः । प्रेतिं । अजायत । तस्मांत् । संवत्सरमितिं सं—वत्सरम् । भार्यः । प्रेतिं । एव । जायते । तम् । वसंवः । अब्रु-वन् । प्रेतिं । त्वम् । अजनिष्ठाः । वयम् । प्रेतिं । जायामहे । इतिं । तम् । वसुंभ्य इति वसुं—भ्यः । प्रेतिं । अयच्छत् । तम् । त्रीणिं । अहांनि । आबिभरुः । तेनं ( ५ ) । त्रीणिं । च । शतानिं । असृंजन्त । त्रयं-

स्त्रिंशतमिति त्रयः—त्रिंशतम् । च । तस्मात् । त्र्यहमिति त्रि—अहम् । भार्यः । प्रेति । एव । जायते । तान् । रुद्राः । अब्रुवन् । प्रेति । यूयम् । अजनिढ्वम् । वयम् । प्रेति । जायामहे । इति । तम् । रुद्रेभ्यः । प्रेति । अयच्छन् । तम् । षट् । अहानि । आबिभरुः । तेन । त्रीणि । च । शतानि । असृजन्त । त्रयस्त्रिंशतमिति त्रयः—त्रिंशतम् । च । तस्मात् । षडहमिति षट्—अहम् । भार्यः । प्रेति । एव । जायते । तान् । आदित्याः । अब्रुवन् । प्रेति । यूयम् । अजनिढ्वम् । वयम् ( ६ ) । प्रेति । जायामहे । इति । तम् । आदित्येभ्यः । प्रेति । अयच्छन् । तम् । द्वादश । अहानि । अबिभरुः । तेन । त्रीणि । च । शतानि । असृजन्त । त्रयस्त्रिंशतमिति त्रयः—त्रिंशतम् । च । तस्मात् । द्वादशाहमिति द्वादश—अहम् । भार्यः । प्रेति । एव । जायते । तेन । वै । ते । सहस्रम् । असृजन्त । उखाम् । सहस्रतमीमिति सहस्र—तमीम् । यः । एवम् । उख्यम् । साहस्रम् । वेद । प्रेति । सहस्रम् । पशून् । आप्नोति ( ७ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे पञ्चमाष्टके पञ्चमप्रपाठके द्वितीयोऽनुवाकः ॥ २ ॥

---

(चयनतत्फलाभिधानम्)

(अथ पञ्चमकाण्डे पञ्चमप्रपाठके द्वितीयोऽनुवाकः।)

---

दीक्षणीयेष्टिराद्यानुवाके त्रिहविरीरिता। अथ द्वितीये चयनतत्फले अभिधीयेते।

तत्राऽऽदौ चयनं विधातुं प्रस्तौति—

प्रजापतिः प्रजाः सृष्ट्वा प्रेणाऽनु प्राविशत्ताभ्यः पुनः संभवितुं नाशक्नोत्सोऽब्रवीदृध्नवदित्स यो मेतः पुनः संचिनवदिति तं देवाः समचिन्वन्ततो वै त आर्ध्नुवन्यत्समचिन्वन्तच्चित्यस्य चित्यत्वम्, इति।

पुरा कदाचित्प्रजापतिः सर्वाः प्रजाः सृष्ट्वा प्रेणा प्रेम्णा प्रियातिशयेन तासु प्रजासु स्वयं प्राविशत्। प्रविश्य च ताभ्यः प्रजाभ्यः सकाशात्स्वकीयेन केनचिद्रूपेण पुनरुद्भवितुं नाशक्नोत्। अशक्तस्तत्रैव स्थित इदमब्रवीत्—यः कश्चिन्मामितः प्रजाभ्यः पुनः संभवो यथा भवति तथा चिनवच्चिनोति स पुरुष ऋध्नवदिदृध्नोत्येवेति तद्वाक्यं श्रुत्वा देवा अग्निरूपेण पुनः संभृतो यथा भवति तथा तं प्रजापतिरूपमग्निमिष्टकाभिरचिन्वंस्तेन चयनेन ते देवा ऋद्धिं प्राप्ताः। यस्मादेवं सम्यगचिन्वंस्तस्माच्चयनविषयादग्नेश्चित्यमिति नाम संपन्नम्॥

इदानीं विधत्ते—

य एवं विद्वानग्निं चिनुत ऋध्नोत्येव, इति॥

अथ प्रश्नोत्तराभ्यां क्रमेण फलविशेषान्नि(न्दि)दर्शयिषुरादावेकं फलं दर्शयति—

कस्मै कमग्निश्चीयत इत्याहुरग्निवानसानीति वा अग्निश्चीयतेऽग्निवानेव भवति, इति।

कमित्यव्ययं कामायेत्यस्मिन्नर्थे वर्तते। ब्रह्मवादिषु मध्ये केचिदेवं पप्रच्छुः कस्मै कामायायमग्निश्चीयत इति। उक्त एवमुत्तरमाहुः—अग्निवानसानीति शास्त्रीयाग्नियुक्तोऽहं भवानीति कामयित्वाऽयमग्निश्चीयत इति। ततोऽग्निं चित्वोत्तरक्रतुयोग्यशास्त्रीयाग्नियुक्त एव भवति॥

द्वितीयं फलं दर्शयति—

कस्मै कमग्निश्चीयत इत्याहुर्देवा मा वेद-
न्निति वा अग्निश्चीयते विदुरेनं देवाः, इति।

स्वर्गस्था देवाः सर्वे मा मां यजमानं वेदन्नयं यजमानः सम्यगनुष्ठितवानि-
त्येवं विदन्त्विति कामयित्वाऽग्नेश्चितत्वाद्देवा एवं विदन्त्येव ॥

तृतीयं फलं दर्शयति—

कस्मै कमग्निश्चीयत इत्याहुर्गृह्यसानीति
वा अग्निश्चीयते गृह्येव भवति, इति।

शास्त्रीयसर्वकर्मानुष्ठानसमर्थो गृहस्थो भवानीति कामयित्वाऽग्निं चिन्वान-
स्तथैव भवति ॥

चतुर्थं फलं दर्शयति—

कस्मै कमग्निश्चीयत इत्याहुः पशुमानसानीति
वा अग्निश्चीयते पशुमानेव भवति, इति।

पशुसमृद्धेः कामितत्वात्पशुसमृद्धिर्भवत्येव ॥

पञ्चमं फलं दर्शयति—

कस्मै कमग्निश्चीयत इत्याहुः सप्त मा पुरुषा
उप जीवानिति वा अग्निश्चीयते त्रयः
प्राञ्चस्त्रयः प्रत्यञ्च आत्मा सप्तम एतावन्त
एवैनममुष्मिँल्लोक उप जीवन्ति, इति।

प्राञ्चः पूर्वभाविनः पितृपितामहप्रपितामहास्त्रयः पुरुषाः प्रत्यञ्चः पश्चाद्भा-
विनः पुत्रपौत्रप्रपौत्रास्त्रयः पुरुषाः। मध्यवर्ती स्वयं सप्तमः। एते सर्वे पुरुषा
मामुपजीवन्तु। अहमेवैतेषां रक्षको भविष्यामीति कामयमानोऽग्निं चित्वा
स्वर्गे लोके तथैव रक्षको भवति ॥

यदुक्तं सूत्रकारेण—"प्रजापतिस्त्वा सादयतु तया देवतयाऽङ्गिरस्वद्-
ध्रुवा सीदेत्युत्तरवेदिमभिमृश्य" इति, तदिदं विधातुं प्रस्तौति—

प्रजापतिरग्निमचिकीषत तं पृथिव्यब्रवीन्न म-
य्यग्निं चेष्यसेऽति मा धक्ष्यति सा त्वाऽतिद-

ह्यमाना वि धविष्ये स पापीयान्भविष्यसीति सोऽब्रवीत्तथा वा अहं करिष्यामि यथा त्वा नातिधक्ष्यतीति स इमामभ्यमृशत्प्रजापति-स्त्वा सादयतु तया देवतयाऽङ्गिरस्वद्ध्रुवा सीदे-तीमामेवेष्टकां कृत्वोपाधत्तानतिदाहाय, इति।

पुरा कदाचित्प्रजापतिरग्निं चेतुमिच्छां चकार। तं चयनार्थिनं प्रजापतिं पृथिव्येवमब्रवीद्धे प्रजापते ममोपर्यग्निं न चेष्यसेऽग्निचयनं न करिष्यसि मा कुर्वित्यर्थः। कुत इति चेत्तच्छृणु, ममोपरि चीयमानोऽग्निर्मामतिशयेन धक्ष्यति तदानीमत्यन्तं दह्यमाना साऽहमितस्ततः परिलुठन्ती ममोपरि स्थितं त्वामपि कम्पयिष्ये। ततः स त्वं पापिष्ठो दरिद्रो भविष्यसीति। तच्छ्रुत्वा प्रजापति-रिदमब्रवीत्—यथाऽयं चीयमानोऽग्निस्त्वां नातिशयेन धक्ष्यति तथैवाहं करिष्यामीत्युक्त्वा प्रजापतिर्वक्ष्यमाणेन मन्त्रेणेमां भूमिमभितः स्पृष्टवान्। मन्त्रस्य चायमर्थः—हे भूमे त्वामाद्यकारणभूतामाद्यप्रजापतिः सादयतु स्थाप-यतु। अथ प्रजापतिरूपया तया तव रक्षयित्र्या देवतया ध्रुवा सती सीदो-पविशाङ्गिरोभिः स्थापिता यथा ध्रुवा भवति तद्वदिति। अनेन समन्त्रकस्पर्शने-नेमां सर्वां भूमिमिष्टकामेव कृत्वाऽग्निशरीरान्तःपातित्वेनोपाधत्त। नह्यग्निः स्वात्मानमतिदहति॥

अथ विधत्ते—

यत्प्रत्यग्निं चिन्वीत तदभि मृशेत्प्रजापतिस्त्वा सादयतु तया देवतयाऽङ्गिरस्वद्ध्रुवा सीदे-तीमामेवेष्टकां कृत्वोप धत्तेऽनतिदाहाय, इति।

यच्चयनस्थानं प्रतीष्टकाभिरग्निं चेतुमिच्छति तत्स्थानं प्रजापतिरित्यादि-मन्त्रेणाभिमृशेत्। तेनाभितः स्पर्शनेनेमां भूमिं कृत्स्नामपीष्टकां कृत्वोपहितवा-न्भवति। तेन चातिदाहो न भवति॥

अथोख्याग्नेर्धारणं विधत्ते—

प्रजापतिरकामयत प्र जायेयेति स एतमुख्य-

---

१ क. घ. ङ. °ष्ठोऽयमृकापि भ°। २ क. °मे त्वां ममापि कारणभूत आद्यः प्र°।

मपश्यत्तꣳ संवत्सरमबिभस्ततो वै स प्राजायत तस्मात्संवत्सरं भार्यः प्रैव जायते, इति ।

प्रजोत्पादनसाधनत्वेनोख्याग्निमेकस्मिन्संवत्सरे प्रतिदिनमुपस्थानकाले स्वगले शिक्यपाशं बद्ध्वा धारयेत् । तत उत्पादको भवति ॥

अथ त्रीणि पक्षान्तराणि त्र्यहषडहद्वादशाहधारणरूपाणि क्रमेण विधत्ते—

तं वसवोऽब्रुवन्प्र त्वमजनिष्ठा वयं प्र जायामहा इति तं वसुभ्यः प्रायच्छत्तं त्रीण्यहान्यबिभरुस्तेन त्रीणि च शतान्यसृजन्त त्रयस्त्रिꣳशतं च तस्मात्त्र्यहं भार्यः प्रैव जायते तान्रुद्रा अब्रुवन्प्र यूयमजनिढ्वं वयं प्र जायामहा इति तꣳ रुद्रेभ्यः प्रायच्छन्तꣳ षडहान्यबिभरुस्तेन त्रीणि च शतान्यसृजन्त त्रयस्त्रिꣳशतं च तस्मात्षडहं भार्यः प्रैव जायते तानादित्या अब्रुवन्प्र यूयमजनिढ्वं वयं प्र जायामहा इति तमादित्येभ्यः प्रायच्छन्तं द्वादशाहान्यबिभरुस्तेन त्रीणि च शतान्यसृजन्त त्रयस्त्रिꣳशतं च तस्माद्द्वादशाहं भार्यः प्रैव जायते, इति ।

तं प्रजापतिं वसव एवमब्रुवन्—हे प्रजापते त्वं प्रजा उत्पादितवानसि । तथा वयमप्युत्पादयाम इति । ततः प्रजापतिस्तमुख्यमग्निं वसुभ्यः प्रायच्छत् । ते च तमग्निं त्र्यहं धृत्वा त्रयस्त्रिंशदधिकं प्रजानां शतत्रयमसृजन्त । तस्मात्प्रजोत्पत्तये त्र्यहं भार्य इत्येकः पक्षः । एवं रुद्रादित्यवाक्ययोरपि व्याख्येयम् ॥

पक्षत्रयार्थवादान्समूहाकारेण निगमयति—

तेन वै ते सहस्रमसृजन्तोखाꣳ सहस्रतमीम्, इति ।

( चयनतत्फलाभिधानम् )
ते वसुरुद्रादित्या उखा सहस्रतमी यथा भवति तथैकोनं प्रजासहस्रमसृजन्त॥ वेदनं प्रशंसति—

य एवमुख्यꣳ साहस्रं वेद प्र
सहस्रं पशूनाप्नोति ॥ , इति ॥

अत्र चयनविधितद्ब्राह्मणं सावित्राणि जुहोतीत्येतस्मात्प्राग्द्रष्टव्यम्। भूमिस्पर्शनमन्त्रब्राह्मणे त्वग्ने तव श्रवो वय इत्यनुवाके शंयुं बार्हस्पत्यं मेधो नोपानमदित्यतः प्राग्द्रष्टव्ये। उख्यधारणब्राह्मणं तु न ह स्म वै पुराऽग्निरित्यनुवाके द्रष्टव्यम् ॥

अत्र मीमांसा।

द्वितीयाध्यायस्य तृतीयपादे दशमाधिकरणे चिन्तितम्—

आग्निं चिनुत इत्यत्र यागो वा संस्कृतिर्यजिः।
लिङ्गेन यागनामत्वाद्यजिना चानुवादतः ॥
रूढ्या द्रव्यस्य नामैतद्वह्नेराधानवच्चितिः।
संस्कृतिः संस्कृते वह्नावग्निष्टोमो विधीयते ॥

" य एवं विद्वानग्निं चिनुते " इत्येवं विधाय श्रूयते—" अथातोऽग्निमग्निष्टोमेनानुयजति तमुक्थ्येन तं षोडशिना तमतिरात्रेण " इति। अत्राग्निशब्दो यागवाची। स्तोत्रशस्त्रादेः क्रतुलिङ्गस्य श्रूयमाणत्वात्। तच्च लिङ्गमेवं श्रूयते—" अग्नेः स्तोत्रमग्नेः शस्त्रम् " इति, " षडुपसदोऽग्नेश्चित्यस्य भवन्ति " इति च। यदि लिङ्गं प्रापकापेक्षं तर्हि यजिना तदनुवादः प्रापकोऽस्तु। अग्निमग्निष्टोमेनानुयजतीत्यस्मिन्वाक्येऽग्निं यजतीति यजिसामानाधिकरण्यादुपांशुयाजं यजतीतिवद्यागनामत्वम्। अथोच्येत—अनुशब्दस्याग्निशब्देनान्वयाद्यन्वयोऽग्निष्टोमस्येति, तथाऽप्यग्नेः पुरोयजने सत्यग्निष्टोमस्यानुयजनं संभवति। देवदत्तमनुगच्छति यज्ञदत्त इत्यत्र देवदत्ते पुरोगमनदर्शनात्। तस्मादग्निं चिनुत इत्यत्राग्निनामको याग आख्यातेन विधीयते। चिनोतिस्त्विष्टकाभिरग्निं चिनुत इतिवाक्यप्राप्तस्य चयनस्य सोमयागविकृतित्वेन प्राप्तस्य ग्रहसमुदायस्य वाऽनुवाद इति प्राप्ते ब्रूमः—अग्निशब्दो रूढ्या वह्निद्रव्यमाचष्टे। रूढिश्च क्लृप्ततया लिङ्गादिकल्प्याद्यागवाचित्वाद्बलीयसीति न यागनामत्वम्। न चात्र यागरूपमस्ति, द्रव्यदेवतयोरसिद्धेः। अतोऽग्निमादधीतेत्युक्ताधान-

---

१ क. घ. ङ. च. °ष्टोमे वि°।

वदग्निं चिनुत इत्युक्तं चयनमग्निद्रव्यसंस्कारः। न च संस्कृतस्य विनियोगाभावः। अग्निमग्निष्टोमेन यजत इत्यादिवाक्यैरग्निष्टोमादौ विनियोगात्। तस्मात्संस्कारविधिः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये पञ्चमकाण्डे पञ्चमप्रपाठके
द्वितीयोऽनुवाकः ॥ २ ॥

---

( अथ पञ्चमाष्टके पञ्चमप्रपाठके तृतीयोऽनुवाकः । )

---

यजुंषा वा एषा क्रियते यजुंषा पच्यते यजुंषा वि मुंच्यते यदुखा सा वा एषैतर्हिं यातयांम्नी सा न पुनंः प्रयुज्येत्यांहुरग्ने युक्ष्वा हि ये तवं युक्ष्वा हि देवहूतमा३ इत्युखायां जुहोति तेनैवैनां पुनः प्र युंङ्क्ते तेनायातयाम्नी यो वा अग्निं योग आगंते युनक्तिं युङ्क्ते युंञ्जानेष्वग्ने ( १ ) युक्ष्वा हि ये तवं युक्ष्वा हि देवहूतमा३ इत्यांहैष वा अग्नेर्योगस्तेनैवैनं युनक्ति युङ्क्ते युंञ्जानेषुं ब्रह्मवादिनों वदन्ति न्यंङ्ङग्निश्चेतव्या३ उंत्ताना ३ इति वयंसां वा एष प्रंतिमयां चीयते यदग्निर्यन्न्यंञ्चं चिनुयात्पृष्टित एनमाहुंतय ऋच्छेयुर्यदुंत्तानं न पतिंतुं शक्नुयादसुंवर्ग्योऽस्य स्यात्प्राचीनंमुत्तानम्(२) पुरुषशीर्षमुपं दधाति मुखत एवैनमाहुंतय

( उखाहोमादेरभिधानम् )

ऋच्छन्ति नोत्तानं चिनुते सुवर्ग्योऽस्य भवति सौर्या जुहोति चक्षुरेवास्मिन्प्रति दधाति द्विर्जुहोति द्वे हि चक्षुषी समान्या जुहोति समानꣳ हि चक्षुः समृद्ध्यै देवासुराः संयत्ता आसन्ते वामं वसु सं न्यदधत तद्देवा वामभृताऽवृञ्जत तद्वामभृतो वामभृत्त्वं यद्वामभृतमुपदधाति वाममेव तया वसु यजमानो भ्रातृव्यस्य वृङ्क्ते हिरण्यमूर्ध्नी भवति ज्योतिर्वै हिरण्यं ज्योतिर्वामं ज्योतिषैवास्य ज्योतिर्वामं वृङ्क्ते द्वियजुर्भवति प्रतिष्ठित्यै ( ३ )॥

( युञ्जानेष्वग्ने प्राचीनमुत्तानं वामभृतं चतुर्विꣳशतिश्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां पञ्चमाष्टके पञ्चमप्रपाठके तृतीयोऽनुवाकः ॥ ३ ॥

---

( अथ पञ्चमाष्टके पञ्चमप्रपाठके तृतीयोऽनुवाकः । )

---

यजुषा । वै । एषा । क्रियते । यजुषा । पच्यते । यजुषा । वीति । मुच्यते । यत् । उखा । सा । वै । एषा । एतर्हि । यातयाम्नीति यात—याम्नी । सा । न । पुनः । प्रयुज्येति प्र—युज्या । इति । आहुः । अग्ने । युक्ष्व । हि । ये । तव । युक्ष्व ।

हि । देवहूतमानिति देव—हूतमान् । इति । उखायाम् । जुहोति । तेन । एव । एनाम् । पुनः । प्रेति । युङ्क्ते । तेन । अयातयाम्नीत्ययात—याम्नी । यः । वै । अग्निम् । योगे । आगत इत्या—गते । युनक्ति । युङ्क्ते । युञ्जानेषु । अग्ने ( १ ) । युक्ष्व । हि । ये । तव । युक्ष्व । हि । देवहूतमानिति देव—हूतमान् । इति । आह । एषः । वै । अग्नेः । योगः । तेन । एव । एनम् । युनक्ति । युङ्क्ते । युञ्जानेषु । ब्रह्मवादिन इति ब्रह्म—वादिनः । वदन्ति । न्यङ् । अग्निः । चेतव्या३ः । उत्ताना३ इत्युत्—ताना३ः । इति । वयसाम् । वै । एषः । प्रतिमयेति प्रति—मया । चीयते । यत् । अग्निः । यत् । न्यञ्चम् । चिनुयात् । पृष्ठतः । एनम् । आहुतय इत्या—हुतयः । ऋच्छेयुः । यत् । उत्तानमित्युत्—तानम् । न । पतितुम् । शक्नुयात् । असुवर्ग्य इत्यसुवः—ग्यः । अस्य । स्यात् । प्राचीनम् । उत्तानमित्युत्—तानम् ( २ ) । पुरुषशीर्षमिति पुरुष—शीर्षम् । उपेति । दधाति । मुखतः । एव । एनम् । आहुतय इत्या—हुतयः । ऋच्छन्ति । न । उत्तानमित्युत्—तानम् । चिनुते । सुवर्ग्यं इति

सुवः—ग्यः। अस्य। भवति। सौर्या। जुहोति। चक्षुः। एव। अस्मिन्। प्रतीति। दधाति। द्विः। जुहोति। द्वे इति। हि। चक्षुषी इति। समान्या। जुहोति। समानम्। हि। चक्षुः। समृद्ध्या इति सम्—ऋद्ध्यै। देवासुरा इति देव—असुराः। संयत्ता इति सं—यत्ताः। आसन्। ते। वामम्। वसु। सम्। नीति। अदधत। तत्। देवाः। वामभृतेति वाम—भृता। अवृञ्जत। तत्। वामभृत इति वाम—भृतः। वामभृत्त्वमिति वामभृत्—त्वम्। यत्। वामभृतमिति वाम—भृतम्। उपदधातीत्युप—दधाति। वामम्। एव। तया। वसु। यजमानः। भ्रातृव्यस्य। वृङ्क्ते। हिरण्यमूर्ध्नीति हिरण्य—मूर्ध्नी। भवति। ज्योतिः। वै। हिरण्यम्। ज्योतिः। वामम्। ज्योतिषा। एव। अस्य। ज्योतिः। वामम्। वृङ्क्ते। द्वियजुरिति द्वि—यजुः। भवति। प्रतिष्ठित्या इति प्रति—स्थित्यै (३)॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे पञ्चमाष्टके पञ्चमप्रपाठके तृतीयोऽनुवाकः ॥ ३ ॥

---

( अथ पञ्चमकाण्डे पञ्चमप्रपाठके तृतीयोऽनुवाकः । )

———

चयनस्य विधिस्तस्य फलमुख्यस्य धारणम् ।
अनुवाके द्वितीये हि तदेतत्त्रयमीरितम् ॥

अथ तृतीयानुवाक उखाहोमादिकमभिधीयते ।

तमेतं होमं विधत्ते—

यजुषा वा एषा क्रियते यजुषा पच्यते यजुषा वि मुच्यते यदुखा सा वा एषैतर्हि यातयाम्नी सा न पुनः प्रयुज्येत्याहुरग्ने युक्ष्वा हि ये तव युक्ष्वा हि देवहूतमाः इत्युखायां जुहोति तेनैवैनां पुनः प्र युङ्क्ते तेनायातयाम्नी, इति ।

एषोखा वसवस्त्वा कृण्वन्त्वित्यादिना यजुषा क्रियते । धिषणास्त्वेत्यादिना यजुषा सेयमुखा पच्यते । मातेव पुत्रमित्यादिना यजुषा शिक्यान्मुच्यते । येयमुखा बहुधा यजुर्भिरनुष्ठिता सेयमुखैतस्मिन्काले गतसारा संपन्ना बहुधा प्रयुक्तत्वात् । अतः सा गतसारोखा पुनः प्रयोक्तुं न योग्येत्येवमभिज्ञा आहुः । अतः पुनः ससारत्वसंपादनायाग्ने युक्ष्वा हीति मन्त्रद्वयेनोखायां जुहुयात् । तेन होमेनोखां पुनः प्रयोगयोग्यां करोति । होमेनैव ससारत्वस्य संपादितत्वात् । अग्ने युक्ष्वा हीत्यादिके ऋचौ तु ध्रुवाऽसीत्यनुवाके समाम्नाते व्याख्याते च ॥

मन्त्रगतस्य युक्ष्वेतिशब्दस्य तात्पर्यं दर्शयति—

यो वा अग्निं योग आगते युनक्ति युङ्क्ते युञ्जानेष्वग्ने युक्ष्वा हि ये तव युक्ष्वा हि देवहूतमाः इत्याहैष वा अग्नेर्योगस्तेनैवैनं युनक्ति युङ्क्ते युञ्जानेषु, इति ।

यो यजमानो योगकाले समागते सत्यप्रमत्तोऽग्निं युनक्ति स यजमानोऽग्नियोगानुष्ठातृषु यजमानेषु मध्ये स्वयमप्यग्नियोगानुष्ठातेतिव्यपदेशार्हो भवति । स च योगो मन्त्रे युक्ष्वपदोच्चारणेन सिध्यति । हेऽग्ने त्वं युक्तो भवेत्येवं तस्य पदस्य वाच्यार्थत्वात् । अतस्तदुच्चारणेनैनमग्निं युनक्ति । युञ्जानेषु यजमानेषु

च परिगण्यते। एतच्च होमब्राह्मणम्—"एषां वा एतल्लोकानाम्" इत्यनुवाके "पूर्णा तस्योप दध्यादनुपदस्यदेवान्नमत्ति" इति वाक्यादूर्ध्वं द्रष्टव्यम् ॥

अथ पुरुषशीर्षोपधानं विधत्ते—

ब्रह्मवादिनो वदन्ति न्यङ्ङग्निश्चेतव्या ३ उत्ताना ३ इति वयसां वा एष प्रतिमया चीयते यदग्निर्यन्न्यञ्चं चिनुयात्पृष्टित एनमाहुतय ऋच्छेयुर्यदुत्तानं न पतितुꣳ शक्नुयादसुवर्ग्योऽस्य स्यात्प्राचीनमुत्तानं पुरुषशीर्षमुप दधाति मुखत एवैनमाहुतय ऋच्छन्ति नोत्तानं चिनुते सुवर्ग्योऽस्य भवति, इति।

न्यङ्ङधोमुख उत्तान ऊर्ध्वमुखो योऽयमग्निः स एष पक्षिणामाकारेण चीयते। तथा सत्यधोमुखत्वेन चितस्याग्नेः पृष्ठभागे सर्वा आहुतय एनमग्निं प्राप्नुयुः। ऊर्ध्वमुखत्वे स पक्षाभ्यामाकाशे गन्तुं न शक्नुयात्। गमनाभावे च स्वर्गाय हितो न भवति। अत्र दोषद्वयपरिहाराय पुरुषशीर्षमुपदध्यात्। तच्च शिरः प्राचीनं केशभागं प्राच्यां दिशि च्छिन्नगलभागं प्रतीच्यां दिशि कृत्वोर्ध्वमुखं स्थापयेत्। एवं सति तत्र हूयमाना आहुतयो मुखप्रदेश एवाग्निं प्राप्नुवन्ति, न तु पृष्ठतः। पक्ष्याकारस्योर्ध्वमुखत्वाभावेनाऽऽकाशे गन्तुं शक्यत्वात्स्वर्गाय हित एव भवति। अस्य चोपधानमन्त्रस्त्वादित्यं गर्भमित्यादिकः। उपधानविधिस्तु मध्ये पुरुषशीर्षमुपदधातीति। स चैषां वा एतल्लोकानामित्यनुवाके समाम्नातः। अत्र तूक्तं विधिमनूद्य प्राचीनोत्तानत्वगुणौ विधीयेते ॥

यदुक्तं सूत्रकारेण—"चित्रं देवानामित्यर्धर्चाभ्यामक्षिकटयोर्हुत्वा" इति, तदिदं विधत्ते—

सौर्या जुहोति चक्षुरेवास्मिन्प्रति दधाति, इति।

सौरी चित्रं देवानामित्यादिका। सा चोदु त्यं जातवेदसमित्यनुवाके समाम्नातत्वात्तत्रैव व्याख्याता। सूर्यस्य चक्षुरभिमानिदेवत्वात्तन्मन्त्रहोमेना-

---

१ ख. च °ल्गे ' ए°।

स्मिन्पुरुषशीर्षे चक्षुरिन्द्रियं संपादयति। चक्षुरभिमानित्वं चैतरेयिणः समामनन्ति—" आदित्यश्चक्षुर्भूत्वाऽक्षिणी प्राविशत् " इति ॥

अर्धर्चद्वयं विभज्य विनियुङ्क्ते—

द्विर्जुहोति द्वे हि चक्षुषी , इति।

इन्द्रियस्यैकत्वेऽपि गोलकभेदाद्द्वित्वम् ॥

ऋग्भेदशङ्कां वारयितुमेकत्वं विधत्ते—

समान्या जुहोति समानꣳ हि चक्षुः समृद्ध्यै, इति।

गोलकभेदेऽपीन्द्रियस्यैकत्वादृगेकत्वम्। इदं होमब्राह्मणमपि पुरुषशीर्षविधिसमीपे द्रष्टव्यम् ॥

अथ वामभृदाख्याया इष्टकाया उपधानं विधत्ते—

देवासुराः संयत्ता आसन्ते वामं वसु सं न्यदधत तद्देवा वामभृताऽवृञ्जत तद्वामभृतो वामभृत्त्वं यद्वामभृतमुपदधाति वाममेव तया वसु यजमानो भ्रातृव्यस्य वृङ्क्ते , इति।

यदा देवाश्चासुराश्च युद्धायोद्यतास्तदानीं तदुभयेऽपि वननीयं वसु स्वं धनमेकैकत्र गूढत्वेन सम्यक्स्थापितवन्तः। तत्रासुरसंबन्धि यद्धनं तदेतद्देवा वामभृदाख्येष्टकया विनाशितवन्तः। अतो वामं हरन्ति नाशयन्ती(त्यनये)ति व्युत्पत्त्या हकारस्थाने भकारादेशे सति वामभृदिति नाम संपन्नम्। अतो यजमानोऽप्येतदुपधानेन भ्रातृव्यस्य धनं विनाशयति ॥

यदुक्तं सूत्रकारेण—" प्रबाहुगिष्टकायां हिरण्यशकलावध्यू(ध्यु)ह्य यास्ते अग्ने सूर्ये रुच इति द्वाभ्यां वामभृतम् " इति, तत्र हिरण्यशकलौ विधत्ते—

हिरण्यमूर्ध्नी भवति ज्योतिर्वै हिरण्यं ज्योतिर्वामं ज्योतिषैवास्य ज्योतिर्वामं वृङ्क्ते , इति।

हिरण्यशकलद्वयं मूर्ध्न्युपरिभागे यस्या इष्टकायाः सा हिरण्यमूर्ध्नी। हिरण्यं प्रकाशरूपत्वाज्ज्योतिः। वाममपि मणिमुक्तादिकं तथा ज्योतिः ॥

यास्ते अग्ने सूर्ये रुच इत्यादिमन्त्रद्वयं तत्र विनियुङ्क्ते—

द्वियजुर्भवति प्रतिष्ठित्यै ॥ , इति ॥

( रेतःसिगाद्यभिधानम् )

द्वे यजुषी मन्त्रौ यस्या वामभृतः सा द्वियजुः । इदं च वामभृद्ब्राह्मणं स्वयमातृण्णामुपदधातीत्यनुवाके दूर्वेष्टकाब्राह्मणादूर्ध्वं देवलक्ष्मं वै त्र्यालिखितेत्यतः पूर्वं द्रष्टव्यम् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये पञ्चमकाण्डे पञ्चमप्रपाठके तृतीयोऽनुवाकः ॥ ३ ॥

---

( अथ पञ्चमाष्टके पञ्चमप्रपाठके चतुर्थोऽनुवाकः । )

---

आपो वरुणस्य पत्नय आसन्ता अग्निरभ्यध्यायत्ताः सम्भवत्तस्य रेतः पराऽपतत्तदियमभवद्यद्द्वितीयं पराऽपतत्तदसावभवदियं वै विराडसौ स्वराड्यद्विराजावुपदधातीमे एवोप धत्ते यद्वा असौ रेतः सिञ्चति तदस्यां प्रति तिष्ठति तत्प्र जायते ता ओषधयः ( १ ) वीरुधो भवन्ति ता अग्निरत्ति य एवं वेद प्रैव जायतेऽन्नादो भवति यो रेतस्वी स्यात्प्रथमायां तस्य चित्यामुभे उप दध्यादिमे एवास्मै समीची रेतः सिञ्चतो यः सिक्तरेताः स्यात्प्रथमायां तस्य चित्यामन्यामुप दध्यादुत्तमायामन्यां रेत एवास्य सिक्तमाभ्यामुभयतः परि गृह्णाति संवत्सरं न कम् ( २ ) चन प्रत्यवरोहेन्न हीमे कं चन प्रत्यवरोहत-

स्तदेनयोर्व्रतं यो वा अपशीर्षाणमग्निं चिनु-
तेऽपशीर्षाऽमुष्मिँल्लोके भवति यः सशीर्षाणं
चिनुते सशीर्षाऽमुष्मिँल्लोके भवति चित्तिं
जुहोमि मनसा घृतेन यथा देवा इहाऽऽगमं-
न्वीतिहोत्रा ऋतावृधः समुद्रस्य वयुनस्य
पत्मञ्जुहोमि विश्वकर्मणे विश्वाऽहाऽमर्त्यꣳ
हविरिति स्वयमातृण्णामुपधाय जुहोति ( ३ )
एतद्वा अग्नेः शिरः सशीर्षाणमेवाग्निं चिनुते
सशीर्षाऽमुष्मिँल्लोके भवति य एवं वेद सुव-
र्गाय वा एष लोकाय चीयते यदग्निस्तस्य
यदयथापूर्वं क्रियतेऽसुवर्ग्यमस्य तत्सुवर्ग्योऽ-
ग्निश्चितिमुपधायाभि मृशेच्चित्तिमचित्तिं चिन-
वद्वि विद्वान्पृष्ठेव वीता वृजिना च मर्तान्राये
च नः स्वपत्याय देव दितिं च रास्वादिति-
मुरुष्येति यथापूर्वमेवैनामुप धत्ते प्राञ्चमेनं
चिनुते सुवर्ग्योऽस्य भवति ( ४ ) ॥

( ओषधयः कं जुहोति स्वपत्यायाष्टादश च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां पञ्चमाष्टके
पञ्चमप्रपाठके चतुर्थोऽनुवाकः ॥ ४ ॥

( रेतःसिगाद्यभिधानम् )

( अथ पञ्चमाष्टके पञ्चमप्रपाठके चतुर्थोऽनुवाकः । )

---

आपः । वरुणस्य । पत्नयः । आसन् । ताः । अग्निः । अभीति । अध्यायत् । ताः । समिति । अभवत् । तस्य । रेतः । परेति । अपतत् । तत् । इयम् । अभवत् । यत् । द्वितीयम् । परापतदिति परा—अपतत् । तत् । असौ । अभवत् । इयम् । वै । विराडिति वि—राट् । असौ । स्वराडिति स्व—राट् । यत् । विराजाविति वि—राजौ । उपदधातीत्युप—दधाति । इमे इति । एव । उपेति । धत्ते । यत् । वै । असौ । रेतः । सिञ्चति । तत् । अस्याम् । प्रतीति । तिष्ठति । तत् । प्रेति । जायते । ताः । ओषधयः (१)। वीरुधः । भवन्ति । ताः । अग्निः । अत्ति । यः । एवम् । वेद । प्रेति । एव । जायते । अन्नाद इत्यन्न—अदः । भवति । यः । रेतस्वी । स्यात् । प्रथमायाम् । तस्य । चित्याम् । उभे इति । उपेति । दध्यात् । इमे इति । एव । अस्मै । समीची इति । रेतः । सिञ्चतः । यः । सिक्तरेता इति सिक्त—रेताः । स्यात् । प्रथमायाम् । तस्य । चित्याम् । अन्याम् । उपेति । दध्यात् । उत्तमायामित्युत्—तमायाम् । अन्याम् । रेतः । एव । अस्य ।

सिक्तम् । आभ्याम् । उभयतः । परीति । गृह्णाति । संवत्सरमिति सं—वत्सरम् । न । कम् ( २ )। चन । प्रत्यवरोहेदिति प्रति—अवरोहेत् । न । हि । इमे इति । कम् । चन । प्रत्यवरोहत इति प्रति—अवरोहतः । तत् । एनयोः । व्रतम् । यः । वै । अपशीर्षाणमित्यप—शीर्षाणम् । अग्निम् । चिनुते । अपशीर्षेत्यप—शीर्षा । अमुष्मिन् । लोके । भवति । यः । सशीर्षाणमिति स—शीर्षाणम् । चिनुते । सशीर्षेति स—शीर्षा । अमुष्मिन् । लोके । भवति । चित्तिम् । जुहोमि । मनसा । घृतेन । यथा । देवाः । इह । आगमन्नित्या—गमन् । वीतिहोत्रा इति वीति—होत्राः । ऋतावृध इत्यृत—वृधः । समुद्रस्य । वयुनस्य । पत्मन् । जुहोमि । विश्वकर्मण इति विश्व—कर्मणे । विश्वा । अहा । अमर्त्यम् । हविः । इति । स्वयमातृण्णामिति स्वयम्—आतृण्णाम् । उपधायेत्युप—धाय । जुहोति ( ३ )। एतत् । वै । अग्नेः । शिरः । सशीर्षाणमिति स—शीर्षाणम् । एव । अग्निम् । चिनुते । सशीर्षेति स—शीर्षा । अमुष्मिन् । लोके । भवति । यः । एवम् । वेद । सुवर्गायेति सुवः—गाय । वै । एषः । लोकाय । चीयते । यत् ।

अग्निः । तस्यं । यत् । अयंथापूर्वमित्ययंथा—पूर्वम् । क्रियतें । असुवर्ग्यमित्यसुवः—ग्यम् । अस्य । तत् । सुवर्ग्यं इतिं सुवः—ग्र्यः । अग्निः । चितिम् । उप-धायेत्युप—धायं । अभीतिं । मृशेत् । चित्तिम् । अचित्तिम् । चिनवत् । वीतिं । विद्वान् । पृष्ठा । इव । वीता । वृजिना । च । मर्तान् । राये । च । नः । स्वपत्यायेतिं सु—अपत्याय । देव । दितिम् । च । रास्व । अदितिम् । उरुष्य । इतिं । यथा-पूर्वमितिं यथा—पूर्वम् । एव । एनाम् । उपेतिं । धत्ते । प्राञ्चम् । एनम् । चिनुते । सुवर्ग्यं इतिं सुवः—ग्र्यः । अस्य । भवति ( ४ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे पञ्चमाष्टके पञ्चमप्रपाठके चतुर्थोऽनुवाकः ॥ ४ ॥

---

( अथ पञ्चमकाण्डे पञ्चमप्रपाठके चतुर्थोऽनुवाकः । )

---

उखाहुतिः पुंशिरश्च वामभृच्च तृतीयके ॥

अथ चतुर्थे रेतःसिगाद्या उच्यन्ते ।

यदुक्तं सूत्रकारेण—" विराड्ज्योतिरिति तिस्रो रेतःसिचस्तासां द्वे प्रथमायां चित्यां यून उपदध्यात्सर्वा मध्यमायां विवयस एकां प्रथमायामेकामुत्तमायां स्थविरस्य " इति, तत्र द्वयोरुपधानं विधत्ते—

आपो वरुणस्य पत्नय आसन्ता अग्निरभ्यध्यायत्ताः समभवत्तस्य रेतः पराऽपतत्तदियमभवद्यद्द्वितीयं परापतत्तद-

सावभवदियं वै विराडसौ स्वराड्यद्वि-
राजावुपदधातीमे एवोप धत्ते , इति ।

वरुणपत्न्यो या अब्देवतास्ताः कामुकोऽग्निरभ्यध्यायद्ध्यात्वा समभवत् । तत्र मानसेन संभवेन स्खलितं रेतोऽधोऽपतत् । तच्च रेत इयं पृथिव्यभवत् । द्वितीयवारं पतितं रेतोऽसौ द्युलोकोऽभवत् । तत्र येयं पृथिवी सा विविधा प्राण्याधारत्वेन राजत इति विराडित्युच्यते । या त्वसौ द्यौः सा स्वातन्त्र्येण राजत इति स्वराट् । एवं सत्यत्र द्वे विराजावुपदध्यात् । विराट्शब्दोपेताभ्यां मन्त्राभ्यामुपधेये विराजौ । मन्त्रद्वयं च विराड्ज्योतिरधारयत् । सम्राड्ज्योतिरधारयदित्याम्नातं व्याख्यातं च । अनेन विराड्द्वयोपधानेनेमे द्वे द्युभूमी एवायमुपधत्ते ॥

तदेतद्विराडुपधानं प्रकारान्तरेण प्रशंसति—

यद्वा असौ रेतः सिञ्चति तदस्यां
प्रति तिष्ठति तत्प्र जायते ता ओषधयो
वीरुधो भवन्ति ता अग्निरत्ति , इति ।

असौ द्यौर्यदेव रेतो वृष्टिरूपं सिञ्चति तदस्यां भूमौ प्रतिष्ठितं सन्नानाकारेणोत्पद्यते । ताश्चोत्पन्ना ओषधयो व्रीहियवाद्या वीरुधो नागवल्ल्यादयश्च भवन्ति । ताश्च जाठराग्निरत्ति । एवंविधे द्युभूमिरूपे विराजाविति तयोः प्रशंसा ॥

वेदनं प्रशंसति—

य एवं वेद प्रैव जायतेऽन्नादो भवति , इति ॥

अथाधिकारिभेदेन प्रकारविशेषं विधत्ते—

यो रेतस्वी स्यात्प्रथमायां तस्य चित्यामुभे
उप दध्यादिमे एवास्मै समीची रेतः सिञ्च-
तो यः सिक्तरेताः स्यात्प्रथमायां तस्य
चित्यामन्यामुप दध्यादुत्तमायामन्याꣳ रेत
एवास्य सिक्तमाभ्यामुभयतः परि गृह्णाति, इति ।

रेतस्वी युवा तस्य प्रथमायामेव चिता उभयोरुपधाने सति ते उभे अपि द्युभूमिरूपे अनुकूले भूत्वा यजमानार्थं रेतः सिञ्चतः । सिक्तरेताः स्थविरस्तस्य प्रथमोत्तमचित्योः क्रमेण द्वयोरुपधाने सति स्वकीयं सिक्तं रेत आभ्या-

( रेतःसिगाद्यभिधानम् )

इष्टकाभ्यामुभयतः परिगृहीतं भवति। एतद्विराड्ब्राह्मणं पूर्वोक्तनामभृद्ब्राह्मणादनन्तरमेव द्रष्टव्यम् ॥

अथाग्निचितः कंचिन्नियमं विधत्ते—

संवत्सरं न कं चन प्रत्यवरोहेन्न हीमे
कं चन प्रत्यवरोहतस्तदेनयोर्व्रतम्, इति।

अग्निं चित्वा संवत्सरपूर्तिपर्यन्तं वयोवृद्धेषु विद्यावृद्धेषु च समागतेष्वपि कमपि पुरुषं प्रत्यभ्युत्थानं न कुर्यात्। इमे द्युभूमिरूपे विराजात्मिष्टके कमप्युत्कृष्टं पुरुषं प्रति नाभ्युत्थानं कुरुतः। तदनभ्युत्थानमेनयोरिष्टकयोर्व्रतं नियतम्। अतस्तयोरुपधाताऽपि नाभ्युत्तिष्ठति। यद्यप्ययं नियमः कृत्स्नब्राह्मणान्ते वक्तव्यस्तथाऽपि विराड्द्वारेण स्तोतुमिहाऽऽम्नातः ॥

अथ कंचिद्धोमं विधातुं प्रस्तौति—

यो वा अपशीर्षाणमग्निं चिनुतेऽपशी-
र्षाऽमुष्मिँल्लोके भवति यः सशीर्षाणं
चिनुते सशीर्षाऽमुष्मिँल्लोके भवति, इति।

अग्नेः शिरोराहित्यसाहित्याभ्यां यजमानोऽपि सुवर्गे तथा भवति ॥

विधित्सितस्य होमस्य मन्त्रमुत्पादयति—

चित्तिं जुहोमि मनसा घृतेन यथा
देवा इहाऽऽगमन्वीतिहोत्रा ऋतावृधः
समुद्रस्य वयुनस्य पत्मञ्जुहोमि विश्व-
कर्मणे विश्वाऽहाऽमर्त्यꣳ हविः, इति।

यथा देवा इहाऽऽगमन्येन प्रकारेण हविर्भाजो देवा अस्मिन्कर्मण्यागच्छन्ति, तथाऽहं मनसा मनोगतया भक्त्या घृतेन द्रव्येण चित्तिं जुहोमि देवानां चित्तमुपाददे प्रसादयामीत्यर्थः। कीदृशा देवाः, वीतिहोत्राः कमनीयहविषः, ऋतावृधो यज्ञस्य वर्धयितारः। तत ऊर्ध्वं विश्वकर्मणे प्रजापतये विश्वाऽहा सर्वेष्वप्यहःसु अमर्त्यं विनाशरहितं स्वाहुतं हविर्जुहोमि। होमस्य स्थानमुच्यते—वयुनस्य कमनीयस्य समुद्रस्य समुद्रवदुत्कृष्टस्य स्वयमातृण्णास्वरूपस्य पत्मन्पतन आहुतियोग्य उपरिभाग इत्यर्थः ॥

उत्पादितं मन्त्रं विनियुङ्क्ते—

इति स्वयमातृण्णामुपधाय जुहोत्येतद्वा अग्नेः शिरः सशीर्षाणमेवाग्निं चिनुते, इति ।

चित्तिं जुहोमीति यो मन्त्र उत्पादित इत्यनेन मन्त्रेण स्वयमातृण्णोपधानादनन्तरं जुहुयात् । एतदेवाऽऽहुतिस्वरूपमग्नेः शिरस्थानीयम् । अतः शिरःसहितमेवाग्निं चितवान्भवति ॥

वेदनं प्रशंसति—

सशीर्षाऽमुष्मिँल्लोके भवति य एवं वेद, इति ।

एतद्धोमब्राह्मणं स्वयमातृण्णामित्यनुवाके द्रष्टव्यम् ॥

अथाभिमर्शनं विधातुं प्रस्तौति—

सुवर्गाय वा एष लोकाय चीयते यदग्निस्तस्य यदयथापूर्वं क्रियतेऽसुवर्ग्यमस्य तत्सुवर्ग्योऽग्निः, इति ।

योऽयमग्निरस्ति स एष स्वर्गलोकार्थं चीयते । अतस्तस्याग्नेर्यदङ्गमयथापूर्वं क्रमोल्लङ्घनेन क्रियते तदङ्गमसुवर्ग्यं स्वर्गाय हितं न भवति । अग्निश्च स्वर्गाय हितः । तस्मात्क्रममनुल्लङ्घ्यैव तदङ्गमनुष्ठेयम् ॥

अथ यदर्थं प्रस्तावः कृतस्तद्विधत्ते—

चितिमुपधायाभि मृशेत्, इति ।

उपधानादूर्ध्वं तामुपहितां चितिं हस्तेन स्पृशेत् ॥

तत्र मन्त्रमुत्पादयति—

चित्तिमचित्तिं चिनवद्वि विद्वान्पृष्ठेव वीता वृजिना च मर्तान्राये च नः स्वपत्याय देव दितिं च रास्वादितिमुरुष्येति, इति ।

अयमग्निश्चित्तिमचित्तिमस्मदीयां मानसीं भक्तिमभक्तिं च विचिनवद्विविच्य निश्चिनोतु । कीदृशोऽग्निः, पृष्ठेव वीता वृजिना च विद्वान् , पृष्ठोपलक्षितसर्वावयवसदृशानि कर्माङ्गानि(णि) वीता कान्तानि वृजिना च स्खलितानि चेत्युभयं जानानः । तथा मर्तान्मनुष्यरूपान्प्रमादबहुलानस्मानपि विद्वान् । हे देव नोऽस्माकं राये धनाय स्वपत्याय च शोभनपुत्रार्थमपि दितिं च रास्व

यद्देयं तदपि देहि । अदितिमुरुष्य यदपीतः परं न देयं किंतु पूर्वमेव दत्तं तदपि बहुलं कर्तुमिच्छ ॥

अनेन मन्त्रेणानुष्ठितमभिमर्शनं प्रशंसति—

यथापूर्वमेवैनामुप धत्ते प्राञ्चमेनं चिनुते सुवर्ग्योऽस्य भवति ॥, इति ॥

अत्र भक्त्यभक्त्योः स्खलनास्खलनयोर्विवेककारिणा वह्निना वैकल्यस्य समाहितत्वात्क्रममनुल्लङ्घ्यैवैनां चितिमुपधत्ते । अग्निं च प्राङ्मुखं चिनुते । स चाग्निरस्य यजमानस्य स्वर्गाय हितो भवति । तदिदं ब्राह्मणं पशुर्वा एष यदग्निरित्यनुवाके प्रथमचितिसमाप्तौ द्रष्टव्यम् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये पञ्चमकाण्डे पञ्चमप्रपाठके चतुर्थोऽनुवाकः ॥ ४ ॥




---

( अथ पञ्चमाष्टके पञ्चमप्रपाठके पञ्चमोऽनुवाकः । )

---

विश्वकर्मा दिशां पतिः स नः पशून्पातु सोऽस्मान्पातु तस्मै नमः प्रजापती रुद्रो वरुणोऽग्निर्दिशां पतिः स नः पशून्पातु सोऽस्मान्पातु तस्मै नम एता वै देवता एतेषां पशूनामधिपतयस्ताभ्यो वा एष आ वृंश्च्यते यः पशुशीर्षाण्युपदधाति हिरण्येष्टका उप दधात्येताभ्य एव देवताभ्यो नमस्करोति ब्रह्मवादिनः ( १ ) वदन्त्यग्नौ ग्राम्यान्पशून्प्र दधाति शुचाऽऽरण्यानर्पयति किं तत उच्छिꣳषतीति यद्धिरण्येष्टका उपद-

धात्यमृतं वै हिरण्यममृतेनैव ग्राम्येभ्यः पशुभ्यो भेषजं करोति नैनान्हिनस्ति प्राणो वै प्रथमा स्वयमातृण्णा व्यानो द्वितीयाऽपानस्तृतीयाऽनु प्राण्यात्प्रथमाꣳ स्वयमातृण्णामुपधाय प्राणेनैव प्राणꣳ समर्धयति व्यन्याद् ( २ ) द्वितीयामुपधाय व्यानेनैव व्यानꣳ समर्धयत्यपान्यात्तृतीयामुपधायापानेनैवापानꣳ समर्धयत्यथो प्राणैरेवैनꣳ समिन्धे भूर्भुवः सुवरिति स्वयमातृण्णा उप दधातीमे वै लोकाः स्वयमातृण्णा एताभिः खलु वै व्याहृतीभिः प्रजापतिः प्राजायत यदेताभिर्व्याहृतीभिः स्वयमातृण्णा उपदधातीमानेव लोकानुपधायैषु ( ३ ) लोकेष्वधि प्र जायते प्राणाय व्यानायापानाय वाचे त्वा चक्षुषे त्वा तया देवतयाऽङ्गिरस्वद्ध्रुवा सीदाग्निना वै देवाः सुवर्गं लोकमजिगाꣳसन्तेन पतितुं नाशक्नुवन्त एताश्चतस्रः स्वयमातृण्णा अपश्यन्ता दिक्षूपादधत तेन सर्वतश्चक्षुषा सुवर्गं लोकमायन्यच्चतस्रः स्वयमातृण्णा दिक्षूपदधाति सर्वतश्चक्षुषैव तदग्निना यजमानः सुवर्गं लोकमेति ( ४ ) ॥

( हिरण्येष्टकादेरभिधानम् )

( ब्रह्मवादिनो व्यन्यादेषु यजमानस्त्रीणि च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां पञ्चमाष्टके पञ्चमप्रपाठके पञ्चमोऽनुवाकः ॥ ५ ॥

---

( अथ पञ्चमाष्टके पञ्चमप्रपाठके पञ्चमोऽनुवाकः । )

---

विश्वकर्मेति विश्व—कर्मा । दिशाम् । पतिः । सः । नः । पशून् । पातु । सः । अस्मान् । पातु । तस्मै । नमः । प्रजापतिरिति प्रजा—पतिः । रुद्रः । वरुणः । अग्निः । दिशाम् । पतिः । सः । नः । पशून् । पातु । सः । अस्मान् । पातु । तस्मै । नमः । एताः । वै । देवताः । एतेषाम् । पशूनाम् । अधिपतय इत्यधि—पतयः । ताभ्यः । वै । एषः । एति । वृश्च्यते । यः । पशुशीर्षाणीति पशु—शीर्षाणि । उपदधातीत्युप—दधाति । हिरण्येष्टका इति हिरण्य—इष्टकाः । उपेति । दधाति । एताभ्यः । एव । देवताभ्यः । नमः । करोति । ब्रह्मवादिन इति ब्रह्म—वादिनः ( १ ) । वदन्ति । अग्नौ । ग्राम्यान् । पशून् । प्रेति । दधाति । शुचा । आरण्यान् । अर्पयति । किम् । ततः । उदिति । शिंषति । इति । यत् । हिरण्येष्टका इति हिरण्य—इष्टकाः । उप-दधातीत्युप—दधाति । अमृतम् । वै । हिरण्यम् ।

अमृतेन । एव । ग्राम्येभ्यः । पशुभ्य इति पशु—भ्यः । भेषजम् । करोति । न । एनान् । हिनस्ति । प्राण इति प्र—अनः । वै । प्रथमा । स्वयमातृण्णेति स्वयम्—आतृण्णा । व्यान इति वि—अनः । द्वितीया । अपान इत्यप—अनः । तृतीया । अनु । प्रेति । अन्यात् । प्रथमाम् । स्वयमातृण्णामिति स्वयम्—आतृण्णाम् । उपधायेत्युप—धाय । प्राणेनेति प्र—अनेन । एव । प्राणमिति प्र—अनम् । समिति । अर्धयति । वीति । अन्यात् ( २ ) । द्वितीयाम् । उपधायेत्युप—धाय । व्यानेनेति वि—अनेन । एव । व्यानमिति वि—अनम् । समिति । अर्धयति । अपेति । अन्यात् । तृतीयाम् । उपधायेत्युप—धाय । अपानेनेत्यप—अनेन । एव । अपानमित्यप—अनम् । समिति । अर्धयति । अथो इति । प्राणैरिति प्र—अनैः । एव । एनम् । समिति । इन्धे । भूः । भुवः । सुवः । इति । स्वयमातृण्णा इति स्वयम्—आतृण्णाः । उपेति । दधाति । इमे । वै । लोकाः । स्वयमातृण्णा इति स्वयम्—आतृण्णाः । एताभिः । खलु । वै । व्याहृतीभिरिति व्याहृति—भिः । प्रजापतिरिति प्रजा—पतिः । प्रेति । अजायत । यत् । एताभिः । व्याहृ-

तीभिरिति व्याहृति—भिः । स्वयमातृण्णा इति स्वयम्—आतृण्णाः । उपदधातीत्युप—दधाति । इमान् । एव । लोकान् । उपधायेत्युप—धाय । एषु ( ३ ) । लोकेषु । अधि । प्रेति । जायते । प्राणायेति प्र—अनाय । व्यानायेति वि—अनाय । अपानायेत्यप—अनाय । वाचे । त्वा । चक्षुषे । त्वा । तया । देवतया । अङ्गिरस्वत् । ध्रुवा । सीद । अग्निना । वै । देवाः । सुवर्गमिति सुवः—गम् । लोकम् । अजिगांसन् । तेन । पतितुम् । न । अशक्नुवन् । ते । एताः । चतस्रः । स्वयमातृण्णा इति स्वयम्—आतृण्णाः । अपश्यन् । ताः । दिक्षु । उपेति । अदधत । तेन । सर्वतश्चक्षुषेति सर्वतः—चक्षुषा । सुवर्गमिति सुवः—गम् । लोकम् । आयन् । यत् । चतस्रः । स्वयमातृण्णा इति स्वयम्—आतृण्णाः । दिक्षु । उपदधातीत्युप—दधाति । सर्वतश्चक्षुषेति सर्वतः—चक्षुषा । एव । तत् । अग्निना । यजमानः । सुवर्गमिति सुवः—गम् । लोकम् । एति ( ४ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे पञ्चमाष्टके पञ्चमप्रपाठके पञ्चमोऽनुवाकः ॥ ५ ॥

---

( अथ पञ्चमकाण्डे पञ्चमप्रपाठके पञ्चमोऽनुवाकः । )

---

रेतःसिग्घोमसंस्पर्शाश्चतुर्थे समुदीरिताः ।

अथ पञ्चमे हिरण्येष्टकाद्या उच्यन्ते ।

यदुक्तं सूत्रकारेण–" विश्वकर्मा दिशां पतिरिति पञ्च हिरण्येष्टकाः प्रतिदिशमेकां मध्ये " इति, तत्र मन्त्रानुत्पादयति—

विश्वकर्मा दिशां पतिः स नः पशून्पातु
सोऽस्मान्पातु तस्मै नमः प्रजापती रुद्रो
वरुणोऽग्निर्दिशां पतिः स नः पशून्पातु
सोऽस्मान्पातु तस्मै नमः, इति ।

योऽयं विश्वकर्मा दिशां पालकः सोऽस्मदीयान्पशूनस्मांश्च रक्षतु । तस्मै विश्वकर्मणे नमः । प्रजापतिरित्यादिभिश्चतुर्भिः पदैश्चत्वारो मन्त्रा उत्पन्नाः । सर्वत्रानुषङ्गाय दिशां पतिरिति पुनः पाठः ॥

एतन्मन्त्रसाध्यमुपधानं विधत्ते—

एता वै देवता एतेषां पशूनामधिपतय-
स्ताभ्यो वा एष आ वृश्च्यते यः पशुशी-
र्षाण्युपदधाति हिरण्येष्टका उप दधात्ये-
ताभ्य एव देवताभ्यो नमस्करोति, इति ।

पुरुषाश्वर्षभवृष्णिबस्तानामेतेषां पशूनां विश्वकर्मादयः स्वामिभूता देवताः । एवं सति पशुशीर्षोपधाने ताभ्यो देवताभ्य आवृश्च्यते तासां देवतानां द्रोही भवतीत्यर्थः । अतस्तत्परिहाराय हिरण्येष्टका उपदध्यात् । हिरण्यशकला एव हिरण्येष्टकास्तदुपधानेन ताभ्यो नमस्करोति । तन्मन्त्रेषु तस्मै नम इति दर्शनात् ॥

प्रकारान्तरेण हिरण्येष्टकाः प्रशंसति—

ब्रह्मवादिनो वदन्त्यग्नौ ग्राम्यान्पशून्प्र
दधाति शुचाऽऽरण्यानर्पयति किं तत
उच्छिꣳषतीति यद्धिरण्येष्टका उपदधा-
त्यमृतं वै हिरण्यममृतेनैव ग्राम्येभ्यः प-
शुभ्यो भेषजं करोति नैनान्हिनस्ति, इति ।

( हिरण्येष्टकादेरभिधानम् )

लोके हि द्विविधा एव पशवो ग्राम्याश्चाऽऽरण्याश्चेति । तत्र ग्राम्यान्पुरुषाश्वादीनयं यजमानश्चीयमानेऽग्नौ स्थापितवान् । मयुमारण्यमनु ते दिशामीत्यादिभिर्मन्त्रैरारण्यांश्च शोकेन योजितवान् । तत उभयविधेभ्यः पशुभ्योऽन्यदनुपहितं पशुस्वरूपं किं नामोच्छिष्यते । अतः कष्टोऽयं सर्वकर्मोपद्रवैको यजमानव्यापार इति ब्रह्मवादिनः परस्परमाहुः । तत्रैतदुत्तरं द्रष्टव्यम्—नायं कष्टो व्यापारो यस्मादयं हिरण्येष्टका उपदधाति हिरण्यं चामृतं तेनामृतेन ग्राम्येभ्यः पशुभ्यो भेषजकरणादेतदीयहिंसादोषं न प्राप्नोति । एतच्चोपलक्षणमारण्यपशुशोकस्यापि भेषजमेतदिति द्रष्टव्यम् । एतासां कृत्तिकादिनक्षत्रेष्टकाभ्य ऊर्ध्वभावित्वात्तद्ब्राह्मणानन्तरमेवैतद्ब्राह्मणं द्रष्टव्यम् ॥

अथ तिसृणां स्वयमातृण्णानामुपधानानन्तरं प्राणनादिकं विधत्ते—

प्राणो वै प्रथमा स्वयमातृण्णा व्यानो द्वितीयाऽपानस्तृतीयाऽनु प्राण्यात्प्रथमाꣳ स्वयमातृण्णामुपधाय प्राणेनैव प्राणꣳ समर्धयति व्यन्याद्द्वितीयामुपधाय व्यानेनैव व्यानꣳ समर्धयत्यपान्यात्तृतीयामुपधायापानेनैवापानꣳ समर्धयत्यथो प्राणैरेवैनꣳ समिन्धे, इति ।

प्रथममध्यमोत्तमचितिषु तिस्रः स्वयमातृण्णाः, ताश्च क्रमेण प्राणव्यानापानस्वरूपाः प्राग्वृत्तिमध्यवृत्तिपश्चाद्वृत्तित्वसाम्यात् । अतः प्रथमचितौ स्वयमातृण्णामुपधाय प्राण्यादुच्छ्वासं कुर्यात् । मध्यमचितौ व्यन्यात्प्राणापानस्तम्भनं कुर्यात् । उत्तमचितावपान्यान्निश्वासं कुर्यात् । स एवं सति स्वकीयैः प्राणादिभिरग्नेः प्राणादीन्समर्धयति । अपि च प्राणवायुभिरेवैनमग्निं प्रदीपयति ॥

अथ तिसृषु स्वयमातृण्णासु व्याहृतित्रयं क्रमेण विनियुङ्क्ते—

भूर्भुवः सुवरिति स्वयमातृण्णा उप दधातीमे वै लोकाः स्वयमातृण्णा एताभिः खलु वै व्याहृतीभिः प्रजापतिः प्राजायत यदेताभिर्व्याहृतीभिः स्वयमातृण्णा उपदधातीमानेव लोकानुपधायैषु लोकेष्वधि प्र जायते, इति ।

---

१ घ. ङ. च. °न्यत्तु यदुदितं । २ घ. ङ. च. °वकार्यजन्यमा° ।

तत्तत्स्वयमातृण्णोपधानब्राह्मणानन्तरमेवैतदपि ब्राह्मणं विभज्य योजयितव्यम् ॥

यदुक्तं सूत्रकारेण—" प्राणाय त्वा चक्षुषे त्वेति चतस्रः स्वयमातृण्णाः प्रतिदिशम् " इति, तत्र मन्त्रानुत्पादयति—

प्राणाय व्यानायापानाय वाचे त्वा चक्षुषे त्वा तया देवतयाऽङ्गिरस्वद्ध्रुवा सीद, इति ।

प्राणादिपदैश्चतुर्भिश्चत्वारो मन्त्राः । प्राणाय त्वा चक्षुषे त्वा तयेत्यादि सर्वत्रानुषज्यते । हे पूर्वदिग्वर्तिस्वयमातृण्णे प्राणवृत्तिसिद्धये त्वामुपदधामि । चक्षुषे दृष्टिसिध्द्यर्थं त्वामुपदधामि । या तव स्वामिभूता देवता तयाऽनुगृहीता ध्रुवा सतीह सीदोपविश, यथाऽङ्गिरोभिरुपहिता ध्रुवा तद्वत् । एवं व्यानायेत्यादिमन्त्रत्रये योजनीयम् ॥

एतैर्मन्त्रैः साध्यमुपधानं विधत्ते—

अग्निना वै देवाः सुवर्गं लोकमजिगाꣳसन्तेन पतितुं नाशक्नुवन्त एताश्चतस्रः स्वयमातृण्णा अपश्यन्ता दिक्षूपादधत तेन सर्वतश्चक्षुषा सुवर्गं लोकमायन्यच्चतस्रः स्वयमातृण्णा दिक्षूपदधाति सर्वतश्चक्षुषैव तदग्निना यजमानः सुवर्गं लोकमेति ॥ , इति ॥

पुरा कदाचिद्देवाश्चीयमानमग्निं साधनं कृत्वा स्वर्गं प्राप्तुमैच्छन् । तेन चाग्निना साधनेन प्राप्तुं नाशक्नुवन् । अतः शक्तिसाधनत्वेन स्वयमातृण्णा निश्चित्योपधाय तत्रत्येन सर्वदिगवगतेन चक्षुषा स्वर्गं प्राप्ताः । तदीयमन्त्रेषु हि चक्षुषे त्वेत्यादि सर्वेष्वप्यनुषक्तम् । अत एताश्चतस्रः स्वयमातृण्णाश्चतसृषु दिक्षूपधाय सर्वदिगवगतचक्षुर्युक्तेनाग्निना स्वर्गं प्राप्नोति । हिरण्येष्टकाब्राह्मणेन सहैतद्ब्राह्मणं द्रष्टव्यम् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये पञ्चमकाण्डे पञ्चमप्रपाठके

पञ्चमोऽनुवाकः ॥ ५ ॥

---

(अह्नां रूपादीनामभिधानम्)

(अथ पञ्चमाष्टके पञ्चमप्रपाठके षष्ठोऽनुवाकः।)

---

अग्न आ याहि वीतय इत्याहाह्वतैवैनमग्निं दूतं वृणीमह इत्याह हूत्वैवैनं वृणीतेऽग्निनाऽग्निः समिध्यत इत्याह समिन्ध एवैनमग्निर्वृत्राणि जङ्घनदित्याह समिद्ध एवास्मिन्निन्द्रियं दधात्यग्नेः स्तोमं मनामह इत्याह मनुत एवैनमेतानि वा अह्नां रूपाणि (१) अन्वहमेवैनं चिनुतेऽवाह्नां रूपाणि रुन्धे ब्रह्मवादिनो वदन्ति कस्मात्सत्याद्यातयाम्नीरन्या इष्टका अयातयाम्नी लोकंपृणेत्यैन्द्राग्नी हि बार्हस्पत्येति ब्रूयादिन्द्राग्नी च हि देवानां बृहस्पतिश्चायातयामानोऽनुचरवती भवत्यजामित्वायानुष्टुभाऽनुचरत्यात्मा वै लोकंपृणा प्राणोऽनुष्टुप्तस्मात्प्राणः सर्वाण्यङ्गान्यनु चरति ता अस्य सूददोहसः (२) इत्याह तस्मात्परुषिपरुषि रसः सोमं श्रीणन्ति पृश्नय इत्याहान्नं वै पृश्न्यन्नमेवाव रुन्धेऽर्को वा अग्निरर्कोऽन्नमन्नमेवाव रुन्धे जन्मन्देवानां विशस्त्रिष्वा रोचने दिव इत्याहेमानेवास्मै लोकाञ्ज्योतिष्मतः करोति यो वा इष्टकानां प्रतिष्ठां वेद प्रत्येव तिष्ठति

तयां देवतंयाऽङ्गिरस्वद्ध्रुवा सीदेत्यांहैषा वा इष्टं-
कानां प्रतिष्ठा य एवं वेद प्रत्येव तिष्ठति(३)॥

( रूपाणि सूर्ददोहसस्तया षोडश च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां पञ्चमाष्टके
पञ्चमप्रपाठके षष्ठोऽनुवाकः ॥ ६ ॥

---

( अथ पञ्चमाष्टके पञ्चमप्रपाठके षष्ठोऽनुवाकः । )

---

अग्ने । एतिं । याहि । वीतयें । इतिं । आह । अह्नंत । एव । एनम् । अग्निम् । दूतम् । वृणीमहे । इतिं । आह । हूत्वा । एव । एनम् । वृणीते । अग्निर्ना । अग्निः । समितिं । इध्यते । इतिं । आह । समितिं । इन्धे । एव । एनम् । अग्निः । वृत्राणिं । जङ्घनत् । इतिं । आह । समिद्ध इति सम्—इद्धे । एव । अस्मिन् । इन्द्रियम् । दधाति । अग्नेः । स्तोमंम् । मनामहे । इतिं । आह । मनुते । एव । एनम् । एतानिं । वै । अह्नांम् । रूपाणिं ( १ ) । अन्वहमित्यंनु—अहम् । एव । एनम् । चिनुते । अवेतिं । अह्नांम् । रूपाणिं । रुन्धे । ब्रह्मवादिन इतिं ब्रह्म—वादिनंः । वदन्ति । कस्मांत् । सत्यात् । यातयांम्नीरितिं यात—याम्नीः । अन्याः । इष्टंकाः । अयांतयाम्नीत्ययांत—याम्नी । लोकंपृणेतिं लो-

कं—पृणा। इति। ऐन्द्राग्नीत्यैन्द्र—अग्नी। हि। बार्हस्पत्या। इति। ब्रूयात्। इन्द्राग्नी इतीन्द्र—अग्नी। च। हि। देवानाम्। बृहस्पतिः। च। अयातयामान इत्ययात—यामानः। अनुचरवतीत्यनुचर—वती। भवति। अजामित्वायेत्यजामि—त्वाय। अनुष्टुभेत्यनु—स्तुभा। अन्विति। चरति। आत्मा। वै। लोकंपृणेति लोकं—पृणा। प्राण इति प्र—अनः। अनुष्टुबित्यनु—स्तुप्। तस्मात्। प्राण इति प्र—अनः। सर्वाणि। अङ्गानि। अन्विति। चरति। ताः। अस्य। सूददोहस इति सूद—दोहसः ( २ )। इति। आह। तस्मात्। परुषिपरुषीति परुषि—परुषि। रसः। सोमम्। श्रीणन्ति। पृश्नयः। इति। आह। अन्नम्। वै। पृश्नि। अन्नम्। एव। अवेति। रुन्धे। अर्कः। वै। अग्निः। अर्कः। अन्नम्। अन्नम्। एव। अवेति। रुन्धे। जन्मन्। देवानाम्। विशः। त्रिषु। एति। रोचने। दिवः। इति। आह। इमान्। एव। अस्मै। लोकान्। ज्योतिष्मतः। करोति। यः। वै। इष्टकानाम्। प्रतिष्ठामिति प्रति—स्थाम्। वेद। प्रतीति। एव। तिष्ठति। तया। देवतया। अङ्गिरस्वत्।

ध्रुवा । सीद । इति । आह । एषा । वै । इष्टकानाम् । प्रतिष्ठेति प्रति—स्था । यः । एवम् । वेद । प्रतीति । एव । तिष्ठति ) ३ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे पञ्चमाष्टके पञ्चमप्रपाठके षष्ठोऽनुवाकः ॥ ६ ॥

---

( अथ पञ्चमकाण्डे पञ्चमप्रपाठके षष्ठोऽनुवाकः । )

---

हिरण्यस्वयमातृण्णाभिधाः पञ्चम ईरिताः ।

अथ षष्ठेऽह्नां रूपादयः कथ्यन्ते ।

यदुक्तं सूत्रकारेण—" अग्न आ याहि वीतयेऽग्निं दूतं वृणीमहेऽग्निनाऽग्निः समिध्यतेऽग्निर्वृत्राणि जङ्घनदग्नेः स्तोमं मनामहे सिध्रमद्य दिविस्पृशम्। देवस्य द्रविणस्यव इति पञ्चाह्नां रूपाणि " इति, तदिदं विधातुं मन्त्राणां तात्पर्याणि क्रमेण दर्शयति—

अग्न आ याहि वीतय इत्याहाह्वतैवैनमग्निं दूतं वृणीमह इत्याह हुत्वैवैनं वृणीतेऽग्निनाऽग्निः समिध्यत इत्याह समिन्ध एवैनमग्निर्वृत्राणि जङ्घनदित्याह समिद्ध एवास्मिन्निन्द्रियं दधात्यग्नेः स्तोमं मनामह इत्याह मनुत एवैनम् , इति ।

प्रथममन्त्र आयाहीत्युक्तत्वादाह्वानं प्रतीयते । द्वितीये तु वृणीमह इत्युक्तत्वादाहूय पश्चाद्वरणं प्रतीयते । तृतीये तु समिध्यत इत्युक्तत्वात्समिन्धनं प्रतीयते । चतुर्थे तु वृत्राणि जङ्घनदिति शत्रुवधोक्तेः सामर्थ्यं प्रतीयते । पञ्चमे तु मनामह इत्युक्तत्वान्मननं प्रतीयते । तत्र प्रथमद्वितीयौ होतृकाण्डे प्र वो वाजा इत्यनुवाके समाम्नातौ । तौ चास्माभिर्द्वितीयकाण्डस्य पञ्चमप्रपाठके सामिधेनीब्राह्मणे व्याख्यातौ । तृतीयो यस्त्वा हृदेत्यनुवाके समाम्नातत्वात्तत्रैव व्याख्यातः। चतुर्थस्तु चतुर्थकाण्डस्य तृतीयप्रपाठकस्यान्त्यानुवाके व्याख्यातः।

( अह्नां रूपादीनामभिधानम् )

पञ्चमः शाखान्तरगतः । एतैर्मन्त्रैरुपधेयानामिष्टकानामह्नां रूपाणीत्येतन्नामधेयम् ॥

तेषामुपधानविधिमर्थवादेनोन्नयति—

एतानि वा अह्ना॒ꣳ रूपाण्यन्वहमेवैनं चिनुतेऽवाह्ना॒ꣳ रूपाणि रुन्धे, इति।

पञ्चस्वहःसु तस्यां तस्यां चितावुपधेयत्वादेतन्मन्त्रसाध्यानीष्टकास्वरूपाण्यह्नां रूपाणीत्युच्यन्ते। तान्युपदध्यादिति विधिरुन्नेयः। तदुपधानेन सर्वदा प्रतिदिनमग्निं चितवान्भवति। कालविशेषाणामह्नां स्वरूपं च प्राप्नोति। एतच्च ब्राह्मणवाक्यं तत्तच्चितिप्रस्तावे विभज्य द्रष्टव्यम् ॥

अथ लोकंपृणाया विधिमर्थवादेनोन्नयति—

ब्रह्मवादिनो वदन्ति कस्मात्सत्याद्यातयाम्नीरन्या इष्टका अयातयाम्नी लोकंपृणेत्यैन्द्राग्नी हि बार्हस्पत्येति ब्रूयादिन्द्राग्नी च हि देवानां बृहस्पतिश्चायातयामानः, इति।

लोकं पृण छिद्रं पृणेति मन्त्रेणोपधेया लोकंपृणाः। एतद्व्यतिरिक्तानामिष्टकानामेकस्यां चितौ सकृदेवोपधानं तावतैव गतसारत्वात्। लोकंपृणायास्त्वगतसारत्वादसकृदुपधानं क्रियते। तदेतदगतसारत्वं कस्मात्कारणादिति ब्रह्मवादिभिः पृष्टे सति ऐन्द्राग्नत्वाद्बार्हस्पत्यत्वाच्चेति बुद्धिमानुत्तरं ब्रूयात्। इन्द्राग्नी त्वा बृहस्पतिरितिमन्त्रे समाम्नातत्वात्तदीयत्वम्। इन्द्राग्नी बृहस्पतिरित्येते देवाः सामर्थ्यातिशयोपेतत्वात्कदाचिदपि गतसारा न भवन्ति। तादृशीमयातयाम्नीं लोकंपृणाख्यामिष्टकामुपदध्यादिति विधिरुन्नेयः ॥

अत्र लोकं पृणेतिमन्त्रस्य मन्त्रान्तरोपेतत्वं विधत्ते—

अनुचरवती भवत्यजामित्वाय, इति।

लोकं पृण छिद्रं पृणेति मन्त्रमनु पश्चाच्चरति पठ्यत इति अनुचरो द्वितीयो मन्त्रः। तेनाप्युपधेयत्वादियमिष्टकाऽनुचरवती। एकेनैव मन्त्रेण पुनः पुनरुपधाने सत्यालस्यं भवेत्। मन्त्रान्तरसद्भावे तु तदालस्यं न भवति ॥

अनुचरमन्त्रं सामान्यतो विधाय पुनर्विशेषतो विधत्ते—

अनुष्टुभाऽनु चरत्यात्मा वै लोकंपृणा प्राणोऽनुष्टुप्तस्मात्प्राणः सर्वाण्यङ्गान्यनु चरति, इति।

लोकं पृणेतिमन्त्र आत्मा शरीरम्। अनुचररूपो द्वितीयोऽनुष्टुप्छन्दस्कः प्राणरूपः। यस्मादत्रैवं तस्माल्लोकेऽपि प्राणवायुः सर्वाङ्गशरीरावयवाननुसृत्य चरति॥

तस्मिन्ननुचरमन्त्रे प्रथमपादस्य तात्पर्यं दर्शयति—

ता अस्य सूददोहस इत्याह
तस्मात्परुषिपरुषि रसः, इति।

सूदशब्देन दोहनीयः क्षीरादिरस उपलक्ष्यते। सूदं दुहन्तीति सूददोहसस्ता इष्टकाः। यस्मादत्रैवमुक्तं तस्मात्सोमवल्ल्यामपि परुषि परुषि तत्तत्पर्वणि रसोऽवतिष्ठते॥

द्वितीयपादस्य तात्पर्यं दर्शयति—

सोमꣳ श्रीणन्ति पृश्नय इत्याहान्नं वै पृश्न्यन्नमेवाव
रुन्धेऽर्को वा अग्निरर्कोऽन्नमन्नमेवाव रुन्धे, इति।

पृश्नयः श्वेतगोरूपा इष्टका अन्नं च श्वेतवर्णं तस्मादन्नप्राप्तिः। किंचेष्टकचितोऽग्निरर्चनीयोऽन्नं चार्चनीयम्। तस्मादप्यन्नप्राप्तिः॥

द्वितीयार्धे त्रिष्वा रोचने दिव इत्यस्य तात्पर्यं दर्शयति—

जन्मन्देवानां विशस्त्रिष्वा रोचने दिव इत्याहे-
मानेवास्मै लोकाञ्ज्योतिष्मतः करोति, इति।

त्रिशब्देन लोकत्रयमुच्यते। रोचनशब्देन ज्योतिः। यावती वै पृथिवीत्यनुवाके त्रयोदश लोकंपृणा उपदधातीत्यावृत्तेर्विहितत्वाद्यातयामत्वशङ्कायां तत्परिहारोऽत्राऽऽम्नातः। अतस्तत्रैवेदं ब्राह्मणं द्रष्टव्यम्। तत्र संख्यामात्रविधिमभिप्रेत्यात्र विध्युन्नयनमुक्तम्। यदा तु तत्रैव विशिष्टोपधानविधिस्तदानीं नात्र विधिरुन्नेतव्यः॥

अथ सर्वेष्टकाशेषत्वेन तया देवतयेति मन्त्रं विधत्ते—

यो वा इष्टकानां प्रतिष्ठां वेद प्रत्येव तिष्ठति
तया देवतयाऽङ्गिरस्वद्ध्रुवा सीदेत्याहैषा वा इष्ट-
कानां प्रतिष्ठा य एवं वेद प्रत्येव तिष्ठति॥, इति॥

मन्त्रे ध्रुवेत्यभिधानादनेनोपधाने सतीष्टकाः प्रतिष्ठिता भवन्ति। अतः

---

१ क. घ. ङ. च. °त्य संच°।

( यूपैकत्वादीनामभिधानम् )

सर्वास्वपीष्टकास्विमं मन्त्रं पठेदित्यभिप्रायः। इदं ब्राह्मणं स्वयमातृण्णोपधानब्राह्मणे द्रष्टव्यम् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये पञ्चमकाण्डे पञ्चमप्रपाठके षष्ठोऽनुवाकः ॥ ६ ॥

---

( अथ पञ्चमाष्टके पञ्चमप्रपाठके सप्तमोऽनुवाकः । )

---

सुवर्गाय वा एष लोकाय चीयते यदग्नि-र्वज्र एकादशिनी यदग्नावेकादशिनीं मिनुया-द्वज्रेणैनꣳ सुवर्गाल्लोकादन्तर्दध्याद्यन्न मिनुया-त्स्वरुभिः पशून्व्यर्धयेदेकयूपं मिनोति नैनं वज्रेण सुवर्गाल्लोकादन्तर्दधाति न स्वरुभिः पशून्व्यर्धयति वि वा एष इन्द्रियेण वीर्येण-र्ध्यते योऽग्निं चिन्वन्नधिक्रामत्यैन्द्रिया ( १ ) ऋचाऽऽक्रमणं प्रतीष्टकामुपदध्यान्नेन्द्रियेण वी-र्येण व्यृध्यते रुद्रो वा एष यदग्निस्तस्य तिस्रः शरव्याः प्रतीची तिरश्च्यनूची ताभ्यो वा एष आ वृश्च्यते योऽग्निं चिनुतेऽग्निं चित्वा तिसृ-धन्वमयाचितं ब्राह्मणाय दद्यात्ताभ्य एव नम-स्करोत्यथो ताभ्य एवाऽऽत्मानं निष्क्रीणीते यत्ते रुद्र पुरः ( २ ) धनुस्तद्वातो अनु वातु ते तस्मै ते रुद्र संवत्सरेण नमस्करोमि यत्ते

रुद्र दक्षिणा धनुस्तद्वातो अनुं वातु ते तस्मैं ते रुद्र परिवत्सरेण नमंस्करोमि यत्ते रुद्र पश्चाद्धनुस्तद्वातो अनुं वातु ते तस्मैं ते रुद्रेदावत्सरेण नमंस्करोमि यत्ते रुद्रोत्तराद्धनुस्तद्व (३) वातो अनुं वातु ते तस्मैं ते रुद्रेदुवत्सरेण नमंस्करोमि यत्ते रुद्रोपरि धनुस्तद्वातो अनुं वातु ते तस्मैं ते रुद्र वत्सरेण नमंस्करोमि रुद्रो वा एष यदग्निः स यथा व्याघ्रः क्रुद्धस्तिष्ठत्येवं वा एष एतर्हि संचितमेतैरुपं तिष्ठते नमस्कारैरेवैनंꣳ शमयति येऽग्नयंः (४) पुरीष्याः प्रविष्टाः पृथिवीमनुं । तेषां त्वमंस्युत्तमः प्र णो जीवातवे सुव । आपं त्वाऽग्ने मनसाऽऽपं त्वाऽग्ने तपसाऽऽपं त्वाऽग्ने दीक्षयाऽऽपं त्वाऽग्न उपसद्भिरापं त्वाऽग्ने सुत्ययाऽऽपं त्वाऽग्ने दक्षिणाभिरापं त्वाऽग्नेऽवभृथेनाऽऽपं त्वाऽग्ने वशयाऽऽपं त्वाऽग्ने स्वगाकारेणेत्याहैषा वा अग्नेराप्तिस्तयैवैनमाप्नोति (५) ॥

( ऐन्द्रिया पुर उत्तराद्धनुस्तदग्नयं आहाष्टौ च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां पञ्चमाष्टके पञ्चमप्रपाठके सप्तमोऽनुवाकः ॥ ७ ॥

---

( यूपैकत्वादीनामभिधानम् )
( अथ पञ्चमाष्टके पञ्चमप्रपाठके सप्तमोऽनुवाकः । )

सुवर्गायेति सुवः—गाय । वै । एषः । लोकाय । चीयते । यत् । अग्निः । वज्रः । एकादशिनी । यत् । अग्नौ । एकादशिनीम् । मिनुयात् । वज्रेण । एनम् । सुवर्गादिति सुवः—गात् । लोकात् । अन्तः । दध्यात् । यत् । न । मिनुयात् । स्वरुभिरिति स्वरु—भिः । पशून् । वीति । अर्धयेत् । एकयूपमित्येक—यूपम् । मिनोति । न । एनम् । वज्रेण । सुवर्गादिति सुवः—गात् । लोकात् । अन्तर्दधातीत्यन्तः—दधाति । न । स्वरुभिरिति स्वरु—भिः । पशून् । वीति । अर्धयति । वीति । वै । एषः । इन्द्रियेण । वीर्येण । ऋध्यते । यः । अग्निम् । चिन्वन् । अधिक्रामतीत्यधि—क्रामति । ऐन्द्रिया (१) । ऋचा । आक्रमणमित्या—क्रमणम् । प्रतीति । इष्टकाम् । उपेति । दध्यात् । न । इन्द्रियेण । वीर्येण । वीति । ऋध्यते । रुद्रः । वै । एषः । यत् । अग्निः । तस्य । तिस्रः । शरव्याः । प्रतीची । तिरश्ची । अनूची । ताभ्यः । वै । एषः । एति । वृश्च्यते । यः । अग्निम् । चिनुते । अग्निम् । चित्वा । तिसृधन्वमिति तिसृ—धन्वम् । अयाचितम् । ब्राह्मणाय । दद्यात् । ताभ्यः । एव ।

नमः । करोति । अथो इति । ताभ्यः । एव । आत्मानम् । निरिति । क्रीणीते । यत् । ते । रुद्र । पुरः ( २ ) । धनुः । तत् । वातः । अन्विति । वातु । ते । तस्मै । ते । रुद्र । संवत्सरेणेति सं—वत्सरेण । नमः । करोमि । यत् । ते । रुद्र । दक्षिणा । धनुः । तत् । वातः । अन्विति । वातु । ते । तस्मै । ते । रुद्र । परिवत्सरेणेति परि—वत्सरेण । नमः । करोमि । यत् । ते । रुद्र । पश्चात् । धनुः । तत् । वातः । अन्विति । वातु । ते । तस्मै । ते । रुद्र । इदावत्सरेण । नमः । करोमि । यत् । ते । रुद्र । उत्तरादित्युत्—तरात् । धनुः । तत् ( ३ ) । वातः । अन्विति । वातु । ते । तस्मै । ते । रुद्र । इदुवत्सरेणेतीदु—वत्सरेण । नमः । करोमि । यत् । ते । रुद्र । उपरि । धनुः । तत् । वातः । अन्विति । वातु । ते । तस्मै । ते । रुद्र । वत्सरेण । नमः । करोमि । रुद्रः । वै । एषः । यत् । अग्निः । सः । यथा । व्याघ्रः । क्रुद्धः । तिष्ठति । एवम् । वै । एषः । एतर्हि । संचितमिति सं—चितम् । एतैः । उपेति । तिष्ठते । नमस्कारैरिति नमः—कारैः । एव । एनम् । शमयति । ये । अग्नयः ( ४ ) । पुरीष्याः । प्रविष्टा

इति प्र—विष्टाः । पृथिवीम् । अनु । तेषाम् । त्वम् । असि । उत्तम इत्युत्—तमः । प्रेति । नः । जीवातवे । सुव । आपम् । त्वा । अग्ने । मनसा । आपम् । त्वा । अग्ने । तपसा । आपम् । त्वा । अग्ने । दीक्षया । आपम् । त्वा । अग्ने । उपसद्भिरित्युपसत्—भिः । आपम् । त्वा । अग्ने । सुत्यया । आपम् । त्वा । अग्ने । दक्षिणाभिः । आपम् । त्वा । अग्ने । अवभृथेनेत्यव—भृथेन । आपम् । त्वा । अग्ने । वशया । आपम् । त्वा । अग्ने । स्वगाकारेणेति स्वगा—कारेण । इति । आह । एषा । वै । अग्नेः । आप्तिः । तया । एव । एनम् । आप्नोति ( ५ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे पञ्चमाष्टके पञ्चमप्रपाठके सप्तमोऽनुवाकः ॥ ७ ॥

---

( अथ पञ्चमकाण्डे पञ्चमप्रपाठके सप्तमोऽनुवाकः । )

---

अह्नां रूपाणीरितानि षष्ठे लोकंपृणा तथा ।

अथ सप्तमे यूपैकत्वादीन्युच्यन्ते ।

यदुक्तमश्वमेधकाण्डे—" एकयूपो वैकादशिनी वा । अन्येषां यज्ञानां यूपा भवन्ति । एकविंशिन्यश्वमेधस्य " इति, तत्र विकल्पेन प्राप्तां यूपैकादशिनीमपोद्य यूपैकत्वमेव विधत्ते—

सुवर्गाय वा एष लोकाय चीयते यद्-

ग्निर्वज्र एकादशिनी यदग्नावेकादशिनीं मिनुयाद्वज्रेणैनꣳ सुवर्गाल्लोकादन्तर्दध्याद्यन्न मिनुयात्स्वरुभिः पशून्व्यर्धयेदेकयूपं मिनोति नैनं वज्रेण सुवर्गाल्लोकादन्तर्दधाति न स्वरुभिः पशून्व्यर्धयति, इति ।

योऽयमग्निः स एष सुवर्गार्थं चीयते, यूपैकादशिनी च वज्रसमाना । तत्रेदं विचार्यते—किमग्नौ पश्वर्थं यूपैकादशिनी कर्तव्या न वेति । यदि तामेकादशिनीं प्रक्षिपेत्तदा तद्रूपेण वज्रेणैनमग्निं स्वर्गलोकादन्तर्हितं कुर्यात् । बहुयूपव्यवधानात्स्वर्गो न दृश्येत । अथ तामेकादशिनीं न प्रक्षिपेत्तदानीं पशून्स्वरुभिर्वियोजयेत् । स्वरुशब्देन यूपतक्षणकालीनानि शकलान्युच्यन्ते । यूपाभावे च कथं तानि संभवेयुः । तदभावे च स्वरुणा पशुमनक्तीत्येतन्न सिध्येत्। अत्रोभयदोषपरिहारायैकं यूपं प्रक्षिपेत् । तदानीं वज्रात्मकबहुयूपव्यवधानाभावादिममग्निं स्वर्गादन्तर्हितं न करोति । यूपसद्भावेन स्वरुसद्भावात्तद्वियोगोऽपि न भविष्यति। अस्य च ब्राह्मणस्य चोदकप्राप्तापवादरूपत्वान्नाऽऽम्नाते कस्मिंश्चिदप्यनुवाकेऽन्तर्भावः ॥

यदुक्तं सूत्रकारेण—“ इन्द्रं विश्वा अवीवृधन्नित्युत्तरेण पुच्छाप्ययमन्तर्विधा(र्वेद्या) क्रमणं प्रतीष्टकामुपदध्यात् ” इति । पुच्छाप्ययः पुच्छपक्षयोः संधिः । तदिदं सूत्रोक्तमुपधानं विधत्ते—

वि वा एष इन्द्रियेण वीर्येणर्ध्यते योऽग्निं चिन्वन्नधिक्रामत्यैन्द्रियर्चाऽऽक्रमणं प्रतीष्टकामुप दध्यान्नेन्द्रियेण वीर्येण व्यृध्यते, इति ।

य उपधानकर्ता चयनकालेऽग्निमधिक्रामति स एष इन्द्रिय(येण) सामर्थ्येन [च] वियुक्तो भवति। अतस्तत्परिहारायाऽऽक्रमणं प्रति पादप्रक्षेपस्थाने कांचिदिष्टकामिन्द्रं विश्वा अवीवृधन्नित्यृचोपदध्यात् । सा चाग्निप्रणयनप्रस्तावे समाम्नातत्वात्तत्रैव व्याख्याता । अत्र पुनर्वाचनिकं विनियोगान्तरम् । एतदुपधानेनेन्द्रियसामर्थ्यवियोगो न भवति । एतच्च ब्राह्मणं शंयुं बार्हस्पत्यमित्यादेरश्वाक्रमणब्राह्मणात्पूर्वं द्रष्टव्यम् ॥

---

१ क. °त्वादाम्रा° ।

( यूपैकत्वादीनामभिधानम् )

अथ धनुर्दानं विधत्ते—

रुद्रो वा एष यदग्निस्तस्य तिस्रः शरव्याः प्रतीची तिरश्च्यनूची ताभ्यो वा एष आ वृश्च्यते योऽग्निं चिनुतेऽग्निं चित्वा तिसृधन्वमयाचितं ब्राह्मणाय दद्यात्ताभ्य एव नमस्करोत्यथो ताभ्य एवाऽऽत्मानं निष्क्रीणीते, इति ।

योऽयमग्निः स एष रुद्रः क्रूरो देवः । रुद्रो वै क्रूर इति ह्यन्यत्राऽऽम्नातम्। तस्य च क्रूरस्य शरव्याः शरेण साध्याः प्रतीच्यादयस्तिस्रः शरव्याः । यद्वा हिंसकत्वादिषुरेव शरव्याः । सा च त्रेधा-प्रतीची संमुखमागच्छन्ती, तिरश्ची पार्श्वयोश्च गच्छन्ती, अनूची पृष्ठत आगच्छन्ती चेति। एवं सति योऽग्निं चिनुते स एष ताभ्य इषुभ्यो निमित्तभूताभ्य आवृश्च्यते सर्वतश्छिद्यते ताभिः प्रहृतो भवतीत्यर्थः । अतस्तत्परिहाराय तिसृभिरिषुभिर्युक्तमेकं धनुरयाचितमपि ब्राह्मणाय दद्यात्। तेन दानेन बाधिकाभ्यस्ताभ्य इषुभ्यो नमस्करोत्येव। अपि च ताभ्य इषुभ्यः सकाशादेवाऽऽत्मानं स्वशरीरं निष्क्रीणीते ॥

यदुक्तं सूत्रकारेण—" तिसृधन्वमयाचितं यजमानो ब्राह्मणाय दत्त्वा यत्ते रुद्र पुरो धनुरित्येतैर्यथालिङ्गमुपतिष्ठते " इति, तदेतद्विधातुं मन्त्रानुत्पादयति—

यत्ते रुद्र पुरो धनुस्तद्वातो अनु वातु ते तस्मै ते रुद्र संवत्सरेण नमस्करोमि यत्ते रुद्र दक्षिणा धनुस्तद्वातो अनु वातु ते तस्मै ते रुद्र परिवत्सरेण नमस्करोमि यत्ते रुद्र पश्चाद्धनुस्तद्वातो अनु वातु ते तस्मै ते रुद्रेदावत्सरेण नमस्करोमि यत्ते रुद्रोत्तराद्धनुस्तद्वातो अनु वातु ते तस्मै ते रुद्रेदुवत्सरेण नमस्करोमि यत्ते रुद्रोपरि धनुस्तद्वातो अनु वातु ते तस्मै ते रुद्र वत्सरेण नमस्करोमि , इति ।

हे रुद्र पुरः पूर्वस्यां दिशि ते त्वदीयं यद्धनुरस्ति तदनुसृत्य वातो वातु प्रसरतु। किमर्थं, ते त्वदर्थं त्वत्सहायार्थमित्यर्थः। त्वया बाणे मुक्ते सति यदा वायुरनुकूलो भवति तदा बाणः शीघ्रमुद्गच्छति तदिदं साहाय्यम्। हे रुद्र ते त्वदीयाय तस्मै धनुषे संवत्सरेण कालेन नमोऽस्तु। एकस्मिन्संवत्सरे निरन्तरं नमस्करोमीत्यर्थः। एवमुत्तरत्रापि योज्यम्। प्रभवविभवादीनां षष्टिसंवत्सराणां मध्य एकैकस्मिन्पञ्चके स्थिताः संवत्सराः क्रमेण संवत्सरपरिवत्सरेदावत्सरेदुवत्सरवत्सरशब्दैर्विवक्षिताः। प्रथमः संवत्सरो द्वितीयः परिवत्सरस्तृतीय इदावत्सरश्चतुर्थ इदुवत्सरः पञ्चमो वत्सरः। एवं सत्येकैकदिग्वर्तिधनुषे निरन्तरमेकैकस्मिन्संवत्सरे नमस्कारः कृतो भवति ॥

एतन्मन्त्रसाध्यमुपस्थानं विधत्ते—

रुद्रो वा एष यदग्निः स यथा व्याघ्रः क्रुद्ध-
स्तिष्ठत्येवं वा एष एतर्हि संचितमेतै-
रुप तिष्ठते नमस्कारैरेवैनꣳ शमयति, इति।

लोके क्रुद्धो व्याघ्रो गर्जन्भक्षणोद्यतो यथा भयंकरस्तिष्ठति, एवमेवैष सम्यक्चितोऽग्निरुग्रः सन्नुपस्थाने सति तन्मन्त्रगतैर्नमस्कारैः शान्तो भवति। तदिदमुपस्थानब्राह्मणं शतरुद्रीयहोमब्राह्मणादूर्ध्वं द्रष्टव्यम् ॥

यदुक्तं सूत्रकारेण—"येऽग्नयः पुरीष्या इति प्रयास्यन्नाप्तिभिरग्निं यजमान उपतिष्ठते" इति, तदिदं विधातुं मन्त्रान्पठति—

येऽग्नयः पुरीष्याः प्रविष्टाः पृथिवीमनु।
तेषां त्वमस्युत्तमः प्र णो जीवातवे सुव।
आपं त्वाऽग्ने मनसाऽऽपं त्वाऽग्ने तप-
साऽऽपं त्वाऽग्ने दीक्षयाऽऽपं त्वाऽग्न उप-
सद्भिरापं त्वाऽग्ने सुत्ययाऽऽपं त्वाऽग्ने दक्षि-
णाभिरापं त्वाऽग्नेऽवभृथेनाऽऽपं त्वाऽग्ने
वशयाऽऽपं त्वाऽग्ने स्वगाकारेण, इति।

हेऽग्ने मया चीयमाना ये केचिदन्यैश्चीयमानाः पुरीष्या मृदा निष्पाद्याः पृथिवीमनु प्रविष्टाः सन्ति तेषां मध्ये त्वमुत्तमोऽसि। तादृशस्त्वं नोऽस्माञ्जी-

१ घ. ङ. च. °न्नाप्तीभि°।

( उपस्थानाद्यभिधानम् )

वातवे जीवनौषधाय चिरं जीवितुं प्रसुव प्रकर्षेण प्रेरय। हेऽग्ने त्वामाप्यं प्राप्तवानस्मि। सामान्येनोक्ता प्राप्तिः पुनर्विशेष्यते। संकल्पमारभ्य वशानूबन्ध्यास्वगाकारपर्यन्ता ये सोमप्रयोगावयवास्तैः सर्वैस्त्वां प्राप्तोऽस्मि। मनः संकल्पो वचो मन्त्रोच्चारणम्। तपोऽनशनं दानं च। दीक्षा मौनादिनियमः। उपसदो दिनत्रयानुष्ठेया होमाः। सुत्या सोमग्रहहोमः। दक्षिणा द्वादशशतगवादयः। अवभृथो जले होमः। वशाऽनूबन्ध्यापशुः। स्वगाकारोऽवशिष्टावयवसंपूर्त्या स्वाधीनत्वकरणम्। अत्राप्याप्यं त्वाऽग्न इत्यनुषज्यते॥

एतन्मन्त्रसाध्यं प्रयाणकालीनोपस्थानविधिं मन्त्रव्याख्यानरूपेणार्थवादेनोन्नयति—

**इत्याहैषा वा अग्नेराप्तिस्तयैवैनमाप्नोति॥, इति॥**

योऽयं मन्त्रः पठितस्तं मन्त्रमुक्तप्रकारेण प्रयाणकाले ब्रूयात्। एषैव मन्त्रपाठानुष्ठितिरग्नेः प्रापिका। तस्मात्तयैवाग्निं प्राप्नोति॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये पञ्चमकाण्डे पञ्चमप्रपाठके सप्तमोऽनुवाकः॥ ७॥

---

( अथ पञ्चमाष्टके पञ्चमप्रपाठकेऽष्टमोऽनुवाकः। )

---

गायत्रेणं पुरस्तादुपं तिष्ठते प्राणमेवास्मिन्दधाति बृहद्रथंतराभ्यां पक्षावोर्ज एवास्मिन्दधात्यृतुस्थायंज्ञायज्ञियेंन पुच्छंमृतुष्वेव प्रतिं तिष्ठति पृष्ठैरुपं तिष्ठते तेजो वै पृष्ठानि तेजं एवास्मिन्दधाति प्रजापंतिरग्निमंसृजत सोंऽस्मात्सृष्टः पराङैत्तं वांरवन्तीयेंनावारयत तद्वांरवन्तीयंस्य वारवन्तीयत्वꣳ श्यैतेनं श्येती अंकुरुत तच्छ्यैतस्यं श्यैतत्वम् ( १ ) यद्वारवन्ती-

यैनोपतिष्ठते वारयत एवैनꣳ श्येतेनं श्येती कुरुते प्रजापतेर्हृदयेनापिपक्षं प्रत्युपं तिष्ठते प्रेमाणंमेवास्य गच्छति प्राच्यां त्वा दिशा सांदयामि गायत्रेण छन्दसाऽग्निनां देवतयाऽग्नेः शीर्ष्णाऽग्नेः शिर उपं दधामि दक्षिणया त्वा दिशा सांदयामि त्रैष्टुंभेन छन्दसेन्द्रेण देवतयाऽग्नेः पक्षेणाग्नेः पक्षमुपं दधामि प्रतीच्यां त्वा दिशा सांदयामि ( २ ) जागतेन छन्दसा सवित्रा देवतयाऽग्नेः पुच्छेनाग्नेः पुच्छमुपं दधाम्युदीच्या त्वा दिशा सांदयाम्यानुष्टुभेन छन्दसा मित्रावरुणाभ्यां देवतयाऽग्नेः पक्षेणाग्नेः पक्षमुपं दधाम्यूर्ध्वयां त्वा दिशा सांदयामि पाङ्क्तेन छन्दसा बृहस्पतिना देवतयाऽग्नेः पृष्ठेनाग्नेः पृष्ठमुपं दधामि यो वा अपारमानमग्निं चिनुतेऽपारमाऽमुष्मिँल्लोके भवति यः सात्मानं चिनुते सात्माऽमुष्मिँल्लोके भवत्यात्मेष्टका उपं दधात्येष वा अग्नेरात्मा सात्मानमेवाग्निं चिनुते सात्माऽमुष्मिँल्लोके भवति य एवं वेद ( ३ ) ॥

( उपस्थानायभिधानम् )
( श्यैतत्वं प्रतीच्यां त्वा दिशा सादयामि यः सात्मानं चिनुते द्वाविंशतिश्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां पञ्चमाष्टके पञ्चमप्रपाठकेऽष्टमोऽनुवाकः ॥ ८ ॥

---

( अथ पञ्चमाष्टके पञ्चमप्रपाठकेऽष्टमोऽनुवाकः । )

---

गायत्रेण । पुरस्तात् । उपेति । तिष्ठते । प्राणमिति प्र—अनम् । एव । अस्मिन् । दधाति । बृहद्रथंतराभ्यामिति बृहत्—रथंतराभ्याम् । पक्षौ । ओजः । एव । अस्मिन् । दधाति । ऋतुस्थायज्ञायज्ञियेन । पुच्छम् । ऋतुषु । एव । प्रतीति । तिष्ठति । पृष्ठैः । उपेति । तिष्ठते । तेजः । वै । पृष्ठानि । तेजः । एव । अस्मिन् । दधाति । प्रजापतिरिति प्रजा—पतिः । अग्निम् । असृजत । सः । अस्मात् । सृष्टः । पराङ् । ऐत् । तम् । वारवन्तीयेनेति वार—वन्तीयेन । अवारयत । तत् । वारवन्तीयस्येति वार—वन्तीयस्य । वारवन्तीयत्वमिति वारवन्तीय—त्वम् । श्यैतेन । श्येती । अकुरुत । तत् । श्यैतस्य । श्यैतत्वमिति श्यैत—त्वम् ( १ ) । यत् । वारवन्तीयेनेति वार—वन्तीयेन । उपतिष्ठत इत्युप—तिष्ठते । वारयते । एव । एनम् । श्यैतेन । श्येती । कुरुते । प्रजापतेर्हृदयेन । अपिपक्षमित्यपि—पक्षम् । प्रति ।

उपेति । तिष्ठते । प्रेमाणम् । एव । अस्य । गच्छति । प्राच्यां । त्वा । दिशा । सादयामि । गायत्रेण । छन्दसा । अग्निना । देवतया । अग्नेः । शीर्ष्णा । अग्नेः । शिरः । उपेति । दधामि । दक्षिणया । त्वा । दिशा । सादयामि । त्रैष्टुभेन । छन्दसा । इन्द्रेण । देवतया । अग्नेः । पक्षेण । अग्नेः । पक्षम् । उपेति । दधामि । प्रतीच्यां । त्वा । दिशा । सादयामि (२)। जागतेन । छन्दसा । सवित्रा । देवतया । अग्नेः । पुच्छेन । अग्नेः । पुच्छम् । उपेति । दधामि । उदीच्या । त्वा । दिशा । सादयामि । आनुष्टुभेनेत्यानु—स्तुभेन । छन्दसा । मित्रावरुणाभ्यामिति मित्रा—वरुणाभ्याम् । देवतया । अग्नेः । पक्षेण । अग्नेः । पक्षम् । उपेति । दधामि । ऊर्ध्वया । त्वा । दिशा । सादयामि । पाङ्क्तेन । छन्दसा । बृहस्पतिना । देवतया । अग्नेः । पृष्ठेन । अग्नेः । पृष्ठम् । उपेति । दधामि । यः । वै । अपात्मानमित्यप—आत्मानम् । अग्निम् । चिनुते । अपात्मेत्यप—आत्मा । अमुष्मिन् । लोके । भवति । यः । सात्मानमिति स—आत्मानम् । चिनुते । सात्मेति स—आत्मा । अमुष्मिन् । लोके । भवति । आत्मेष्टका इत्यात्म—

( उपस्थानाद्यभिधानम् )

इष्टकाः । उपेति । दधाति । एषः । वै । अग्नेः । आत्मा । सात्मानमिति स—आत्मानम् । एव । अग्निम् । चिनुते । सात्मेति स—आत्मा । अमुष्मिन् । लोके । भवति । यः । एवम् । वेद ( ३ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे पञ्चमाष्टके पञ्चमप्रपाठकेऽष्टमोऽनुवाकः ॥ ८ ॥

---

( अथ पञ्चमकाण्डे पञ्चमप्रपाठकेऽष्टमोऽनुवाकः । )

---

एकयूपादिविधयः सप्तमे समुदीरिताः ।
अथाष्टम उपस्थानादिकमुच्यते ।

यदुक्तं सूत्रकारेण—"पृष्ठैरुपतिष्ठते गायत्रेण पुरस्ताद्बृहद्रथंतराभ्यां पक्षावृतुस्थायज्ञायज्ञियेन पुच्छं दक्षिणस्यां श्रोण्यां वारवन्तीयेनोत्तरस्यां वामदेव्येनापि पक्षे प्रजापतेः सामानृचं गायति" इति, तदेतद्विधत्ते—

गायत्रेण पुरस्तादुप तिष्ठते प्राणमेवास्मिन्दधाति बृहद्रथंतराभ्यां पक्षावोज एवास्मिन्दधात्यृतुस्थायज्ञायज्ञियेन पुच्छमृतुष्वेव प्रति तिष्ठति पृष्ठैरुप तिष्ठते तेजो वै पृष्ठानि तेज एवास्मिन्दधाति, इति ।

गायत्रादीनि सामविशेषनामानि । तत्सवितुर्वरेण्यमित्यस्यामृच्युत्पन्नं गायत्रं, तेन शिरोभागस्योपस्थाने सत्यस्मिन्नग्नौ प्राणः स्थापितो भवति । त्वामिद्धि हवामह इत्यस्यामृच्युत्पन्नं बृहत्, अभि त्वा शूर नोनुम इत्यस्यामृच्युत्पन्नं रथंतरम् । ताभ्यां पक्षयोरुपस्थाने सति बलं संपादितं भवति । वसन्तमित्यादिकायामृच्युत्पन्नमृतुस्थायज्ञायज्ञियं, तेन पुच्छोपस्थाने सति ऋतुषु प्रतिष्ठितो भवति । यानि पृष्ठस्तोत्रगतानि सामानि तैः सर्वैः कृत्स्नमग्निमुपतिष्ठेत । तेन शरीरकान्तिः प्राप्यते ॥

---

१ ख. गायन्ति ।

अथ श्रोणिद्वयोपस्थानाय सामद्वयं विधत्ते—

प्रजापतिरग्निमसृजत सोऽस्मात्सृष्टः पराङैत्तं वारवन्तीयेनावारयत तद्वारवन्तीयस्य वारवन्तीयत्वꣳ श्यैतेन श्येती अकुरुत तच्छ्यैतस्य श्यैतत्वं यद्वारवन्तीयेनोपतिष्ठते वारयत एवैनꣳ श्यैतेन श्येती कुरुते , इति।

अश्वं न त्वा वारवन्तमित्यस्यामृच्युत्पन्नं वारवन्तीयं, तेन साम्ना पराचीनं गच्छन्तमग्निं विनिवारयामास। निवारणसाधनत्वादेव वारवन्तीयं नाम संपन्नम्। अभि प्र वः सुराधसमित्यस्यामृच्युत्पन्नं श्यैतं, तेन साम्ना तं निवारितमग्निं श्येती स्ववशो यथा भवति तथाऽकुरुत । श्येतीकरणसाधनत्वाच्छ्यैतमिति साम्नो नाम। तेन सामद्वयेन श्रोणिद्वयोपस्थाने सत्य[1]न्यत्र गमनं निवार्य स्वाधीनं करोति। सूत्रे तु शाखान्तरानुसारेण श्यैतस्थाने वामदेव्यमुक्तम् ॥

अथ पक्षसंध्युपस्थानाय सामान्तरं विधत्ते —

प्रजापतेर्हृदयेनापिपक्षं प्रत्युप तिष्ठते प्रेमाणमेवास्य गच्छति , इति।

ऋग्रहितेषु स्तो[2]भेषु यदुत्पन्नं साम प्रजापतेर्हृदयमिति नाम तेषु स्तो[3]भेष्वेतस्य[4] शब्दस्य[5] भावात्तेन पक्षसंध्युपस्थाने सत्यग्नेः प्रीतिं प्राप्नोति । एतस्योपस्थानस्य विकर्षणानन्तरभावित्वादश्मन्नूर्जमित्यस्मिन्ब्राह्मणानुवाके तदेतद्द्रष्टव्यम् ॥

यदुक्तं सूत्रकारेण—“ प्राच्या त्वा दिशा सादयामीति पञ्चाऽऽत्मेष्टकाः प्रतिदिशमेकां मध्ये ” इति, तदेतद्विधातुं मन्त्रानुत्पादयति—

प्राच्या त्वा दिशा सादयामि गायत्रेण छन्दसाऽग्निना देवतयाऽग्नेः शीर्ष्णाऽग्नेः शिर उप दधामि दक्षिणया त्वा दिशा सादयामि त्रैष्टुभेन छन्दसेन्द्रेण देवतयाऽग्नेः पक्षेणाग्नेः पक्षमुप दधामि प्रतीच्या त्वा दिशा सादयामि

१ क. घ. ङ. °त्यत्र। ख. °त्यस्य ग°। २ ख. घ. ङ. स्तोमेषु। ३ ख. घ. ङ. स्तोमेष्वे°। ४ ख. घ. ङ. °स्य सश°। ५ ख. °स्य सद्भावा°।

जागतेन छन्दसा सवित्रा देवतयाऽग्नेः पुच्छेनाग्नेः पुच्छमुप दधाम्युदीच्या त्वा दिशा सादयाम्यानुष्टुभेन छन्दसा मित्रावरुणाभ्यां देवतयाऽग्नेः पक्षेणाग्नेः पक्षमुप दधाम्यूर्ध्वया त्वा दिशा सादयामि पाङ्क्तेन छन्दसा बृहस्पतिना देवतयाऽग्नेः पृष्ठेनाग्नेः पृष्ठमुप दधामि, इति।

येयं प्राची दिग्यच्च गायत्रं छन्दो याऽप्यग्निरूपा देवता यदपि देवतात्मनोऽग्नेः शिरः, सर्वैः सहितोऽहं हे इष्टके त्वामस्य चीयमानस्याग्नेः शिरस्थान उपदधामि। एवमुत्तरेष्वपि योज्यम् ॥

इदानीमात्मेष्टका विधत्ते—

यो वा अपात्मानमग्निं चिनुतेऽपात्माऽमुष्मिँल्लोके भवति यः सात्मानं चिनुते सात्माऽमुष्मिँल्लोके भवत्यात्मेष्टका उप दधात्येष वा अग्नेरात्मा सात्मानमेवाग्निं चिनुते, इति।

आत्मा शरीरं तद्रहितमग्निं चिन्वानः स्वर्गे शरीररहितो भवति। सात्मकमग्निं चिन्वानस्तत्र सात्मक एव भवति। तस्मादात्मेष्टका उपदध्यात्। शिरःपक्षपुच्छरूपं शरीरमात्मा। तन्निष्पादकत्वादेता आत्मेष्टका एष शिरःप्रभृत्यवयवसंघ एवाग्नेः शरीरम्। तस्मादेतदुपधानेन सशरीरमग्निं चिनुते ॥

वेदनं प्रशंसति—

सात्माऽमुष्मिँल्लोके भवति य एवं वेद ॥, इति ॥

अथ मीमांसा।

सप्तमाध्यायस्य तृतीयपादे चतुर्दशाधिकरणे चिन्तितम्—

पृष्ठैरुपस्थितौ स्तोत्रधर्माः सन्ति न वाऽग्रिमः।
अग्निहोत्रनयान्मैवं मन्त्रोक्तेरात्मनेपदात् ॥

अग्निचयने श्रूयते—“ पृष्ठैरुपतिष्ठते ” इति। पृष्ठशब्दो ज्योतिष्टोमे माध्यंदिनसवनगतस्य स्तोत्रकर्मणो नामधेयमिति प्रथमाध्याये निर्णीतम्। सोऽग्निचयनगतोपस्थानकर्मणि प्रयुज्यमानोऽग्निहोत्रशब्दन्यायेन पृष्ठस्तोत्रधर्मानुपस्थानेऽतिदिशतीति चेन्मैवम्। अत्र पृष्ठशब्दस्य मन्त्रपरत्वेन कर्मपरत्वाभावात्। मास-

मग्निहोत्रं जुहोतीत्यत्राग्निहोत्रशब्दो जुहोतिधातुना समानाधिकृतः कर्मपरः । अत्रोपान्मन्त्रकरण इत्येतत्पाणिनीयसूत्रमुपशब्दयुक्तात्तिष्ठतिधातोरात्मनेपदं विदधत्तृतीयान्तस्य पृष्ठशब्दस्य मन्त्रात्मककरणपरतां दर्शयति । यद्यपि स्तोत्रकर्मवाची पृष्ठशब्दस्तथाऽपि तत्साधनभूतान्रथंतरादिसामोपेतानभि त्वा शूरेत्यादिमन्त्रानुपलक्षयति । न च लक्षणाश्रयणमेव दोष इति वाच्यं, त्वत्पक्षेऽप्याश्रयणीयत्वात् । किंच त्वत्पक्षे यथा नित्याग्निहोत्रवाचिनाऽग्निहोत्रशब्देन तद्धर्मानुपलक्ष्य तैश्च धर्मैस्तद्युक्तं मासाग्निहोत्रात्मकं कर्मान्तरं लक्ष्यते । तथा स्तोत्रवाचिना पृष्ठशब्देन तद्धर्मोपलक्षणद्वारेणोपस्थानरूपं कर्मान्तरं लक्षणीयमिति विप्रकृष्यते । तस्मात्पृष्ठशब्दो न स्तोत्रधर्मानतिदिशति । एतच्च ब्राह्मणं नक्षत्रेष्टकाब्राह्मणादूर्ध्वं द्रष्टव्यम् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये पञ्चमकाण्डे पञ्चमप्रपाठकेऽष्टमोऽनुवाकः ॥ ८ ॥

---

( अथ पञ्चमाष्टके पञ्चमप्रपाठके नवमोऽनुवाकः । )

---

अग्ने उदधे या त इषुर्युवा नाम तया नो मृड तस्यास्ते नमस्तस्यास्त उप जीवन्तो भूयास्माग्ने दुध्र गह्य किंशिल वन्य या त इषुर्युवा नाम तया नो मृड तस्यास्ते नमस्तस्यास्त उपजीवन्तो भूयास्म पञ्च वा एतेऽग्नयो यच्चितय उदधिरेव नाम प्रथमो दुध्रः (१) द्वितीयो गह्यस्तृतीयः किंशिलश्चतुर्थो वन्यः पञ्चमस्तेभ्यो यदाहुतीर्न जुहुयादध्वर्युं च यजमानं च प्र दहेयुर्यदेता आहुतीर्जुहोति भागधेयेनैवैनाञ्छमयति नाऽऽर्तिमा-

छैरयध्वर्युर्न यजमानो वाङ्म आसन्नसोः प्राणोऽक्ष्योश्चक्षुः कर्णयोः श्रोत्रं बाहुवोर्बलमूरुवोरोजोऽरिष्टा विश्वान्यङ्गानि तनूः (२) तनुवा मे सह नमस्ते अस्तु मा मा हिꣳसीरप वा एतस्मात्प्राणाः क्रामन्ति योऽग्निं चिन्वन्नधिक्रामति वाङ्म आसन्नसोः प्राण इत्याह प्राणानेवाऽऽत्मन्धत्ते यो रुद्रो अग्नौ यो अप्सु य ओषधीषु यो रुद्रो विश्वा भुवनाऽऽविवेश तस्मै रुद्राय नमो अस्त्वाहुतिभागा वा अन्ये रुद्रा हविर्भागाः (३) अन्ये शतरुद्रीयꣳ हुत्वा गावीधुकं चरुमेतेन यजुषा चरमायामिष्टकायां नि दध्याद्भागधेयेनैवैनꣳ शमयति तस्य त्वै शतरुद्रीयꣳ हुतमित्याहुर्यस्यैतदग्नौ क्रियत इति वसवस्त्वा रुद्रैः पुरस्तात्पान्तु पितरस्त्वा यमराजानः पितृभिर्दक्षिणतः पान्त्वादित्यास्त्वा विश्वैर्देवैः पश्चात्पान्तु द्युतानस्त्वा मारुतो मरुद्भिरुत्तरतः पातु (४) देवास्त्वेन्द्रज्येष्ठा वरुणराजानोऽधस्ताच्चोपरिष्टाच्च पान्तु न वा एतेन पूतो न मेध्यो न प्रोक्षितो यदेनमतः

प्राचीनं प्रोक्षति यत्संचितमाज्येन प्रोक्षति तेन पूतस्तेन मेध्यस्तेन प्रोक्षितः ( ५ ) ॥

( दुध्रस्तनूर्हविर्भागाः पातु द्वात्रिंशच्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां पञ्चमाष्टके पञ्चमप्रपाठके नवमोऽनुवाकः ॥ ९ ॥

---

( अथ पञ्चमाष्टके पञ्चमप्रपाठके नवमोऽनुवाकः । )

---

अग्ने । उदध इत्युद—धे । या । ते । इषुः । युवा । नाम । तया । नः । मृड । तस्याः । ते । नमः । तस्याः । ते । उपेति । जीवन्तः । भूयास्म । अग्ने । दुध्र । गह्य । किंशिल । वन्य । या । ते । इषुः । युवा । नाम । तया । नः । मृड । तस्याः । ते । नमः । तस्याः । ते । उपेति । जीवन्तः । भूयास्म । पञ्च । वै । एते । अग्नयः । यत् । चितयः । उदधिरित्युद—धिः । एव । नाम । प्रथमः । दुध्रः ( १ ) । द्वितीयः । गह्यः । तृतीयः । किंशिलः । चतुर्थः । वन्यः । पञ्चमः । तेभ्यः । यत् । आहुतीरित्या—हुतीः । न । जुहुयात् । अध्वर्युम् । च । यजमानम् । च । प्रेति । दहेयुः । यत् । एताः । आहुतीरित्या—हुतीः । जुहोति । भागधेयेनेति भाग—धेयेन । एव । एनान् । शमयति । न । आर्तिम् ।

एति। ऋच्छति। अध्वर्युः। न। यजमानः। वाक्। मे। आसन्। नसोः। प्राण इति प्र—अनः। अक्ष्योः। चक्षुः। कर्णयोः। श्रोत्रम्। बाहुवोः। बलम्। ऊरुवोः। ओजः। अरिष्टा। विश्वानि। अङ्गानि। तनूः (२)। तनुवा। मे। सह। नमः। ते। अस्तु। मा। मा। हिंसीः। अपेति। वै। एतस्मात्। प्राणा इति प्र—अनाः। क्रामन्ति। यः। अग्निम्। चिन्वन्। अधिक्रामतीत्यधि—कामति। वाक्। मे। आसन्। नसोः। प्राण इति प्र—अनः। इति। आह। प्राणानिति प्र—अनान्। एव। आत्मन्। धत्ते। यः। रुद्रः। अग्नौ। यः। अप्स्वित्यप्—सु। यः। ओषधीषु। यः। रुद्रः। विश्वा। भुवना। आविवेशेत्या—विवेश। तस्मै। रुद्राय। नमः। अस्तु। आहुतिभागा इत्याहुति—भागाः। वै। अन्ये। रुद्राः। हविर्भागा इति हविः—भागाः (३)। अन्ये। शतरुद्रीयमिति शत—रुद्रीयम्। हुत्वा। गावीधुकम्। चरुम्। एतेन। यजुषा। चरमायाम्। इष्टकायाम्। नीति। दध्यात्। भागधेयेनेति भाग—धेयेन। एव। एनम्। शमयति। तस्य। तु। वै। शतरुद्रीयमिति शत—रु-

द्रीयम् । हुतम् । इति । आहुः । यस्य । एतत् । अग्नौ । क्रियते । इति । वसवः । त्वा । रुद्रैः । पुरस्तात् । पान्तु । पितरः । त्वा । यमराजान इति यम—राजानः । पितृभिरिति पितृ—भिः । दक्षिणतः । पान्तु । आदित्याः । त्वा । विश्वैः । देवैः । पश्चात् । पान्तु । द्युतानः । त्वा । मारुतः । मरुद्भिरिति मरुत्—भिः । उत्तरत इत्युत्—तरतः । पातु ( ४ ) । देवाः । त्वा । इन्द्रज्येष्ठा इतीन्द्र—ज्येष्ठाः । वरुणराजान इति वरुण—राजानः । अधस्तात् । च । उपरिष्टात् । च । पान्तु । न । वै । एतेन । पूतः । न । मेध्यः । न । प्रोक्षित इति प्र—उक्षितः । यत् । एनम् । अतः । प्राचीनम् । प्रोक्षतीति प्र—उक्षति । यत् । संचितमिति सं—चितम् । आज्येन । प्रोक्षतीति प्र—उक्षति । तेन । पूतः । तेन । मेध्यः । तेन । प्रोक्षित इति प्र—उक्षितः ( ५ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे पञ्चमाष्टके पञ्चमप्रपाठके नवमोऽनुवाकः ॥ ९ ॥

---

( अथ पञ्चमकाण्डे पञ्चमप्रपाठके नवमोऽनुवाकः । )

---

आत्मेष्टकामुपस्थानमप्यष्टम उदीरितम् ।
अथ नवम आहुत्यादिकमभिधीयते ।

( आहुत्याद्यभिधानम् )

यदुक्तं सूत्रकारेण—" अग्न उदधे या त इषुर्युवा नामेति पञ्चाऽऽज्याहुतीर्हुत्वा " इति, तदिदं विधातुं मन्त्रानुत्पादयति—

अग्न उदधे या त इषुर्युवा नाम तया नो मृड तस्यास्ते नमस्तस्यास्त उप जीवन्तो भूयास्माग्ने दुध्र गह्य किंशिल वन्य या त इषुर्युवा नाम तया नो मृड तस्यास्ते नमस्तस्यास्त उपजीवन्तो भूयास्म, इति।

उदधिरिति कस्यचिदग्नेर्नाम। उदधिनामक हेऽग्ने ते त्वदीया येयमिषुर्युवा नाम, परशरीरे सहसा मिश्रणाद्युवेति बाणस्य नामधेयं, तया युवाभिधेयया नोऽस्मान्मृड सुखय। ते त्वदीयायास्तस्या इषोर्नमोऽस्तु। ते त्वदीयायास्तस्या इषोः प्रसादादुपजीवन्तः समीचीनजीवनयुक्ता भूयास्म। एवमुत्तरत्रापि योज्यम्। दुध्रादीनि चत्वार्यग्निविशेषनामानि। तैर्मन्त्रश्चतुर्धा भिद्यते। सर्वेषामप्यग्निशब्द आदावनुषज्यते। या त इषुरित्यादिरन्त्यानुषङ्गः॥

अथैतैर्मन्त्रैराहुतीर्विधत्ते—

पञ्च वा एतेऽग्नयो यच्चितय उदधिरेव नाम प्रथमो दुध्रो द्वितीयो गह्यस्तृतीयः किंशिलश्चतुर्थो वन्यः पञ्चमस्तेभ्यो यदाहुतीर्न जुहुयादध्वर्युं च यजमानं च प्र दहेयुर्यदेता आहुतीर्जुहोति भागधेयेनैवैनाञ्छमयति नाऽऽर्तिमार्छत्यध्वर्युर्न यजमानः, इति।

या एताः पञ्च चितय उपर्यधोभावेन निष्पादितास्ता एवोदध्यादिनामकाः पञ्चाग्नयः। तेषामाहुत्यभावेऽध्वर्युयजमानयोर्दाहः स्यात्। अतस्तत्परिहारायैतैर्मन्त्रैः पञ्चाऽऽज्याहुतीर्जुहुयात्। एतासां च वातनामाहुत्यनन्तरभावित्वादग्निर्देवेभ्य इत्यनुवाकान्ते तदेतद्ब्राह्मणं द्रष्टव्यम्॥

यदुक्तं सूत्रकारेण—" वाङ्म आसन्निति सर्वत्राऽऽरोहन्प्रत्यवरोहंश्च जपति सकृद्वाऽन्ततः " इति, तमेतं विधिमुन्नेतुं मन्त्रमुत्पादयति—

---

१ ख. °रोहान्प्र°। २ ख. °रोहांश्च।

वाङ्म आसन्नसोः प्राणोऽक्ष्योश्चक्षुः कर्णयोः श्रोत्रं बाहुवोर्बलमूरुवोरोजोऽरिष्टा विश्वान्यङ्गानि तनूस्तनुवा मे सह नमस्ते अस्तु मा मा हिꣳसीः, इति।

मे मदीया येयं वाक्सेयमासन्नास्ये मुखे सुस्थिता भवतु । नसोर्नासिकाछिद्रयोः प्राणः सुस्थितो भवतु । तथाऽक्षिगोलकयोश्चक्षुरिन्द्रियं, कर्णगोलकयोः श्रोत्रेन्द्रियम् । बाह्वोर्नानाविधव्यापारसामर्थ्यम् । ऊर्वोर्गमनसामर्थ्यम् । तथा विश्वान्यङ्गान्यरिष्टानि सर्वेऽप्यवयवा हिंसारहिता भवन्तु । तनूरवयवीभूतं शरीरमपि हिंसारहितमस्तु । मे तनुवा मदीयेन शरीरेण सह ते तुभ्यं नमः साष्टाङ्गदण्डप्रणामोऽस्तु । अतो मा मां त्वं मा हिंसीः ॥

अथ जपविधिमुन्नयति—

अप वा एतस्मात्प्राणाः क्रामन्ति योऽग्निं चिन्वन्नधिक्रामति वाङ्म आसन्नसोः प्राण इत्याह प्राणानेवाऽऽत्मन्धत्ते, इति।

यो यजमानोऽध्वर्युर्वाऽग्निचयनकाले चितमग्निमधिरुह्य पादेनाऽऽक्रामति, एतस्मात्प्राणाः सर्वेऽप्यपक्रामन्ति । अतः प्राणानां धारणाय मन्त्रे वगादीनां स्वस्थानावस्थितिरुच्यते । तस्मादिमं मन्त्रं जपेदिति विधिरभ्युन्नेयः । यदा त्वाहेतिपदमेव ब्रूयादितिलिङर्थे ब्रूते तदा प्रत्यक्ष एव विधिः।एतच्चाऽऽक्रमणेष्टकाब्राह्मणादूर्ध्वं द्रष्टव्यम् ॥

यदुक्तं सूत्रकारेण—" यो रुद्रो अग्नाविति रौद्रं गावीधुकं चरुमेतेन यजुषा यस्यामिष्टकायां शतरुद्रीयं जुहोति तस्यां प्रतिष्ठापयति " इति, तदिदं विधातुं मन्त्रमुत्पादयति—

यो रुद्रो अग्नौ यो अप्सु य ओषधीषु यो रुद्रो विश्वा भुवनाऽऽविवेश तस्मै रुद्राय नमो अस्तु, इति।

रुद्रदेवतारूपोऽग्निः । स च लौकिकेऽङ्गाररूपेऽग्नावुदकादिषु च प्रविश्य गूढो वर्तते, तस्मै नमोऽस्तु ॥

---

१ क. °तच्चाङ्क° ।

( आहुत्याद्यभिधानम् )
एतन्मन्त्रसाध्यं चरूपधानं विधत्ते—

आहुतिभागा वा अन्ये रुद्रा हविर्भागा अन्ये शतरुद्रीयꣳ हुत्वा गावीधुकं चरुमेतेन यजुषा चरमायामिष्टकायां नि दध्याद्भागधेयेनैवैनꣳ शमयति तस्य त्वै शतरुद्रीयꣳ हुतमि-त्याहुर्यस्यैतदग्नौ क्रियत इति, इति।

सहस्राणि सहस्रशो ये रुद्रा इत्युक्तत्वात्सन्त्यनेके रुद्रास्तेषां मध्ये केचिदाहुतिमेव भजन्ते तदर्थः शतरुद्रीयहोमः। अन्ये तु हविर्भजन्ते तदर्थमिमं गवीधुकधान्येन निष्पादितं चरुं निदध्यात्। उपधाने सति हविर्भाजमग्निं स्वभागेन शान्तं करोति। यस्य यजमानस्य चयने तदिदं चरूपधानं क्रियते तस्यैव शतरुद्रीयहोमः सफलो भवति। अन्यथा शतरुद्रीयं हुतमप्यफलं स्यादित्यभिज्ञा आहुः। एतच्च रुद्रो वा एष यदग्निरित्यनुवाके द्रष्टव्यम्॥

यदुक्तं सूत्रकारेण—"वसवस्त्वा रुद्रैः पुरस्तात्पान्त्विति यथालिङ्गं संचितमग्निमाज्येन प्रोक्षति मध्य उत्तमेन प्राङ्मुखः" इति, तदिदं विधातुं मन्त्रानुत्पादयति—

वसवस्त्वा रुद्रैः पुरस्तात्पान्तु पितरस्त्वा यम-राजानः पितृभिर्दक्षिणतः पान्त्वादित्यास्त्वा विश्वैर्देवैः पश्चात्पान्तु द्युतानस्त्वा मारुतो मरुद्भिरुत्तरतः पातु देवास्त्वेन्द्रज्येष्ठा वरुण-राजानोऽधस्ताच्चोपरिष्टाच्च पान्तु, इति।

य एतेऽष्टौ वसवः सन्ति ते रुद्रैरेकादशभिः सह हेऽग्ने त्वां पूर्वस्यां दिशि रक्षन्तु। यमो राजा येषां पितॄणां ते यमराजानस्तादृशाः पितरोऽन्यैः पितृभिः सार्धं दक्षिणस्यां दिशि पान्तु। ये द्वादशाऽऽदित्यास्ते विश्वैर्देवैः सार्धं पश्चात्पान्तु। यो द्युताननामकोऽधिकप्रकाशवान्कश्चिन्मरुतां स्वामी स सर्वैर्मरुद्गणैः सहोत्तरस्यां दिशि पातु। इन्द्रो ज्येष्ठो वयोगुणाभ्यामधिको येषां देवानां त इन्द्रज्येष्ठाः। वरुणो राजा येषामन्येषां देवानां ते वरुणराजानः। ते चोभयविधा देवा ऊर्ध्वाधोदिशोः पान्तु॥

अथ विधत्ते—

न वा एतेन पूतो न मेध्यो न प्रोक्षितो यदे-
नमतः प्राचीनं प्रोक्षति यत्संचितमाज्येन प्रो-
क्षति तेन पूतस्तेन मेध्यस्तेन प्रोक्षितः ॥, इति ॥

अतोऽस्मादाज्यप्रोक्षणात्प्राचीनं पूर्वमेव यदि सहस्रस्य प्रमा असीत्यादिमन्त्रेण हिरण्यशकलैः प्रोक्षेत्, तदानीमेतेन प्रोक्षणेन नायमग्निः पूतो नापि यज्ञयोग्यो भवति । किं बहुना प्रोक्षित एव न भवति । यदि संचितमग्निमाज्यद्रव्येणोक्तमन्त्रेण प्रोक्षेत्, इदानीं तेनैवाऽऽज्यप्रोक्षणेनाग्निः पूतो भवति, यज्ञयोग्यश्च भवति । सम्यक्प्रोक्षितश्च भवति । एतच्च साहस्रवता प्रोक्षतीति ब्राह्मणात्पूर्वं द्रष्टव्यम् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये पञ्चमकाण्डे पञ्चमप्रपाठके
नवमोऽनुवाकः ॥ ९ ॥

---

( अथ पञ्चमाष्टके पञ्चमप्रपाठके दशमोऽनुवाकः । )

---

समीची नामांसि प्राची दिक्तस्यांस्तेऽग्निरधिंपतिरसितो रंक्षिता यश्चाधिंपतिर्यश्चं गोप्ता ताभ्यां नमस्तौ नों मृडयतां ते यं द्विष्मो यश्च नो द्वेष्टि तं वां जम्भें दधाम्योजस्विनी नामांसि दक्षिणा दिक्तस्यांस्त इन्द्रोऽधिंपतिः पृदांकुः प्राची नामांसि प्रतीची दिक्तस्यांस्ते (१) सोमोऽधिंपतिः स्वजोऽवस्थावा नामास्युदींची दिक्तस्यांस्ते वरुणोऽधिंपतिस्तिर-

---

१ क. ख. ङ. च. °णादूर्ध्वमपूर्वं ।

श्वंराजिरधिंपत्नी नामांसि बृहती दिक्तस्यांस्ते
बृहस्पतिरधिंपतिः श्वित्रो वशिनो नामां-
सीयं दिक्तस्यांस्ते यमोऽधिंपतिः कल्माषं-
ग्रीवो रक्षिता यश्चाधिंपतिर्यश्चं गोप्ता ताभ्यां
नमस्तौ नों मृडयतां ते यं द्विष्मो यश्चं
( २ ) नो द्वेष्टि तं वां जम्भें दधाम्येता
वै देवतां अग्निं चितꣳ रंक्षन्ति ताभ्यो
यदाहुंतीर्न जुंहुयादंध्वर्युं च यजंमानं च
ध्यायेयुर्यदेता आहुंतीर्जुहोतिं भागधेयेनैवैनां-
ञ्छमयति नाऽऽर्तिमार्छंत्यध्वर्युर्न यजंमानो हेत-
यो नामं स्थ तेषां वः पुरो गृहा अग्निर्वं इषं-
वः सलिलो निंलिम्पा नामं ( ३ ) स्थ तेषां
वो दक्षिणा गृहाः पितरों व इषंवः सगरो
वज्रिणो नामं स्थ तेषां वः पश्चाद्गृहाः
स्वप्नों व इषंवो गह्वंरोऽवस्थावांनो नामं स्थ
तेषां व उत्तराद्गृहा आपों व इषंवः समु-
द्रोऽधिंपतयो नामं स्थ तेषां व उपरिं गृहा
वर्षं व इषवोऽवंस्वान्क्रव्या नामं स्थ पार्थिं-
वास्तेषां व इह गृहाः ( ४ ) अन्नं व इषं-
वो निमिषो वांतनामं तेभ्यों वो नमस्ते नों

मृडयत ते यं द्विष्मो यश्च नो द्वेष्टि तं वो जम्भे दधामि हुतादो वा अन्ये देवा अहुतादोऽन्ये तानग्निचिदेवोभयान्प्रीणाति दध्ना मधुमिश्रेणैता आहुतीर्जुहोति भागधेयेनैवै-नान्प्रीणात्यथो खल्वाहुरिष्टका वै देवा अहु-ताद इति (५) अनुपरिक्रामं जुहोत्यपरिवर्ग-मेवैनान्प्रीणातीमꣳ स्तनमूर्जस्वन्तं धयापां प्र-प्यातमग्ने सरिरस्य मध्ये । उत्सं जुषस्व मधु-मन्तमूर्व समुद्रियꣳ सदनमा विशस्व । यो वा अग्निं प्रयुज्य न विमुञ्चति यथाऽश्वो युक्तोऽ-विमुच्यमानः क्षुध्यन्पराभवत्येवमस्याग्निः परा भवति तं पराभवन्तं यजमानोऽनु परा भवति सोऽग्निं चित्वा लूक्षः (६) भवतीमꣳ स्तन-मूर्जस्वन्तं धयापामित्याज्यस्य पूर्णाꣳ स्रुचं जुहो-त्येष वा अग्नेर्विमोको विमुच्यैवास्मा अन्नमपि दधाति तस्मादाहुर्यश्चैवं वेद यश्च न सुधायꣳ ह वै वाजी सुहितो दधातीत्यग्निर्वाव वाजी तमेव तत्प्रीणाति स एनं प्रीतः प्रीणाति वसी-यान्भवति (७) ॥

( प्रतीची दिक्तस्यांस्ते द्विष्मो यश्चं निलिम्पा नामेह गृहा इतिं लूक्षो वसीयान्भवति। )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां पञ्चमाष्टके पञ्चमप्रपाठके दशमोऽनुवाकः ॥ १० ॥

---

( अथ पञ्चमाष्टके पञ्चमप्रपाठके दशमोऽनुवाकः । )

---

समीचीं । नामं । असि । प्राचीं । दिक् । तस्यांः । ते । अग्निः । अधिंपतिरित्यधिं—पतिः । असितः । रक्षिता । यः । च । अधिंपतिरित्यधिं—पतिः । यः । च । गोप्ता । ताभ्यांम् । नमंः । तौ । नः । मृडयताम् । ते । यम् । द्विष्मः । यः । च । नः । द्वेष्टिं । तम् । वाम् । जम्भें । दधामि । ओजस्विनीं । नामं । असि । दक्षिणा । दिक् । तस्यांः । ते । इन्द्रः । अधिंपतिरित्यधिं—पतिः । पृदांकुः । प्राचीं । नामं । असि । प्रतीचीं । दिक् । तस्यांः । ते (१) । सोमंः । अधिंपतिरित्यधिं—पतिः । स्वज इतिं स्व—जः । अवस्थावेत्यंव—स्थावां । नामं । असि । उदींची । दिक् । तस्यांः । ते । वरुंणः । अधिंपतिरित्यधिं—पतिः । तिरश्चंराजिरितिं तिरश्चं—राजिः । अधिंपत्नीत्यधिं—पत्नी । नामं । असि । बृहती । दिक् । तस्यांः । ते । बृहस्पतिंः । अधिंपतिरित्य-

धि—पतिः । श्वित्रः । वशिनी । नाम । असि । इयम् । दिक् । तस्याः । ते । यमः । अधि-पतिरित्यधि—पतिः । कल्माषग्रीव इति कल्मा-ष—ग्रीवः । रक्षिता । यः । च । अधिप-तिरित्यधि—पतिः । यः । च । गोप्ता । ताभ्याम् । नमः । तौ । नः । मृडयताम् । ते । यम् । द्विष्मः । यः । च ( २ ) । नः । द्वेष्टि । तम् । वाम् । ज-म्भे । दधामि । एताः । वै । देवताः । अग्निम् । चितम् । रक्षन्ति । ताभ्यः । यत् । आहुतीरित्या—हुतीः । न । जुहुयात् । अध्वर्युम् । च । यजमानम् । च । ध्यायेयुः । यत् । एताः । आहुतीरित्या—हुतीः । जुहोति । भागधेयेनेति भाग—धेयेन । एव । एनान् । शमयति । न । आर्तिम् । एति । ऋ-च्छाति । अध्वर्युः । न । यजमानः । हेतयः । नाम । स्थ । तेषाम् । वः । पुरः । गृहाः । अग्निः । वः । इषवः । सलिलः । निलिम्पा इति नि—लिम्पाः । नाम ( ३ ) । स्थ । तेषाम् । वः । दक्षिणा । गृहाः । पितरः । वः । इषवः । सगरः । वज्रिणः । नाम । स्थ । तेषाम् । वः । पश्चात् । गृहाः । स्वप्नः । वः । इषवः । गह्वरः । अवस्थावान इत्यव—स्थावानः ।

नामं । स्थ । तेषांम् । वः । उत्तरादित्युंत्—तरात् । गृहाः । आपः । वः । इषंवः । समुद्रः । अधिंपतय इत्यधिं—पतयः । नामं । स्थ । तेषांम् । वः । उपरिं । गृहाः । वर्षम् । वः । इषंवः । अवंस्वान् । क्रव्याः । नामं । स्थ । पार्थिवाः । तेषांम् । वः । इह । गृहाः । ( ४ ) । अन्नंम् । वः । इषंवः । निमिष इतिं नि—मिषः । वातनाममितिं वात—नामम् । तेभ्यंः । वः । नमंः । ते । नः । मृडयत । ते । यम् । द्विष्मः । यः । च । नः । द्वेष्टिं । तम् । वः । जम्भें । दधामि । हुताद इतिं हुत—अदंः । वै । अन्ये । देवाः । अहुताद इत्यंहुत—अदंः । अन्ये । तान् । अग्निचिदित्यंग्नि—चित् । एव । उभयांन् । प्रीणाति । दध्ना । मधुमिश्रेणेतिं मधु—मिश्रेणं । एताः । आहुंतीरित्या—हुतीः । जुहोति । भागधेयेनेतिं भाग—धेयेंन । एव । एनान् । प्रीणाति । अथो इतिं । खलुं । आहुः । इष्टंकाः । वै । देवाः । अहुताद इत्यंहुत—अदंः । इतिं (५) । अनुपरिक्राममित्यंनु—परिक्रामंम् । जुहोति । अपंरिवर्गमित्यपंरि—वर्गम् । एव । एनान् । प्रीणाति । इमम् । स्तनंम् । ऊर्जस्वन्तम् । धय । अपाम् । प्रप्यांतमिति प्र—

प्यातम् । अग्ने । सरिरस्यं । मध्ये । उत्सम् । जुषस्व । मधुमन्तामिति मधु—मन्तम् । ऊर्व । समुद्रियम् । सदनम् । एतिं । विशस्व । यः । वै । अग्निम् । प्रयुज्येतिं प्र—युज्यं । न । विमुञ्चतीतिं वि—मुञ्चतिं । यथां । अश्वः । युक्तः । अविमुच्यमान इत्यविं—मुच्यमानः । क्षुध्यन् । पराभवतीतिं परा—भवंति । एवम् । अस्य । अग्निः । परेतिं । भवति । तम् । पराभवन्तमितिं परा—भवन्तम् । यजमानः । अनुं । परेतिं । भवति । सः । अग्निम् । चित्वा । लूक्षः ( ६ ) । भवति । इमम् । स्तनम् । ऊर्जस्वन्तम् । धय । अपाम् । इतिं । आज्यस्य । पूर्णाम् । स्रुचम् । जुहोति । एषः । वै । अग्नेः । विमोक इतिं वि—मोकः । विमुच्येतिं वि—मुच्यं । एव । अस्मै । अन्नम् । अपीतिं । दधाति । तस्मात् । आहुः । यः । च । एवम् । वेदं । यः । च । न । सुधायमितिं सु—धायम् । ह । वै । वाजी । सुहित इति सु—हितः । दधाति । इतिं । अग्निः । वाव । वाजी । तम् । एव । तत् । प्रीणाति । सः । एनम् । प्रीतः । प्रीणाति । वसीयान् । भवति ( ७ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे पञ्चमाष्टके पञ्चमप्रपाठके दशमोऽनुवाकः ॥ १० ॥

( अथ पञ्चमकाण्डे पञ्चमप्रपाठके दशमोऽनुवाकः । )

---

आज्याहुतीः(तिः) प्रोक्षणं चेत्यादिकं नवमे श्रुतम् ।
अथ दशमे सर्पाहुत्यादिकमुच्यते ।

यदुक्तं सूत्रकारेण—" समीची नामासि प्राची दिगिति दध्ना मधुमिश्रेण षड्सर्पाहुतीरनुपरिचारम् " इति, तदेतद्विधातुं मन्त्रानुत्पादयति—

समीची नामासि प्राची दिक्तस्यास्तेऽग्निरधिपतिरसितो रक्षिता यश्चाधिपतिर्यश्च गोप्ता ताभ्यां नमस्तौ नो मृडयतां ते यं द्विष्मो यश्च नो द्वेष्टि तं वां जम्भे दधाम्योजस्विनी नामासि दक्षिणा दिक्तस्यास्त इन्द्रोऽधिपतिः पृदाकुः प्राची नामासि प्रतीची दिक्तस्यास्ते सोमोऽधिपतिः स्वजोऽवस्थावा नामास्युदीची दिक्तस्यास्ते वरुणोऽधिपतिस्तिरश्चराजिरधिपत्नी नामासि बृहती दिक्तस्यास्ते बृहस्पतिरधिपतिः श्वित्रो वशिनी नामासीयं दिक्तस्यास्ते यमोऽधिपतिः कल्माषग्रीवो रक्षिता यश्चाधिपतिर्यश्च गोप्ता ताभ्यां नमस्तौ नो मृडयतां ते यं द्विष्मो यश्च नो द्वेष्टि तं वां जम्भे दधामि, इति ।

येयं प्राची दिक्तस्याः समीचीति नामधेयं, सम्यगञ्चतीति प्रातःकालानुष्ठानार्थं प्रवर्तत इति व्युत्पत्तेः । हे प्राची( चि ) त्वं समीच्यभिधाऽसि । तस्यास्तादृश्या अग्निर्देवः स्वामी । असितः कृष्णसर्पः । स च तव रक्षिता । ताभ्यामधिपतिरक्षितृभ्यां नमोऽस्तु । तावुभौ नोऽस्मान्मृडयतां सुखयताम् । ते सुखिनो वयं यं पुरुषमस्मान्हिंसितुं प्रवर्तमानं द्विष्मः, यश्च शत्रुरस्मानुदासीनानपि द्वेष्टि तं द्विविधं शत्रुं वां युवयोरधिपतिरक्षित्रोर्जम्भे विदारितास्ये दधामि स्थापयामि । एवमुत्तरत्रापि योज्यम् । ओजस्विनी बलवतीति दाक्षि-

णदिशो नाम । पृदाकुरजगरः सर्पः । रक्षितेत्यादिशेषोऽनुषज्यते । प्रकर्षेणाञ्चतीति सायंसंध्याद्यनुष्ठानाय प्रवर्तत इति पश्चिमदिशः प्राचीति नामधेयम् । स्वस्मिञ्जायत इति स्वजः स्वाधीनबलः सर्पः । मनुष्यानवस्थापयतीति व्युत्पत्त्याऽवस्थावेत्युदग्दिशो नाम । तिरश्चीनाः कटकवलयाकारा राजयो रेखा यस्य सर्पस्यासौ तिरश्चराजिः । अधिपालयतीति व्युत्पत्त्याऽधिपत्नीत्यूर्ध्वदिशो नाम । प्रौढत्वाद्बृहती । श्वित्रो यस्य सर्पस्य श्वासधारणेन स्वशरीर उच्छूनता भवति । दशनेन मनुष्यशरीरेऽप्युच्छूनता भवति सोऽयं श्वित्रः । वशः प्राणिनामवस्थातुं स्वाधीनताऽस्यामस्तीति वशिनी । एतच्च भूमिरूपाया अधोदिशो नाम । कल्माषाः कृष्णबिन्दवो ग्रीवायां यस्य सर्पस्य सोऽयं कल्माषग्रीवः । रक्षितेत्यादेः सर्पस्य वाचकेभ्यः शब्देभ्य ऊर्ध्वमनुषङ्गद्योतनायान्तिममन्त्रे पुनः पाठः ॥

एतन्मन्त्रसाध्या आहुतीर्विधत्ते—

एता वै देवता अग्निं चितꣳ रक्षन्ति ताभ्यो यदाहुतीर्न जुहुयादध्वर्युं च यजमानं च ध्यायेयुर्यदेता आहुतीर्जुहोति भागधेयेनैवैनाञ्छमयति नाऽऽर्तिमार्छत्यध्वर्युर्न यजमानः, इति ।

एता अग्नीन्द्राद्यधिपतिरूपा असितादिसर्परूपाश्च देवता इष्टकाभिश्चितमग्निं रक्षन्ति अतश्चाऽऽसां शान्त्यै जुहुयात् ॥

यदुक्तं सूत्रकारेण "हेतयो नाम स्थेति षण्महाहुतीर्यथा सर्पाहुतीः" इति, तदेतद्विधातुं मन्त्रानुत्पादयति—

हेतयो नाम स्थ तेषां वः पुरो गृहा अग्निर्व इषवः सलिलो निलिम्पा नाम स्थ तेषां वो दक्षिणा गृहाः पितरो व इषवः सगरो वज्रिणो नाम स्थ तेषां वः पश्चाद्गृहाः स्वप्नो व इषवो गह्वरोऽवस्थावानो नाम स्थ तेषां व उत्तराद्गृहा आपो व इषवः समुद्रोऽधिपतयो नाम स्थ तेषां व उपरि गृहा वर्षं व इषवोऽवस्वा-

न्क्रव्या नाम स्थ पार्थिवास्तेषां व इह गृहा अन्नं व इषवो निमिषो वातनामं तेभ्यो वो नमस्ते नो मृडयत ते यं द्विष्मो यश्च नो द्वेष्टि तं वो जम्भे दधामि , इति।

हेतयः शत्रूणां ग( ह )न्तारो हे गन्धर्वविशेषा यूयं हेतिनामकाः स्थ। तेषां युष्माकं पूर्वस्यां दिशि गृहा वर्तन्ते। अग्निर्युष्माकमिषवोऽग्निसमाना इत्यर्थः। सलिलो वायुविशेषः। चरममन्त्रे पठितं वातनामामित्यादिकं सर्वेष्वपि मन्त्रेष्व-ष्वनुषज्यते।पूर्वस्यां दिशि संचरतो वायोः सलिल इति नामधेयम्। तेभ्यो वो नम इत्यादिकं विस्पष्टम्। नितरां चन्दनेनानुलिप्ता ये गन्धर्वास्तेषां निलिम्पा इति नामधेयम्। पितरः पितृसमानाः। सगर इति तत्र स्थितस्य नामधेयम्। वज्रं येषामस्तीति वज्रिणः। तदेतद्गन्धर्वनाम। स्वप्नः स्वप्नसमानाः। यथा स्वप्ने किंचिदप्यसाध्यं नास्त्येवमेतासामिषूणामित्यर्थः। गह्वर इति वायोर्नाम। अवस्था स्थितिरवस्थानमेषामस्तीत्यवस्थावानः। तदेतद्गन्धर्वनाम। आप उदकसमानाः। जलवत्सर्वदा प्रसरन्तीत्यर्थः। समुद्र इति वायोर्नाम। अधिकं पालयन्तीत्यधिपतयः। वर्षं वृष्टिसमाना निरन्तरं पतन्तीत्यर्थः। अव-स्वानिति वायोर्नाम। क्रव्या मांसप्रियाः। तदेतद्गन्धर्वनाम। ते च पार्थिवाः पृथिव्यां वर्तन्ते। इह भूमौ। अन्नमन्नहेतवः। निमिष इति वायोर्नाम॥

एतैर्मन्त्रैः साध्यं होमं विधत्ते--

हुतादो वा अन्ये देवा अहुतादोऽन्ये तानग्निचिद्देवोभयान्प्रीणाति दध्ना मधुमिश्रेणैता आहुतीर्जुहोति भागधेयेनैवैनान्प्रीणात्यथो खल्वाहुरिष्टका वै देवा अहुताद इत्यनुपरिक्रामं जुहोत्यपरिवर्गमेवैनान्प्रीणाति , इति।

पूर्वं नृषदे वडित्यनुवाके दध्ना मधुमिश्रेणावोक्षणमहुतभक्षकदेवप्रीत्यर्थ-मुक्तम्। इह तु हुतभक्षकदेवप्रीत्यर्थं तेनैव द्रव्येण होम उच्यते। अपि चैकेऽभिज्ञा एवमाहुः—इष्टका एवाहुतादो देवास्तत्र होमेन हुतभक्षकाणां प्रीताव्प्येतासामिष्टकानां प्रीत्यर्थं होमकालेऽनुक्रमेण परितः क्रमणीयं, तेनैव परिक्रमणेन कमपि देवमवर्जयित्वा सर्वानप्येतान्वतो देवान्प्रीणाति। तदेवं होमे-

नानुपरिक्रमणेन च हुतादामहुतादां च सर्वेषां प्रीतिरुपपद्यते। तदिदं सर्पाहुतिमहाहुतिब्राह्मणं वातनामहोमब्राह्मणादूर्ध्वं द्रष्टव्यम् ॥

यदुक्तं सूत्रकारेण—"अनूबन्ध्यावपायां हुतायामौदुम्बरीं स्रुचं घृतस्य पूरयित्वेमꣳ स्तनमूर्जस्वन्तं धयापामित्यग्नेर्विमोकं जुहोति" इति, तदिदं विधातुं मन्त्रमुत्पादयति—

इमꣳ स्तनमूर्जस्वन्तं धयापां प्रप्यातमग्ने सरिरस्य मध्ये। उत्सं जुषस्व मधुमन्तमूर्व समुद्रियꣳ सदनमा विशस्व।, इति।

हेऽग्न इमं स्रुच्यवस्थितं द्रव्यविशेषं धय पिब। कीदृशमपां मातृस्थानीयानां स्तनं स्तनस्थानीयं, घृतस्य गोद्वारोदककार्यत्वात्तदीयस्तनत्वोपचारः। ऊर्जस्वन्तं रसवन्तं, प्रप्यातमतिप्रवृद्धं सरिरस्य मध्ये यथा जलस्य मध्य उत्सं प्रवाहशक्तिस्तथा प्रभूतं घृतं, मधुमन्तं माधुर्योपेतं जुषस्व सेवस्व। हे ऊर्व विस्तृताग्ने समुद्रियं समुद्रसंबन्धि सदनं तदीयस्थानमाविशस्व प्रविश ॥

एतेन मन्त्रेण साध्यं होमं विधत्ते—

यो वा अग्निं प्रयुज्य न विमुञ्चति यथाऽश्वो युक्तोऽविमुच्यमानः क्षुध्यन्पराभवत्येवमस्याग्निः परा भवति तं पराभवन्तं यजमानोऽनु परा भवति सोऽग्निं चित्वा लूक्षो भवतीमꣳ स्तनमूर्जस्वन्तं धयापामित्याज्यस्य पूर्णाꣳ स्रुचं जुहोत्येष वा अग्नेर्विमोको विमुच्यैवास्मा अन्नमपि दधाति, इति।

यो यजमानोऽग्निं युनज्मीत्यादिभिर्मन्त्रैरेतमग्निं कर्मणि प्रयुज्य न विमुञ्चेदस्य यजमानस्याग्निः पराभवति विनश्यति। यथा लोकेऽश्वो रथे युज्यमानश्चिरमविमुच्यमानः क्षुधाक्रान्तः पराभूतः पीडितो भवति तद्वदग्निपराभवमनु यजमानोऽपि पराभवति। तादृशोऽग्निं चित्वा लूक्षः सर्वदा रूक्षो दाहोपेतो भवत्यतो जुहुयात्। एष च होमोऽग्नेर्विमोकः। ततोऽग्निं विमुच्यास्मा अन्नं समर्पितवान्भवति ॥

---

१ ख. च. °मन्त्रा°। २ क. ख. घ. ङ. अनुब° ३ ख. घ. ङ. च. °चं पू°।

( सर्पाहुत्याद्यभिधानम् )

पुनः प्रकारान्तरेण प्रशंसति—

तस्मादाहुर्यश्चैवं वेद यश्च न सुधायꣳ ह वै वाजी सुहितो दधातीत्यग्निर्वाव वाजी तमेव तत्प्रीणाति स एनं प्रीतः प्रीणाति वसीयान्भवति ॥, इति ॥

यस्मादत्राग्निं विमुच्यान्नं प्रदीयते तस्मात्कारणाल्लोके यश्च पुरुष एन(व)मग्निवृत्तान्तं जानाति, यश्च न जानाति, तादृशाः सर्वेऽप्येवमाहुः सुहितः सुष्ठु खाद्यादिना तृप्तो वाजी सुधायं स्वस्योपरि धारणीयं पुरुषं पुनः पुनर्धारयित्वा गन्तव्यस्थले नीत्वा दधाति स्थापयतीति। अत्र हशब्द आबालगोपालप्रसिद्धिं दर्शयति। एवं लौकिकोक्तौ सत्यामत्राप्यग्निरेव वाजस्थानीयः। तमेवाग्निं तत्तेन विमोकहोमेन प्रीणाति। स च प्रीतोऽग्निरेनं यजमानं प्रीणयति। स च यजमानोऽतिशयेन धनवान्भवति। एतस्य च ब्राह्मणस्याऽऽम्नातेष्वनुवाकेष्वन्तर्भावासंभवादन्ते निवेशः। एवमन्यस्यापि तादृशस्य द्रष्टव्यम् ॥

अत्र मीमांसा।

एकादशाध्यायस्य तृतीयपादे नवमाधिकरणे चिन्तितम्—

किमग्निमोकः सर्वान्ते मुख्यान्ते वाऽग्रिमो यतः।
योगे सर्वार्थता मैवं मुख्यार्थोऽसौ तदन्तिमः ॥

अग्निचयने योगविमोकावग्नेः श्रूयेते। अग्निं युनज्मीति मन्त्रहोमो योगः। इमं स्तनमिति मन्त्रहोमो विमोकः। स च साङ्गप्रधानविषयसर्वप्रयोगान्ते कर्तव्यः। कुतः। योगस्य सर्वार्थत्वेन मध्ये तद्विमोकासंभवादिति प्राप्ते ब्रूमः—पञ्चभिर्युनक्ति पाङ्क्तो यज्ञो यावानेव यज्ञस्तमाप्नोतीत्यनेन[1] योजने[2] यज्ञप्राप्तिवचनेन योगस्य प्रधानार्थत्वावगमात्प्रधानकर्मणोऽन्ते विमोकं कुर्यात् ॥

तत्रैव वार्तिककारमतेन चिन्तितम्—

व्यत्यस्तौ तावुभौ पक्षावुत्पत्तावविशेषतः ॥
सर्वार्थत्वं गुणे भाति सर्वान्ते तद्विमोचनम्[3]।

प्रधानान्ते विमोक इति यो भाष्ये सिद्धान्तः स एवात्र पूर्वः पक्षः। अग्निं युजज्मि शवसा घृतेनेति जुहोत्यग्निमेव तद्युनक्तीत्येतद्योगस्योत्पत्तिवाक्यम्। पञ्चभिर्युनक्तीति गुणविधिः। तत्र न तावदुत्पत्तौ प्रधानगामी योग इत्यस्या-

१ क. घ. ङ. °ख्यार्थस्य तदाप्तितः। अ°। २ ख. घ. ङ. °न य°। ३ च. मोचने।

र्थस्य गमको विशेषोऽस्ति । गुणविधिशेषेऽपि यज्ञशब्दो न प्रधानमात्रमाचष्टे, किंतु साङ्गम् । तस्माद्यागस्य सर्वार्थत्वाद्विमोकोऽपि सर्वान्ते कर्तव्य इति ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये पञ्चमकाण्डे पञ्चमप्रपाठके दशमोऽनुवाकः ॥ १० ॥

---

( अथ पञ्चमाष्टके पञ्चमप्रपाठक एकादशोऽनुवाकः । )

---

इन्द्राय राज्ञे सूकरो वरुणाय राज्ञे कृष्णो यमाय राज्ञ ऋश्यं ऋषभाय राज्ञे गवयः शार्दूलाय राज्ञे गौरः पुरुषराजाय मर्कटः क्षिप्रश्येनस्य वर्तिका नीलङ्गोः क्रिमिः सोमस्य राज्ञः कुलुङ्गः सिन्धोः शिंशुमारो हिमवतो हस्ती ( १ ) ॥

( इन्द्रायाष्टाविंशतिः । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां पञ्चमाष्टके पञ्चमप्रपाठक एकादशोऽनुवाकः ॥ ११ ॥

---

( अथ पञ्चमाष्टके पञ्चमप्रपाठक एकादशोऽनुवाकः । )

---

इन्द्राय । राज्ञे । सूकरः । वरुणाय । राज्ञे । कृष्णः । यमाय । राज्ञे । ऋश्यः । ऋषभाय । राज्ञे । गवयः । शार्दूलाय । राज्ञे । गौरः । पुरुषराजायेति पुरुष—राजाय । मर्कटः । क्षिप्रश्येनस्येति क्षिप्र—श्येनस्य । वर्तिका । नीलङ्गोः । क्रिमिः । सोमस्य ।

राज्ञः। कुलुङ्गः। सिन्धोः। शिंशुमारः। हिमवत इति हिम—वतः। हस्ती (१)॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे पञ्चमाष्टके पञ्चमप्रपाठक एकादशोऽनुवाकः॥ ११॥

(अथ पञ्चमकाण्डे पञ्चमप्रपाठक एकादशोऽनुवाकः।)

सर्पाहुतिर्महाहोमो मोकश्च दशमे श्रुताः।

अथाग्निशेषमवस्थाप्याश्वमेधशेषभूता एकादशिनः पशवो विधीयन्ते। एकादशानां पशूनां समूह एकादशिनी। सा चैकैकस्मिन्ननुवाक एकैका विधीयते। तत्र प्रथमामेकादशिनीमाह—

इन्द्राय राज्ञे सूकरो वरुणाय राज्ञे कृष्णो यमाय राज्ञ ऋश्य ऋषभाय राज्ञे गवयः शार्दूलाय राज्ञे गौरः पुरुषराजाय मर्कटः क्षिप्रश्येनस्य वर्तिका नीलङ्गोः क्रिमिः सोमस्य राज्ञः कुलुङ्गः सिन्धोः शिंशुमारो हिमवतो हस्ती॥, इति॥

अत्र चतुर्थ्या षष्ठ्या तद्धितेन च देवतासंबन्धः प्रतिपाद्यते। इन्द्राय देवानां राज्ञे सूकरो वराह आलभ्यते। वरुणायापां राज्ञे कृष्णः कृष्णमृगः। यमाय धर्माणां राज्ञ ऋश्यो मृगविशेषः। ऋषभाय गवां राज्ञे गवयो गोसदृशः सास्नारहितः। शार्दूलायाऽऽरण्यानां राज्ञे गौरो गौरमृगः, रक्त इत्येके, शुक्ल इत्यन्ये। पुरुषाणां राज्ञे प्रधानाय मर्कटो वानरः। क्षिप्रश्येनस्य क्षिप्रगतेः शकुनिराजस्य श्येनविशेषस्य वर्तिका चटकासदृशी। नीलङ्गोर्नीलप्रभस्य सर्पविशेषस्य सरीसृपाणां राज्ञे क्रिमिर्गोमयपिण्डकारी। सोमस्यौषधीनां राज्ञः कुलुङ्गश्चित्रकः कटुकस्वरः। सिन्धोः समुद्रस्य शिंशुमारो ग्राहः। हिमवतः पर्वतानां राज्ञो हस्ती गजः॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये पञ्चमकाण्डे पञ्चमप्रपाठक एकादशोऽनुवाकः॥ ११॥

( अथ पञ्चमाष्टके पञ्चमप्रपाठके द्वादशोऽनुवाकः । )

---

मयुः प्राजापत्य ऊलो हलींक्ष्णो वृषदंशस्ते धातुः सरस्वत्यै शारिः श्येता पुरुषवाक्सरस्वते शुकः श्येतः पुरुषवागारण्योऽजो नकुलः शका ते पौष्णा वाचे क्रौञ्चः ( १ ) ॥

( मयुस्त्रयोविंशतिः । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां पञ्चमाष्टके पञ्चमप्रपाठके द्वादशोऽनुवाकः ॥ १२ ॥

---

( अथ पञ्चमाष्टके पञ्चमप्रपाठके द्वादशोऽनुवाकः । )

---

मयुः । प्राजापत्य इति प्राजा—पत्यः । ऊलः । हलींक्ष्णः । वृषदंशः । ते । धातुः । सरस्वत्यै । शारिः । श्येता । पुरुषवागिति पुरुष—वाक् । सरस्वते । शुकः । श्येतः । पुरुषवागिति पुरुष—वाक् । आरण्यः । अजः । नकुलः । शका । ते । पौष्णाः । वाचे । क्रौञ्चः ( १ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे पञ्चमाष्टके पञ्चमप्रपाठके द्वादशोऽनुवाकः ॥ १२ ॥

---

( अथ पञ्चमकाण्डे पञ्चमप्रपाठके द्वादशोऽनुवाकः । )

---

अथात्र दशिनीमाह—

मयुः प्राजापत्य ऊलो हलीक्ष्णो वृषदंशस्ते

( अश्वमेधशेषभूततृतीयपशुसंघविधिः । )

धातुः सरस्वत्यै शारिः श्येता पुरुषवाक्सरस्वते शुकः श्येतः पुरुषवागारण्योऽजो नकुलः शका ते पौष्णा वाचे क्रौञ्चः ॥, इति ॥

मयुः किंपुरुष इत्येके। अरण्यमयूर इत्यपरे। स प्राजापत्यः । ऊलादयस्त्रयो धातुः। ऊलः काकः। उलूक इत्यन्ये। दिव्यकर्ण इत्यपरे । ह्लीक्ष्णस्तृणहिंसक इत्येके। हरितचटक इत्यन्ये । वृषदंशो मार्जारः। तत्सदृश इत्येके। सरस्वत्यै शारिः शुकस्त्री। कीदृशी, श्येताऽऽरक्तवर्णा । पुनश्च विशेष्यते—पुरुषवाक्पुरुषवद्वदितुं समर्था। सरस्वते शुकः श्येतः पुरुषवाक् । पूर्ववद्व्याख्येयम्। आरण्याजादयस्त्रयः पौष्णाः। आरण्योऽजः शरभः। नकुलः प्रसिद्धः। शका मक्षिकेत्येके। दीर्घकर्णो मृगविशेष इत्यन्ये। वाचे वाग्देवतायै क्रौञ्चो दारुणस्वनः पक्षिविशेषः॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये पञ्चमकाण्डे पञ्चमप्रपाठके द्वादशोऽनुवाकः ॥ १२ ॥



---

( अथ पञ्चमाष्टके पञ्चमप्रपाठके त्रयोदशोऽनुवाकः । )

---

अपां नप्त्रे जषो नाक्रो मकरः कुलीकयस्तेऽकूपारस्य वाचे पैङ्गराजो भगाय कुषीतक आती वाहसो दर्विदा ते वायव्या दिग्भ्यश्चक्रवाकः ( १ ) ॥

( अपामेकान्नविंशतिः । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां पञ्चमाष्टके पञ्चमप्रपाठके त्रयोदशोऽनुवाकः ॥ १३ ॥

---

१ क. ख. च. °ताऽर°।

( अथ पञ्चमाष्टके पञ्चमप्रपाठके त्रयोदशोऽनुवाकः । )

---

अपाम् । नप्त्रे । जषः । नाक्रः । मकरः । कुलीकयः । ते । अकूपारस्य । वाचे । पैङ्गराज इति पैङ्ग—राजः । भगाय । कुषीतकः । आती । वाहसः । दर्विदा । ते । वायव्याः । दिग्भ्य इति दिक्—भ्यः । चक्रवाकः ( १ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे पञ्चमाष्टके पञ्चमप्रपाठके त्रयोदशोऽनुवाकः ॥ १३ ॥

---

( अथ पञ्चमकाण्डे पञ्चमप्रपाठके त्रयोदशोऽनुवाकः । )

---

द्वयोरनुवाकयोरेकादशिनी दशिनी चेति द्वौ संघावुक्तौ । एवमुत्तरत्रापि यथायोगं द्रष्टव्यम् ॥

अथ तृतीयं संघमाह—

अपां नप्त्रे जषो नाक्रो मकरः
कुलीकयस्तेऽकूपारस्य वाचे पैङ्गराजो
भगाय कुषीतक आती वाहसो दर्विदा
ते वायव्या दिग्भ्यश्चक्रवाकः । , इति ॥

अपां नप्त्रेऽपामविनाशयित्रे देवविशेषाय जषो जषवत्तुण्डो मकरः । नाक्रादयस्त्रयोऽकूपारस्य समुद्रस्य । नाक्रो दीर्घतुण्डो ग्राहः । दीर्घपुच्छो मत्स्यविशेष इत्येके । मकरः पर्यस्ततुण्डः । कुलीकयो बहुपान्मत्स्यविशेषः । वाचे पैङ्गराजो रक्ताक्षो भरद्वाजः । समुद्रतरङ्गेचारी महापक्षीत्यन्ये । चकोर इत्यपरे । भगाय कुषीतकः समुद्रकाकः । आत्यादयस्त्रयो वायव्याः । आती कुरङ्गी । चाष इत्यन्ये । वाहसः पृष्ठे क्षुल्लशङ्खवाही जन्तुः । दर्विदा जलपक्षी । द्रुमकुक्कुट इत्येके । दिग्भ्यो दिग्देवताभ्यः । चक्रवाकः प्रसिद्धः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये पञ्चमकाण्डे पञ्चमप्रपाठके त्रयोदशोऽनुवाकः ॥ १३ ॥

(अथ पञ्चमाष्टके पञ्चमप्रपाठके चतुर्दशोऽनुवाकः।)

बलांयाजगर आखुः सृंजया शयण्डंकस्ते मैत्रा मृत्यवेंऽसितो मन्यवें स्वजः कुंम्भीनसंः पुष्करसादो लोंहिताहिस्ते त्वाष्ट्राः प्रंतिश्रुत्कांयै वाहसः (१) ॥

(बलांयाष्टादंश।)

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां पञ्चमाष्टके पञ्चमप्रपाठके चतुर्दशोऽनुवाकः ॥ १४ ॥

(अथ पञ्चमाष्टके पञ्चमप्रपाठके चतुर्दशोऽनुवाकः।)

बलांय। अजगरः। आखुः। सृजया। शयण्डंकः। ते। मैत्राः। मृत्यवें। असितः। मन्यवें। स्वज इतिं स्व—जः। कुम्भीनस इतिं कुम्भी—नसंः। पुष्करसाद इतिं पुष्कर—सादः। लोहिताहिरितिं लोहित—अहिः। ते। त्वाष्ट्राः। प्रतिश्रुत्कांया इतिं प्रति—श्रुत्कांयै। वाहसः (१) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे पञ्चमाष्टके पञ्चमप्रपाठके चतुर्दशोऽनुवाकः ॥ १४ ॥

(अथ पञ्चमकाण्डे पञ्चमप्रपाठके चतुर्दशोऽनुवाकः।)

अथ चतुर्थसंघमाह—

बलायाजगर आखुः सृजया शयण्ड-

कस्ते मैत्रा मृत्यवेऽसितो मन्यवे स्वजः
कुम्भीनसः पुष्करसादो लोहिताहिस्ते
त्वाष्ट्राः प्रतिश्रुत्कायै वाहसः ॥, इति ॥

बलाय बलाख्याय देवायाजगरो महोरगः । आख्वादयस्त्रयो मैत्राः । आखुः प्रसिद्धः । सृजया नीलमक्षिका । शुक्रसर्प इत्येके । नीलमहिष इत्यपरे । शयण्डकः कृकलासः । मृत्यवेऽसितः कृष्णः सर्पः । मन्यवे स्वजः सर्पविशेषो बिलादिषु यः स्वयमेव जायते । कुम्भीनसादयस्त्रयस्त्वाष्ट्राः । कुम्भीनसः स्वापशीलः सर्पविशेषः । पुष्करसादः पुष्करसर्पः । भ्रमर इत्येके । लोहिताहिः श्वेतलोहितसर्पः । प्रतिश्रुत्कायै प्रतिश्रुत्यै वाहसः क(सोऽ)ल्पप्रमाणसर्पः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये पञ्चमकाण्डे पञ्चमप्रपाठके
चतुर्दशोऽनुवाकः ॥ १४ ॥

---

( अथ पञ्चमाष्टके पञ्चमप्रपाठके पञ्चदशोऽनुवाकः । )

---

पुरुषमृगश्चन्द्रमसे गोधा कालका दार्वाघाटस्ते वनस्पतीनामेण्यह्ने कृष्णो रात्रियै पिकः क्ष्विङ्का नीलशीर्ष्णी तेऽर्यम्णे धातुः कत्कटः ( १ ) ॥

( पुरुषमृगोऽष्टादश । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां पञ्चमाष्टके
पञ्चमप्रपाठके पञ्चदशोऽनुवाकः ॥ १५ ॥

---

( अथ पञ्चमाष्टके पञ्चमप्रपाठके पञ्चदशोऽनुवाकः । )

---

पुरुषमृग इति पुरुष—मृगः । चन्द्रमसे । गोधा । कालका । दार्वाघाट इति दारु—आघातः । ते ।

( अश्वमेधशेषभूतषष्ठपशुसंघाविधिः । )

वनस्पतीनाम् । एणी । अह्ने । कृष्णः । रात्रियै । पिकः । क्ष्विङ्का । नीलशीर्ष्णीति नील—शीर्ष्णी । ते । अर्यम्णे । धातुः । कत्कटः ( १ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे पञ्चमाष्टके पञ्चमप्रपाठके पञ्चदशोऽनुवाकः ॥ १५ ॥

( अथ पञ्चमकाण्डे पञ्चमप्रपाठके पञ्चदशोऽनुवाकः । )

अथ पञ्चमं संघमाह—

पुरुषमृगश्चन्द्रमसे गोधा कालका दार्वाघाटस्ते वनस्पतीनामेण्यह्ने कृष्णो रात्रियै पिकः क्ष्विङ्का नीलशीर्ष्णी तेऽर्यम्णे धातुः कत्कटः ॥ , इति ॥

पुरुषमृगो नरमुखो मृगविशेषश्चन्द्रमसे । गोधादयस्त्रयो वनस्पतीनाम् । गोधा मुसलिका । महागोधेत्येके । कालका सरटा । दार्वाघाटो द्रुमकुट्टकः । एणी मृगी । अह्ने । कृष्णः कृष्णमृगो रात्रियै । पिकादयस्त्रयोऽर्यम्णे । पिकः कोकिलः । क्ष्विङ्का रक्तमुखी वानरी । नीलशीर्ष्णी कृष्णशिरस्का । धातुः कत्कटो बिलवासी कर्कटः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये पञ्चमकाण्डे पञ्चमप्रपाठके पञ्चदशोऽनुवाकः ॥ १५ ॥

( अथ पञ्चमाष्टके पञ्चमप्रपाठके षोडशोऽनुवाकः । )

सौरी बलाकश्यों मयूरः श्येनस्ते गन्धर्वाणां वसूनां कपिञ्जलो रुद्राणां तित्तिरि

१ ख. 'कुक्कुटः । ए' ।

रोहित्कुण्ड्रृणाची गोलत्तिका ता अप्सरसा-
मरण्याय सृमरः ( १ ) ।

( सौर्यष्टादश । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां पञ्चमाष्टके
पञ्चमप्रपाठके षोडशोऽनुवाकः ॥ १६ ॥

( अथ पञ्चमाष्टके पञ्चमप्रपाठके षोडशोऽनुवाकः । )

सौरी । बलाका । ऋश्यः । मयूरः । श्येनः । ते ।
गन्धर्वाणाम् । वसूनाम् । कपिञ्जलः । रुद्राणाम् ।
तित्तिरिः । रोहित् । कुण्ड्रृणाची । गोलत्तिका । ताः ।
अप्सरसाम् । अरण्याय । सृमरः ( १ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे पञ्चमाष्टके
पञ्चमप्रपाठके षोडशोऽनुवाकः ॥ १६ ॥

( अथ पञ्चमकाण्डे पञ्चमप्रपाठके षोडशोऽनुवाकः । )

अथ षष्ठं संघमाह—

सौरी बलाकर्श्यो मयूरः श्येनस्ते गन्ध-
र्वाणां वसूनां कपिञ्जलो रुद्राणां ति-
त्तिरी रोहित्कुण्ड्रृणाची गोलत्तिका ता
अप्सरसामरण्याय सृमरः ॥, इति ॥

सौरी बलाका प्रसिद्धा । ऋश्यादयस्त्रयो गन्धर्वाणाम् । ते तु प्रसिद्धाः । वसूनां कपिञ्जलोऽधोनिपाती । रुद्राणां तित्तिरिः पुरुषस्वरः । रोहितादय-

१ ख. ॰रिः परु॰ ।

( अश्वमेधशेषभूतसप्तमपशुसंघविधिः । )

स्तिस्रोऽप्सरसाम् । रोहिदृश्यस्त्री । कुण्डृणाची गृहगोधिका । गोलत्तिका खञ्जरीटका । पीतशुक्लेति केचित् । अरण्यायारण्यनामकाय सृमरश्चमरः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये पञ्चमकाण्डे पञ्चमप्रपाठके षोडशोऽनुवाकः ॥ १६ ॥

---

( अथ पञ्चमाष्टके पञ्चमप्रपाठके सप्तदशोऽनुवाकः । )

---

पृषतो वैश्वदेवः पित्वो न्यङ्कुः कशस्तेऽनुमत्या अन्यवापोऽर्धमासानां मासां कश्यपः क्वयिः कुटरुर्दात्यौहस्ते सिनीवाल्यै बृहस्पतये शित्पुटः ( १ ) ॥

( पृषतोऽष्टादश । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां पञ्चमाष्टके पञ्चमप्रपाठके सप्तदशोऽनुवाकः ॥ १७ ॥

---

( अथ पञ्चमाष्टके पञ्चमप्रपाठके सप्तदशोऽनुवाकः । )

---

पृषतः । वैश्वदेव इति वैश्व—देवः । पित्वः । न्यङ्कुः । कशः । ते । अनुमत्या इत्यनु—मत्यै । अन्यवाप इत्यन्य—वापः । अर्धमासानामित्यर्ध—मासानाम् । मासाम् । कश्यपः । क्वयिः । कुटरुः । दात्यौहः । ते । सिनीवाल्यै । बृहस्पतये । शित्पुटः ( १ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे पञ्चमाष्टके पञ्चमप्रपाठके सप्तदशोऽनुवाकः ॥ १७ ॥

( अथ पञ्चमकाण्डे पञ्चमप्रपाठके सप्तदशोऽनुवाकः । )

अथ सप्तमं संघमाह—

पृषतो वैश्वदेवः पित्वो न्यङ्कुः कशस्तेऽनुमत्या अन्यवापोऽर्धमासानां मासां कश्यपः क्वयिः कुटरुर्दार्त्यौहस्ते सिनीवाल्यै बृहस्पतये शित्पुटः॥, इति ॥

पृषतः श्वेतबिन्दुशबलाङ्गो मृगः । पित्वादयस्त्रयोऽनुमत्यै । पित्वो व्याघ्रः । न्यङ्कुर्हरिणः । ऋक्ष इत्येके । कशान्यवापकश्यपक्वयिकुटरवो मृगविशेषाः । दार्त्यौहः कालकण्ठ इत्येके । पुष्करिणीवसतिरित्यन्ये । बृहस्पतये शित्पुटो मार्जारसदृशो जातिविशेषः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये पञ्चमकाण्डे पञ्चमप्रपाठके सप्तदशोऽनुवाकः ॥ १७ ॥

( अथ पञ्चमाष्टके पञ्चमप्रपाठकेऽष्टादशोऽनुवाकः । )

शका भौमी पान्त्रः कशो मान्थीलवस्ते पितृणामृतूनां जहका संवत्सराय लोपा कपोत उलूकः शशस्ते नैर्ऋताः कृकवाकुः सावित्रः (१)॥

( शकाऽष्टादश । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां पञ्चमाष्टके पञ्चमप्रपाठकेऽष्टादशोऽनुवाकः ॥ १८ ॥

( अथ पञ्चमाष्टके पञ्चमप्रपाठकेऽष्टादशोऽनुवाकः । )

शका । भौमी । पान्त्रः । कशः । मान्थीलवः ।

ते। पितृणाम्। ऋतूनाम्। जहका। संवत्सरायेति संवत्सराय। लोपा। कपोतः। उलूकः। शशः। ते। नैर्ऋता इति नैः—ऋताः। कृकवाकुः। सावित्रः (१)॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे पञ्चमाष्टके पञ्चमप्रपाठकेऽष्टादशोऽनुवाकः॥ १८॥

(अथ पञ्चमकाण्डे पञ्चमप्रपाठकेऽष्टादशोऽनुवाकः।)

अथाष्टमं संघमाह—

शका भौमी पान्त्रः कशो मान्थील-
वस्ते पितृणामृतूनां जहका संवत्सराय
लोपा कपोत उलूकः शशस्ते नै-
र्ऋताः कृकवाकुः सावित्रः॥, इति॥

शका मक्षिका। भौमी भूमिरेव। पान्त्रादयस्त्रयः पितृणाम्। पान्त्रकशौ पक्षिविशेषौ। मान्थीलवो जलकुक्कुटः। ऋतूनां जहका बिलवासी क्रोष्टा। संवत्सराय लोपा श्मशानशकुनिः। कपोतादयस्त्रयो नैर्ऋताः। ते च प्रसिद्धाः। कृकवाकुररण्यकुक्कुटः॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये पञ्चमकाण्डे पञ्चमप्रपाठकेऽष्टादशोऽनुवाकः॥ १८॥

(अथ पञ्चमाष्टके पञ्चमप्रपाठक एकोनविंशोऽनुवाकः।)

रुरू रौद्रः कृकलासः शकुनिः पिप्पका ते

१ ख. घ. ङ. च. °मिदेवता। पा°।

शर॒व्या॑यै हरि॒णो मा॑रु॒तो ब्र॒ह्मणे॑ शा॒र्गस्त॒-
रक्षुः॑ कृ॒ष्णः श्वा च॑तुर॒क्षो ग॑र्द॒भस्त इ॑तरज॒नाना॑-
म॒ग्नये॒ धूङ्क्ष्णा॑ ( १ ) ॥

( रुरुर्विꣳश॒तिः । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां पञ्चमाष्टके
पञ्चमप्रपाठक एकोनविंशोऽनुवाकः ॥ १९ ॥

( अथ पञ्चमाष्टके पञ्चमप्रपाठक एकोनविंशोऽनुवाकः । )

रुरुः॑ । रौ॒द्रः । कृ॒क॒ला॒सः । श॒कुनिः॑ । पिप्प॑का ।
ते । श॒र॒व्या॑यै । ह॒रि॒णः । मा॒रु॒तः । ब्रह्म॑णे । शा॒र्गः ।
त॒रक्षुः॑ । कृ॒ष्णः । श्वा । च॒तु॒र॒क्ष इति॑ चतुः—अ॒क्षः ।
ग॒र्द॒भः । ते । इ॒त॒र॒ज॒ना॒ना॒मिती॑तर—ज॒नाना॑म् ।
अ॒ग्नये॑ । धूङ्क्ष्णा॑ ( १ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे पञ्चमाष्टके
पञ्चमप्रपाठक एकोनविंशोऽनुवाकः ॥ १९ ॥

( अथ पञ्चमकाण्डे पञ्चमप्रपाठक एकोनविंशोऽनुवाकः । )

नवमं संघमाह—

रुरू रौद्रः कृकलासः शकुनिः पिप्प-
का ते शरव्यायै हरिणो मारुतो ब्रह्मणे
शार्गस्तरक्षुः कृष्णः श्वा चतुरक्षो गर्दभ-
स्त इतरजनानामग्नये धूङ्क्ष्णा ॥, इति ॥

( अश्वमेधशेषभूतदशमपशुसंघविधिः )

रुरुर्मृगविशेषः । कृकलासादयस्त्रयः शरव्यायै । शरव्या बाणधारिणी देवता । कृकलासः कामरूपी । शकुनिः काकः । पिप्पका पक्षिविशेषः । हरिणः प्रसिद्धः । शार्ग आरण्यचटकः । तरक्ष्वादयस्त्रय इतरजनानाम् । तरक्षुर्व्याघ्रविशेषो गर्दभाकारः । कृष्णवर्णश्चतुरक्षः श्वा । अक्ष्णोरुपरि बिन्दुद्वयवांश्चतुरक्षः । धूङ्क्ष्णा श्वेतकाकी ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये पञ्चमकाण्डे पञ्चमप्रपाठक एकोनविंशोऽनुवाकः ॥ १९ ॥

( अथ पञ्चमाष्टके पञ्चमप्रपाठके विंशोऽनुवाकः । )

अलज आन्तरिक्ष उद्रो मद्गुः प्लवस्तेऽपामदित्यै हंससाचिरिन्द्राण्यै कीर्शा गृध्रः शितिकक्षी वार्ध्राणसस्ते दिव्या द्यावापृथिव्या श्वावित् ( १ ) ॥

( अलजोऽष्टादश । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां पञ्चमाष्टके पञ्चमप्रपाठके विंशोऽनुवाकः ॥ २० ॥

( अथ पञ्चमाष्टके पञ्चमप्रपाठके विंशोऽनुवाकः । )

अलजः । आन्तरिक्षः । उद्रः । मद्गुः । प्लवः । ते । अपाम् । अदित्यै । हंससाचिरिति हंस—साचिः । इन्द्राण्यै । कीर्शा । गृध्रः । शितिकक्षीति शिति—कक्षी । वार्ध्राणसः । ते । दिव्याः ।

द्यावापृथिव्येति द्यावा—पृथिव्या । श्वाविदिति श्व—वित् ( १ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे पञ्चमाष्टके पञ्चमप्रपाठके विंशोऽनुवाकः ॥ २० ॥

---

( अथ पञ्चमकाण्डे पञ्चमप्रपाठके विंशोऽनुवाकः । )

---

दशमं संघमाह—

अलज आन्तरिक्ष उद्रो मद्गुः प्लवस्तेऽपामदित्यै हंससाचिरिन्द्राण्यै कीर्शा गृध्रः शितिकक्षी वार्ध्राणसस्ते दिव्या द्यावापृथिव्या श्वावित् ॥, इति॥

अलजो भासः । आन्तरिक्षः प्रसिद्धः । उद्रादयस्त्रयोऽपाम् । उद्रो जलबिडालः । मद्गुर्जलकाकः । प्लवस्तस्यैवावान्तरजातिविशेषः । हंससाचिः सर्वश्वेतो हंसः । कीर्शा कुलाली शकुनिका । गृध्रादयस्त्रयो दिव्याः । गृध्रः प्रसिद्धः । शितिकक्षी पाण्डरोदरो गृध्रः । वार्ध्राणसः खड्गमृगः । श्वाविच्छल्ली सूचीरोमा ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये पञ्चमकाण्डे पञ्चमप्रपाठके विंशोऽनुवाकः ॥ २० ॥

---

( अथ पञ्चमाष्टके पञ्चमप्रपाठक एकविंशोऽनुवाकः । )

---

सुपर्णः पार्जन्यो हंसो वृको वृषदंशस्त ऐन्द्रा अपामुद्रोऽर्यम्णे लोपाशः सिंहो नकुलो व्याघ्रस्ते महेन्द्राय कामाय परस्वान् ( १ ) ॥

( सुपर्णोऽष्टादश । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां पञ्चमाष्टके पञ्चमप्रपाठक एकविंशोऽनुवाकः ॥ २१ ॥

( अश्वमेधशेषभूतप्रथमग्राम्यपशुसंघविधिः )

( अथ पञ्चमाष्टके पञ्चमप्रपाठक एकविंशोऽनुवाकः । )

सुपर्ण इति सु–पर्णः । पार्जन्यः । हंसः । वृकः । वृषदंशः । ते । ऐन्द्राः । अपाम् । उद्रः । अर्यम्णे । लोपाशः । सिंहः । नकुलः । व्याघ्रः । ते । महेन्द्रायेति महा–इन्द्राय । कामाय । परस्वान् ( १ ) ।

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे पञ्चमाष्टके पञ्चमप्रपाठक एकविंशोऽनुवाकः ॥ २१ ॥

( अथ पञ्चमकाण्डे पञ्चमप्रपाठक एकविंशोऽनुवाकः । )

अथैकादशं संघमाह—

सुपर्णः पार्जन्यो हंसो वृको वृषदंशस्त ऐन्द्रा अपामुद्रोऽर्यम्णे लोपाशः सिंहो नकुलो व्याघ्रस्ते महेन्द्राय कामाय परस्वान् ॥, इति ॥

सुपर्णः प्रसिद्धः । हंसादयस्त्रय ऐन्द्राः । वृकोऽरण्यश्वा । वृषदंशो मार्जारसदृशः । उद्रो जलबिडालः । लोपाशः क्रोष्टा । सिंहादयस्त्रयो महेन्द्राय । ते च प्रसिद्धाः । परस्वान्महिषः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये पञ्चमकाण्डे पञ्चमप्रपाठक एकविंशोऽनुवाकः ॥ २१ ॥

( अथ पञ्चमाष्टके पञ्चमप्रपाठके द्वाविंशोऽनुवाकः । )

आग्नेयः कृष्णग्रीवः सारस्वती मेषी बभ्रुः सौम्यः पौष्णः श्यामः शितिपृष्ठो बार्हस्पत्यः

शिल्पो वैश्वदेव ऐन्द्रोऽरुणो मारुतः कल्माष ऐन्द्राग्नः सꣳहितोऽधोरामः सावित्रो वारुणः पेत्वः ( १ ) ।

( आग्नेयो द्वाविꣳशतिः । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां पञ्चमाष्टके पञ्चमप्रपाठके द्वाविंशोऽनुवाकः ॥ २२ ॥

---

( अथ पञ्चमाष्टके पञ्चमप्रपाठके द्वाविंशोऽनुवाकः । )

---

आग्नेयः । कृष्णग्रीव इति कृष्ण—ग्रीवः । सारस्वती । मेषी । बभ्रुः । सौम्यः । पौष्णः । श्यामः । शितिपृष्ठ इति शिति—पृष्ठः । बार्हस्पत्यः । शिल्पः । वैश्वदेव इति वैश्व—देवः । ऐन्द्रः । अरुणः । मारुतः । कल्माषः । ऐन्द्राग्न इत्यैन्द्र—अग्नः । सꣳहित इति सं—हितः । अधोराम इत्यधः—रामः । सावित्रः । वारुणः । पेत्वः ( १ ) ।

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे पञ्चमाष्टके पञ्चमप्रपाठके द्वाविंशोऽनुवाकः ॥ २२ ॥

---

( अथ पञ्चमकाण्डे पञ्चमप्रपाठके द्वाविंशोऽनुवाकः । )

---

उक्ताः सर्व आरण्याः । अथ ग्राम्यास्त्रयः संघाः । तत्र प्रथमं संघमाह—

आग्नेयः कृष्णग्रीवः सारस्वती मेषी बभ्रुः सौम्यः पौष्णः श्यामः शितिपृष्ठो बार्हस्पत्यः शिल्पो

( अश्वमेधशेषभूतद्वितीयग्राम्यपशुसंघविधिः )

वैश्वदेव ऐन्द्रोऽरुणो मारुतः कल्माष ऐन्द्राग्नः संहितोऽधोरामः सावित्रो वारुणः पेत्वः ॥ , इति ॥

कृष्णो वर्णो ग्रीवायां यस्य च्छागस्यासौ कृष्णग्रीवः । बभ्रुः पिङ्गलवर्णः । शितिपृष्ठः श्वेतपृष्ठः । शिल्पो बहुरूपः । कल्माषः कृष्णबिन्दुलाञ्छितः । संहितः कृष्णः ( शुक्ल ) कृष्णशबलः । अधोरामः श्वेतकृष्णोदरः । पेत्वो गलितरेतस्को मेषः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये पञ्चमकाण्डे पञ्चमप्रपाठके द्वाविंशोऽनुवाकः ॥ २२ ॥

---

( अथ पञ्चमाष्टके पञ्चमप्रपाठके त्रयोविंशोऽनुवाकः । )

---

अश्वंस्तूपरो गोमृगस्ते प्राजापत्या आग्नेयौ कृष्णग्रीवौ त्वाष्ट्रौ लोमशसक्थौ शितिपृष्ठौ बार्हस्पत्यौ धात्रे पृषोदरः सौर्यो बलक्षः पेत्वः ( १ ) ॥

( अश्वः षोडश । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां पञ्चमाष्टके पञ्चमप्रपाठके त्रयोविंशोऽनुवाकः ॥ २३ ॥

---

( अथ पञ्चमाष्टके पञ्चमप्रपाठके त्रयोविंशोऽनुवाकः । )

---

अश्वः । तूपरः । गोमृग इति गो—मृगः । ते । प्राजापत्या इति प्राजा—पत्याः । आग्नेयौ । कृष्णग्रीवाविति कृष्ण—ग्रीवौ । त्वाष्ट्रौ । लोमशसक्थाविति लोमश—सक्थौ । शितिपृष्ठाविति शिति—

पृष्ठौ । बार्हस्पत्यौ । धात्रे । पृषोदर इति पृष— उदरः । सौर्यः । बलक्षः । पेत्वः ( १ )॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे पञ्चमाष्टके पञ्चमप्रपाठके त्रयोविंशोऽनुवाकः ॥ २३ ॥

---

( अथ पञ्चमकाण्डे पञ्चमप्रपाठके त्रयोविंशोऽनुवाकः । )

---

अथ द्वितीयं संघमाह—

अश्वस्तूपरो गोमृगस्ते प्राजापत्या आ-
ग्नेयौ कृष्णग्रीवौ त्वाष्ट्रौ लोमशस-
क्थौ शितिपृष्ठौ बार्हस्पत्यौ धात्रे पृषो-
दरः सौर्यो बलक्षः पेत्वः ॥ , इति ॥

अश्वादयस्त्रयः प्राजापत्याः । तूपरः शृङ्गहीनः । गोमृगो गोर्मृग्यामुत्पन्नः । सक्थ्नोर्लोमबहुलौ लोमशसक्थौ । पृषोदरः श्वेतबिन्दुमदुदरः । बलक्षः श्वेतः ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये पञ्चमकाण्डे पञ्चमप्रपाठके त्रयोविंशोऽनुवाकः ॥ २३ ॥

---

( अथ पञ्चमाष्टके पञ्चमप्रपाठके चतुर्विंशोऽनुवाकः । )

---

अग्नयेऽनीकवते रोहिताञ्जिरनड्वानधोरामौ सावित्रौ पौष्णौ रजतनाभी वैश्वदेवौ पिशङ्गौ तूपरौ मारुतः कल्माष आग्नेयः कृष्णोऽजः सारस्वती मेषी वारुणः कृष्ण एकशितिपात्पेत्वः ( १ )॥

( अग्नयेऽनीकवते द्वाविंशतिः । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां पञ्चमाष्टके पञ्चमप्रपाठके चतुर्विंशोऽनुवाकः ॥ २४ ॥

---

यदेकेन प्रजापतिः प्रेणाऽनु यजुषाऽऽपो विश्वकर्माऽग्न आ याहि सुवर्गाय वज्रो गायत्रेणाग्ने उदधे समीचीन्द्राय मयुरपां बलाय पुरुषमृगः सौरी पृषतः स्रुका दर्दरलजः सुपर्ण आग्नेयोऽश्वोऽग्नयेऽनीकवते चतुर्विंशतिः ॥ २४ ॥

यदेकेन स पापीयानेतद्वा अग्नेः शिरो धनुस्तद्देवास्त्वेन्द्रंज्येष्ठा अपां नप्त्रेऽश्वस्तूपरो द्विषष्टिः ॥ ६२ ॥

हरिः ॐ ।

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां पञ्चमाष्टके पञ्चमः प्रपाठकः ॥ ५ ॥

---

( अथ पञ्चमाष्टके पञ्चमप्रपाठके चतुर्विंशोऽनुवाकः । )

---

अग्नये । अनीकवत इत्यनीक—वते । रोहिताञ्जिरिति रोहित—अञ्जिः । अनड्वान् । अधोरामावित्यधः—रामौ । सावित्रौ । पौष्णौ । रजतनाभी इति रजत—नाभी । वैश्वदेवाविति वैश्व—देवौ । पिशङ्गौ । तूपरौ । मारुतः । कल्माषः । आग्नेयः । कृष्णः । अजः । सारस्वती । मेषी । वारुणः । कृष्णः । एकशितिपादित्येक—शितिपात् । पेत्वः ( १ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे पञ्चमाष्टके पञ्चमप्रपाठके चतुर्विंशोऽनुवाकः ॥ २४ ॥

हरिः ॐ ।

# इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे पञ्चमाष्टके पञ्चमः प्रपाठकः ॥ ५ ॥

---

( अथ पञ्चमकाण्डे पञ्चमप्रपाठके चतुर्विंशोऽनुवाकः । )

---

तृतीयं संघमाह—

अग्नयेऽनीकवते रोहिताञ्जिरनड्वानधोरामौ सा-
वित्रौ पौष्णौ रजतनाभी वैश्वदेवौ पिशङ्गौ तूपरौ
मारुतः कल्माष आग्नेयः कृष्णोऽजः सारस्वती
मेषी वारुणः कृष्ण एकशितिपात्पेत्वः ॥ , इति ॥

रोहिताञ्जिर्लोहितलिङ्गः । अधोरामौ व्याख्यातौ । रजतनाभी शुक्लनाभी । पिशङ्गौ गोरोचनवर्णौ । तूपरौ शृङ्गहीनौ । कल्माष उक्तः । एकशितिपाच्छ्वेतैकपादः । पेत्वो गलितमुष्को मेषः ।

अत्रास्य प्रपाठकस्य विनियोगसंग्रहः—

औपानुवाक्ये ये मन्त्रा आम्नातास्तानथ ब्रुवे ।
आग्नेयीत्रिष्टुभौ हौत्रे विद्याद्वायुमतीद्वयम् ॥ १ ॥
पीवोन्नामि(नि)ति विज्ञेयं हिरण्येति चतुर्थकम् ।
प्रजापतिस्त्वा भूस्पर्शे ह्यग्ने युक्ष्वाद्वयाहुतिः ॥ २ ॥
चित्रं देवेति सौरी स्याद्यास्ते या वोयजुर्द्वयम् ।
चित्तिं जुहोमीति होमः स्पृशेच्चित्तिमचित्तितः ॥ ३ ॥
मन्त्रा हिरण्येष्टकानां विश्वकर्मेति पञ्च हि ।
प्राजापत्यादिपदतो मन्त्रभेदोऽवगम्यताम् ॥ ४ ॥
इष्टकाः स्वयमातृण्णा निदध्याद्व्याहृतित्रयात् ।
पुनर्दिक्षु चतस्रस्ताः प्राणायेति चतुष्टयात् ॥ ५ ॥
पदभेदान्मन्त्रभेदास्त्वा चक्षिरत्यनुषज्यते ।
अह्ना रूपाणीष्टकाः स्युरग्न आ याहिपञ्चकात् ॥ ६ ॥
लोकं पृणेतिमन्त्रस्य नान्तरोऽनुचरो भवेत् ।
इन्द्रं विश्वा ऋगैन्द्री स्याद्यत्ते पञ्चोपतिष्ठते ॥ ७ ॥

( कुम्भेष्टकामन्त्रणार्थमन्त्राभिधानम् )

येऽग्नयो बहुभिर्मन्त्रैः प्रयास्यन्नुपतिष्ठते ।
सामनामानि गायत्रं बृहत्तद्वद्रथंतरम् ॥ ८ ॥
ऋतुस्थायज्ञायज्ञियं वारवन्तीयकं तथा ।
इयैतं प्रजापतेर्हृच पृष्ठं स्तोत्रार्थसाम हि ॥ ९ ॥
पक्ष्याकारं चितं वह्निं तैरुक्तैरुपतिष्ठते ।
आत्मेष्टका उपदध्यात्प्राच्या त्वेत्यादिपञ्चभिः ॥ १० ॥
अग्ने होमः पञ्चभिः स्याद्धुध्राद्यैर्मन्त्रभेदनम् ।
चित्यारोहे जपेद्वाञ्छे यो रुद्रो निक्षिपेच्चरुम् ॥ १२ ॥
वसवस्त्वापञ्चमन्त्रैः प्रोक्षेदाज्येन संचितम् ।
समीची सर्पहोमः स्याद्रक्षितेत्यनुषज्यते ॥ १३ ॥
हेतयस्तु महाहोमो वातनामानुषज्यते ।
इमं स्तनं पूर्णहोम इति मन्त्रा इहेरिताः ॥ १४ ॥
इन्द्राय राज्ञ इत्युक्ता एकादशिनीनामकाः ।
दशिन्याख्याश्च पशवस्ते सर्वेऽप्यश्वमेधकाः ॥ १५ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतै-
त्तिरीयसंहिताभाष्ये पञ्चमकाण्डे पञ्चमप्रपाठके
चतुर्विंशोऽनुवाकः ॥ २४ ॥

---

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥ १ ॥

इति श्रीमद्विद्यातीर्थमहेश्वरापरावतारस्य श्रीमद्राजाधिराजपरमेश्वरस्य श्रीवीरबुक्कमहाराजस्याऽऽज्ञापरिपालकेन माधवाचार्येण विरचिते वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये पञ्चमकाण्डे पञ्चमः प्रपाठकः ॥ ५ ॥

---

( अथ पञ्चमाष्टके षष्ठः प्रपाठकः । )

---

( तत्र प्रथमोऽनुवाकः । )

---

हरिः ॐ ।

हिरण्यवर्णाः शुचयः पावका यासु जातः

---

१ क. पृष्ठस्तो॰ ।

कश्यपो यास्विन्द्रः । अग्निं या गर्भं दधिरे विरूपास्ता न आपः शꣳ स्योना भवन्तु । यासाꣳ राजा वरुणो याति मध्ये सत्यानृते अवपश्यञ्जनानाम् । मधुश्चुतः शुचयो याः पावकास्ता न आपः शꣳ स्योना भवन्तु । यासां देवा दिवि कृण्वन्ति भक्षं या अन्तरिक्षे बहुधा भवन्ति । याः पृथिवीं पयसोन्दन्ति ( १ ) शुक्रास्ता न आपः शꣳ स्योना भवन्तु । शिवेन मा चक्षुषा पश्यताऽऽपः शिवया तनुवोप स्पृशत त्वचं मे । सर्वाꣳ अग्नीꣳरप्सुषदो हुवे वो मयि वर्चो बलमोजो नि धत्त । यददः संप्रयतीरहावनदता हते । तस्मादा नद्यो नाम स्थ ता वो नामानि सिन्धवः । यत्प्रेषिता वरुणेन ताः शीभꣳ समवल्गत ( २ ) । तदाप्नोदिन्द्रो वो यतीस्तस्मादापो अनु स्थन । अपकामꣳ स्यन्दमाना अवीवरत वो हिकम् । इन्द्रो वः शक्तिभिर्देवीस्तस्माद्वार्णाम वो हितम् । एको देवो अप्यतिष्ठत्स्यन्दमाना यथावशम् । उदानिषुर्महीरिति तस्मादुदकमुच्यते । आपो भद्रा घृतमिदाप आसुरग्नीषोमौ

बिभ्रत्याप इत्ताः । तीव्रो रसो मधुपृचाम् (३) अरंगम आ मा प्राणेन सह वर्चसा गन् । आदित्पश्याम्युत वा शृणोम्या मा घोषो गच्छति वाङ्न आसाम् । मन्ये भेजानो अमृतस्य तर्हि हिरण्यवर्णा अतृपं यदा वः । आपो हि ष्ठा मयोभुवस्ता न ऊर्जे दधातन । महे रणाय चक्षसे । यो वः शिवतमो रसस्तस्य भाजयतेह नः । उशतीरिव मातरः । तस्मा अरं गमाम वो यस्य क्षयाय जिन्वथ । आपो जनयथा च नः । दिवि श्रयस्वान्तरिक्षे यतस्व पृथिव्या सं भव ब्रह्मवर्चसमसि ब्रह्मवर्चसाय त्वा (४) ॥

( उन्दन्ति समवल्गत मधुपृचां मातरो द्वाविंशतिश्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां पञ्चमाष्टके षष्ठप्रपाठके प्रथमोऽनुवाकः ॥ १ ॥

---

( अथ पञ्चमाष्टके षष्ठः प्रपाठकः । )

---

( तत्र प्रथमोऽनुवाकः । )

---

हरिः ॐ ।

हिरण्यवर्णा इति हिरण्य—वर्णाः । शुचयः ।

पावकाः । यासु । जातः । कश्यपः । यासु । इन्द्रः । अग्निम् । याः । गर्भम् । दधिरे । विरूपा इति वि—रूपाः । ताः । नः । आपः । शम् । स्योनाः । भवन्तु । यासाम् । राजा । वरुणः । याति । मध्ये । सत्यानृते इति सत्य—अनृते । अवपश्यन्नित्यव—पश्यन् । जनानाम् । मधुश्चुत इति मधु—श्चुतः । शुचयः । याः । पावकाः । ताः । नः । आपः । शम् । स्योनाः । भवन्तु । यासाम् । देवाः । दिवि । कृण्वन्ति । भक्षम् । याः । अन्तरिक्षे । बहुधेति बहु—धा । भवन्ति । याः । पृथिवीम् । पयसा । उन्दन्ति ( १ ) । शुक्राः । ताः । नः । आपः । शम् । स्योनाः । भवन्तु । शिवेन । मा । चक्षुषा । पश्यत । आपः । शिवया । तनुवा । उपेति । स्पृशत । त्वचम् । मे । सर्वान् । अग्नीन् । अप्सुषद इत्यप्सु—सदः । हुवे । वः । मयि । वर्चः । बलम् । ओजः । नीति । धत्त । यत् । अदः । संप्रयतीरिति सं—प्रयतीः । अहौ । अनदत । हते । तस्मात् । एति । नद्यः । नाम । स्थ । ता । वः । नामानि । सिन्धवः । यत् । प्रेषिता इति प्र—इषिताः । वरुणेन । ताः । शीभम् । समवल्गतेति सम्—अवल्गत ( २ ) । तत् । आ-

( कुम्भेष्टकामन्त्रणार्थमन्त्राभिधानम् )

प्रोत् । इन्द्रः । वः । यतीः । तस्मात् । आपः । अन्विति । स्थन । अपकाममित्यप—कामम् । स्यन्दमानाः । अवीवरत । वः । हिकम् । इन्द्रः । वः । शक्तिभिरिति शक्ति—भिः । देवीः । तस्मात् । वाः । नाम । वः । हितम् । एकः । देवः । अपीति । अतिष्ठत् । स्यन्दमानाः । यथावशमिति यथा—वशम् । उदिति । आनिषुः । महीः । इति । तस्मात् । उदकम् । उच्यते । आपः । भद्राः । घृतम् । इत् । आपः । आसुः । अग्नीषोमावित्यग्नी—सोमौ । बिभ्रति । आपः । इत् । ताः । तीव्रः । रसः । मधुपृचामिति मधु—पृचाम् ( ३ )। अरंगम इत्यरं—गमः । एति । मा । प्राणेनेति प्र—अनेन । सह । वर्चसा । गन् । आत् । इत् । पश्यामि । उत । वा । शृणोमि । एति । मा । घोषः । गच्छति । वाक् । नः । आसाम् । मन्ये । भेजानः । अमृतस्य । तर्हि । हिरण्यवर्णा इति हिरण्य—वर्णाः । अतृपम् । यदा । वः । आपः । हि । स्थ । मयोभुव इति मयः—भुवः । ताः । नः । ऊर्जे । दधातन । महे । रणाय । चक्षसे । यः । वः । शिवतम इति शिव—तमः । रसः । तस्य । भाजयत । इह । नः ।

उशतीः । इव । मातरः । तस्मै । अरम् । गमाम । वः । यस्य । क्षयाय । जिन्वथ । आपः । जनयथ । च । नः । दिवि । श्रयस्व । अन्तरिक्षे । यतस्व । पृथिव्या । समिति । भव । ब्रह्मवर्चसमिति ब्रह्म—वर्चसम् । असि । ब्रह्मवर्चसायेति ब्रह्म—वर्चसाय । त्वा ( ४ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे पञ्चमाष्टके षष्ठप्रपाठके प्रथमोऽनुवाकः ॥ १ ॥

---

( अथ पञ्चमकाण्डे षष्ठः प्रपाठकः । )

---

( तत्र प्रथमोऽनुवाकः । )

---

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥
उक्ता वायव्यपश्वाद्याः पञ्चमे हि प्रपाठके ।
कुम्भेष्टकामन्त्रणादि षष्ठे मन्त्रैरुदीर्यते ॥ २ ॥

यदुक्तं सूत्रकारेण " हिरण्यवर्णा इत्युपहिता अभिमन्त्रयते " इति, तत्र कुम्भेष्टकाभिमन्त्रणार्थानां त्रयोदशानामृचां मध्ये प्रथमामाह—

हिरण्यवर्णाः शुचयः पावका यासु जातः कश्यपो यास्विन्द्रः । अग्निं या गर्भं दधिरे विरूपास्ता न आपः शꣳ स्योना भवन्तु । , इति ।

आपस्तावन्निर्मलत्वेन भास्वरत्वाद्धिरण्यसदृशवर्णोपेताः । तथा शुचयः स्वयं शुद्धाः पावकाः स्नानादिना शरीरादिशुद्धिहेतवश्च । यास्वप्सु कश्यपाख्यः प्रजापतिरुत्पन्नः । यास्वप्स्विन्द्रोऽप्युत्पन्नः । अग्निं च या आपो गर्भत्वेन दधिरे । तदेतत्रयं शाखान्तरगतेभ्योऽर्थवादेभ्यो द्रष्टव्यम् । अत्रा-

(कुम्भेष्टकामन्त्रणार्थमन्त्राभिधानम्)

प्यग्ने गर्भो अपामसीति चतुर्थकाण्डे मन्त्रान्तरं समाम्नातम्। ईदृश्यो या आपस्ताः स्योनाः सुखकारिण्यो नोऽस्माञ्शं भवन्तु सुखं प्रापयन्तु ॥

अथ द्वितीयामाह—

यासाꣳ राजा वरुणो याति मध्ये सत्यानृते अवपश्यञ्जनानाम्। मधुश्चुतः शुचयो याः पावकास्ता न आपः शꣳ स्योना भवन्तु।, इति।

वरुणाख्यो राजाऽपामधिपतिर्यासामपां मध्ये याति गूढः संचरति। किं कुर्वन्, जनानां सत्यानृते अवपश्यन्स्नानपानादौ यो यथाशास्त्रमाचरति तत्सर्वमवपश्यन्। ताश्चाऽऽपो मधुररसं श्चोतन्ति सारयन्तीति मधुश्चुतः। शुचय इत्यादि पूर्ववत् ॥

अथ तृतीयामाह—

यासां देवा दिवि कृण्वन्ति भक्षं या अन्तरिक्षे बहुधा भवन्ति। याः पृथिवीं पयसोन्दन्ति शुक्रास्ता न आपः शꣳ स्योना भवन्तु।, इति।

दिवि द्युलोके देवा यासामपां संबन्धि सारं भक्षं कृण्वन्ति स्वभोज्यं कुर्वन्ति। पीयूषं हि देवैः सेव्यते, तच्चापां सारभूतम्। याश्चाऽऽपोऽन्तरिक्षे वृष्टिधारारूपेण बहुप्रकारा भवन्ति। याश्चाऽऽपः पृथिवीं सर्वां पयसा स्वकीयेन द्रवेणोन्दन्ति क्लेदयन्ति। शुक्रा निर्मलाः। ता न आप इत्यादि पूर्ववत् ॥

अथ चतुर्थीमाह—

शिवेन मा चक्षुषा पश्यताऽऽपः शिवया तनुवोप स्पृशत त्वचं मे। सर्वाꣳ अग्नीꣳरप्सुषदो हुवे वो मयि वर्चो बलमोजो नि धत्त।, इति।

हे आपो यूयं शिवेन चक्षुषा शान्तया दृष्ट्या मा पश्यत मामवलोकयत। तथा शिवया तनुवा शान्तेन युष्मदीयशरीरेण मे त्वचमुपस्पृशत। अहमप्यप्सुषदो जलेषु स्थितान्सर्वानप्यग्नीन्हुवे जुहोमि होमेन तर्पयामि। वो युष्मदीयं यद्वर्चः कान्तिर्यच्च बलं यदप्योजो बलहेतुरष्टमो धातुस्तत्सर्वं मयि निधत्त स्थापयत ॥

---

१ ख. 'दौ यथथा॰।

अथ पञ्चमीमाह—

यददः संप्रयतीरहावनदता हते । तस्मादा नद्यो नाम स्थ ता वो नामानि सिन्धवः ।, इति ।

यद्यस्मात्कारणाददो द्युलोकस्थानात्संप्रयतीः सम्यक्प्रकर्षेण गच्छन्त्यो हे आपो यूयम् । अहिशब्दो मेघनामधेयम् । यस्मिन्हते युष्माभिस्ताडिते सत्यनदत नादं कृतवत्यः । प्रवाहगतपाषाणेष्विव मेघेषु जलाघातेन शब्दो जायते । यस्मान्नादं कृतवत्यस्तस्मादा समन्तात्सर्वेष्वपि स्थानेषु नद्यो नाम स्थ नदीति नामधेयं प्राप्ताः । हे सिन्धवः स्यन्दनशीला आपो वो युष्माकं ता नामानि तादृशानि निर्वचनसाध्यानि नामानि विद्यन्ते ॥

अथ षष्ठीमाह—

यत्प्रेषिता वरुणेन ताः शीभꣳ सम-
वल्गत । तदाप्नोदिन्द्रो वो यती-
स्तस्मादापो अनु स्थन ।, इति ।

हे आपो यद्यस्मात्कारणाद्वरुणेन प्रेषितास्ता यूयं शीभं समवल्गत शुभं यथा भवति तथा सम्यग्वल्गनवन्नृत्तं हर्षेण कृतवत्यस्तत्तदानीं यतीः प्रसरन्तीर्वो युष्मानिन्द्र उत्सुकः सन्द्रष्टुमाप्नोत्तस्मात्कारणादाप्यन्त इति व्युत्पत्त्याऽऽप इति नामधेयं प्राप्यानुस्थन सर्वेषामनुकूलाः स्थ ॥

अथ सप्तमीमाह—

अपकामꣳ स्यन्दमाना अवीवरत वो
हिकम् । इन्द्रो वः शक्तिभिर्दे-
वीस्तस्माद्वार्णाम वो हितम् ।, इति ।

देवीर्हे आपो देव्योऽपकामं स्यन्दमानाः प्रयोजनविशेषमनपेक्ष्य स्वभावत एव प्रवहन्तीर्वो युष्मानिन्द्रः परितोषादवीवरत वृतवान् । स्यन्दनेऽपि युष्माकं न साधनान्तरापेक्षा किं तु वः शक्तिभिर्युष्मदीयशक्तिवशादेव स्यन्दनं, हिकमित्यव्ययं प्रसिद्धिवाचकम् । उदकस्य स्वशक्त्यैव स्यन्दनं सर्वलोकप्रसिद्धमित्यर्थः । यस्मादिन्द्रेण वृतास्तस्माद्वो युष्माकं वारित्येतन्नाम हितं संपन्नम् ॥

अथाष्टमीमाह—

एको देवो अप्यतिष्ठत्स्यन्दमाना यथावशम् ।
उदानिषुर्महीरिति तस्मादुदकमुच्यते ।, इति ।

( कुम्भेष्टकामन्त्रणार्थमन्त्राभिधानम् )

यथावशं स्वेच्छयैव स्यन्दमाना अप एको देव इन्द्रोऽप्यतिष्ठदध्यतिष्ठत्स्वाधीनाः कृतवान्। इन्द्रेणाधिष्ठितास्ता आपो महीर्महत्यः प्रभूताः सत्य उदानिषुरुत्कर्षेण चेष्टितवत्यः। तस्मादुदानादुदकमिति नामोच्यते ॥

अथ नवमीमाह—

आपो भद्रा घृतमिदाप आसुरग्नीषोमौ बिभ्रत्याप इत्ताः। तीव्रो रसो मधुपृचामरंगम आ मा प्राणेन सह वर्चसा गन्।, इति।

एता आपो भद्राः कल्याणरूपा आप इदाप एव घृतमासुर्गोशरीरद्वारा घृतरूपेण परिणताः। ता आप इत्तादृश्य आप एवाग्नीषोमौ देवौ बिभ्रति धारयन्ति। अग्निं या गर्भमित्यग्निधारणं पूर्वमेवोक्तम्। सोमधारणमप्यमृतकारणद्वारा द्रष्टव्यम्। मधुपृचां माधुर्ययुक्तानामपां रसः सारांशस्तीव्रोऽत्यन्तस्वादुररंगमोऽलं संपूर्णं यथा भवति तथा गच्छति प्राप्नोति सर्वजनपुष्टिकारीत्यर्थः। तादृशो रसः प्राणेन श्वासवायुना वर्चसा बलेन सह मा मां प्रत्यागन्नागच्छतु यावदपां रसोऽन्नादिरूपेण शरीरे तिष्ठति तावत्प्राणो नातिगच्छति बलं च न विनश्यति ॥

अथ दशमीमाह—

आदित्पश्याम्युत वा शृणोम्या मा घोषो गच्छति वाङ्न आसाम्। मन्ये भेजानो अमृतस्य तर्हि हिरण्यवर्णा अतृपं यदा वः।, इति।

आदिदनन्तरमेव पश्यामि अपां रसे मच्छरीरमागते सति तदानीमेव चक्षुषा द्रष्टुं शक्तोऽस्मि। उत वा शृणोमि अपि च श्रोतुमपि शक्तोऽस्मि। आसामपां घोषो नाद आगच्छति मच्छरीरे वर्तते। स एव घोषो नोऽस्माकं वाक्। हे हिरण्यवर्णास्तेजस्विन्य आपो यदा वो युष्माकं सेवयाऽतृपमहं तृप्तोऽभवं तर्हि तस्मिन्कालेऽमृतस्य भेजानो मन्ये पीयूषं सेवितवानस्मीति तर्कये ॥

अथैकादशीमाह—

आपो हि ष्ठा मयोभुवस्ता न ऊर्जे दधातन। महे रणाय चक्षसे।, इति।

हिशब्द एवकारार्थः प्रसिध्यर्थो वा। आपो यूयमेव मयोभुवः स्थ सुख-

यित्र्यो भवत। स्नानपानादिहेतुत्वेन सुखोत्पादकत्वं प्रसिद्धम्। तास्तादृश्यो यूयं नोऽस्मानूर्जे रसाय भवदीयरसानुभवार्थं दधातन स्थापयत। किंच महे महते रणाय रमणीयाय चक्षसे दर्शनाय दधातनास्मान्परतत्त्वसाक्षात्कारयोग्यान्कुरुतेत्यर्थः ॥

अथ द्वादशीमाह—

यो वः शिवतमो रसस्तस्य भाजय-
तेह नः। उशतीरिव मातरः।, इति।

वो युष्माकं शिवतमः शान्ततमः सुखैकहेतुर्यो रसोऽस्ति। इहास्मिन्कर्मणि नोऽस्मान्। तस्य भाजयत तं रसं प्रापयत। तत्र दृष्टान्तः—उशतीरिव मातरः कामयमानाः प्रीतियुक्ता मातरो यथा स्वकीयस्तन्यरसं शिशुं पाययन्ति तद्वत् ॥

अथ त्रयोदशीमाह—

तस्मा अरं गमाम वो यस्य क्षयाय
जिन्वथ। आपो जनयथा च नः।, इति।

यस्य रसस्य क्षयाय क्षयेण निवासेन जिन्वथ यूयं प्रीता भवथ तस्मै रसाय वो युष्मानरं गमामालं भृशं प्राप्नुमः। किंच हे आपो यूयं नोऽस्माञ्जनयथ प्रजोत्पादकान्कुरुत ॥

कल्पः—"दिवि श्रयस्वेति बार्हस्पत्यं नैवारं पयसि चरुं मध्ये कुम्भेष्टकानामुपदधाति" इति। पाठस्तु—

दिवि श्रयस्वान्तरिक्षे यतस्व पृथिव्या सं भव
ब्रह्मवर्चसमसि ब्रह्मवर्चसाय त्वा ॥, इति ॥

हे नैवारचरो दिवि श्रयस्व द्युलोक आश्रितो भव। अन्तरिक्षेऽपि यतस्व प्रयत्नवान्भव। पृथिव्या संभव संयुक्तो भव। ब्रह्मवर्चसमसि तत्साधनत्वात्तद्रूपमसि। अतो ब्रह्मवर्चसाय त्वामत्रोपदधामि ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये पञ्चमकाण्डे षष्ठप्रपाठके
प्रथमोऽनुवाकः ॥ १ ॥

( अथ पञ्चमाष्टके षष्ठप्रपाठके द्वितीयोऽनुवाकः । )

अपां ग्रहान्गृह्णात्येतद्वाव राजसूयं यदेते ग्रहाः सवोऽग्निर्वरुणसवो राजसूयमग्निसवश्चित्यस्ताभ्यामेव सूयतेऽथो उभावेव लोकावभि जयति यश्च राजसूयेनेजानस्य यश्चाग्निचित आपो भवन्त्यापो वा अग्नेर्भ्रातृव्या यदपोऽग्नेरधस्तादुपदधाति भ्रातृव्याभिभूत्यै भवत्यात्मना पराऽस्य भ्रातृव्यो भवत्यमृतम् ( १ ) वा आपस्तस्मादद्भिरवतान्तमभि षिञ्चन्ति नाऽऽर्तिमार्छति सर्वमायुरेति यस्यैता उपधीयन्ते य उ चैना एवं वेदान्नं वा आपः पशव आपोऽन्नं पशवोऽन्नादः पशुमान्भवति यस्यैता उपधीयन्ते य उ चैना एवं वेद द्वादश भवन्ति द्वादश मासाः संवत्सरः संवत्सरेणैवास्मै ( २ ) अन्नमव रुन्धे पात्राणि भवन्ति पात्रे वा अन्नमद्यते सयोन्येवान्नमव रुन्ध आ द्वादशात्पुरुषादन्नमत्त्यथो पात्रान्न छिद्यते यस्यैता उपधीयन्ते य उ चैना एवं वेद कुम्भाश्च कुम्भीश्च मिथुनानि भवन्ति मिथु-

नस्य प्रजात्यै प्र प्रजया पशुभिर्मिथुनैर्जायते यस्यैता उपधीयन्ते य उ ( ३ ) चैना एवं वेद शुग्वा अग्निः सोऽध्वर्युं यजमानं प्रजाः शुचाऽर्पयति यदप उपदधाति शुचमेवास्य शमयति नाऽऽर्तिमार्छत्यध्वर्युर्न यजमानः शाम्यन्ति प्रजा यत्रैता उपधीयन्तेऽपां वा एतानि हृदयानि यदेता आपो यदेता अप उपदधाति दिव्याभिरेवैनाः सꣳसृजति वर्षुकः पर्जन्यः ( ४ ) भवति यो वा एतासामायतनं क्लृप्तिं वेदाऽऽयतनवान्भवति कल्पतेऽस्मा अनुसीतमुप दधात्येतद्वा आसामायतनमेषा क्लृप्तिर्य एवं वेदाऽऽयतनवान्भवति कल्पतेऽस्मै द्वंद्वमन्या उप दधाति चतस्रो मध्ये धृत्या अन्नं वा इष्टका एतत्खलु वै साक्षादन्नं यदेष चरुर्यदेतं चरुमुपदधाति साक्षात् ( ५ ) एवास्मा अन्नमव रुन्धे मध्यत उप दधाति मध्यत एवास्मा अन्नं दधाति तस्मान्मध्यतोऽन्नमद्यते बार्हस्पत्यो भवति ब्रह्म वै देवानां बृहस्पतिर्ब्रह्मणैवास्मा अन्नमव रुन्धे ब्रह्मवर्चसमसि ब्रह्मवर्चसाय त्वेत्याह तेजस्वी ब्रह्म-

( कुम्भेष्टकोपधानविधिः )

वर्चसी भवति यस्यैष उपधीयते य उ चैन-
मेवं वेद ( ६ ) ॥

( अमृतमस्मै जायते यस्यैता उपधीयन्ते य उ पर्जन्यं उपदधाति
साक्षात्सप्तचत्वारिꣳशच्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां पञ्चमाष्टके
षष्ठप्रपाठके द्वितीयोऽनुवाकः ॥ २ ॥

---

( अथ पञ्चमाष्टके षष्ठप्रपाठके द्वितीयोऽनुवाकः । )

---

अपाम् । ग्रहान् । गृह्णाति । एतत् । वाव । राजसूयमिति राज—सूयम् । यत् । एते । ग्रहाः । सवः । अग्निः । वरुणसव इति वरुण—सवः । राज-सूयमिति राज—सूयम् । अग्निसव इत्यग्नि—सवः । चित्यः । ताभ्याम् । एव । सूयते । अथो इति । उभौ । एव । लोकौ । अभीति । जयति । यः । च । राजसूयेनेति राज—सूयेन । ईजानस्य । यः । च । अग्निचित इत्यग्नि—चितः । आपः । भवन्ति । आपः । वै । अग्नेः । भ्रातृव्याः । यत् । अपः । अग्नेः । अधस्तात् । उपदधातीत्युप—दधाति । भ्रातृव्याभिभूत्या इति भ्रातृव्य—अभिभूत्यै । भवति । आत्मना । परेति । अस्य । भ्रातृव्यः । भवति । अमृतम् ( १ ) । वै । आपः । तस्मात् ।

अद्भिरित्यंद्—भिः । अवंतान्तमित्यवं—तान्तम् । अभीति । सिञ्चन्ति । न । आर्तिम् । एति । ऋच्छति । सर्वम् । आयुः । एति । यस्यं । एताः । उपधीयन्त इत्युंप—धीयन्ते । यः । उ । च । एनाः । एवम् । वेदं । अन्नम् । वै । आपः । पशवः । आपः । अन्नम् । पशवः । अन्नाद इत्यंन्न—अदः । पशुमानिति पशु—मान् । भवति । यस्यं । एताः । उपधीयन्त इत्युंप—धीयन्ते । यः । उ । च । एनाः । एवम् । वेदं । द्वादंश । भवन्ति । द्वादंश । मासाः । संवत्सर इतिं सं—वत्सरः । संवत्सरेणेतिं सं—वत्सरेणं । एव । अस्मै ( २ ) । अन्नम् । अवेतिं । रुन्धे । पात्राणि । । भवन्ति । पात्रं । वै । अन्नम् । अद्यते । सयोनीति स—योनि । एव । अन्नम् । अवेतिं । रुन्धे । एति । द्वादशात् । पुरुंषात् । अन्नम् । अत्ति । अथो इतिं । पात्रांत् । न । छिद्यते । यस्यं । एताः । उपधीयन्त इत्युंप—धीयन्ते । यः । उ । च । एनाः । एवम् । वेदं । कुम्भाः । च । कुम्भीः । च । मिथुनानिं । भवन्ति । मिथुनस्यं । प्रजांत्या इति प्र—जात्यै । प्रेतिं । प्रजयेतिं प्र—जयां । पशुभिरितिं पशु—भिः । मिथुनैः । जायते । यस्यं । एताः । उप-

धीयन्त इत्युप—धीयन्ते। यः। उ (३)। च। एनाः। एवम्। वेद। शुक्। वै। अग्निः। सः। अध्वर्युम्। यजमानम्। प्रजा इति प्र—जाः। शुचा। अर्पयति। यत्। अपः। उपदधातीत्युप—दधाति। शुचम्। एव। अस्य। शमयति। न। आर्तिम्। एति। ऋच्छति। अध्वर्युः। न। यजमानः। शाम्यन्ति। प्रजा इति प्र—जाः। यत्र। एताः। उपधीयन्त इत्युप—धीयन्ते। अपाम्। वै। एतानि। हृदयानि। यत्। एताः। आपः। यत्। एताः। अपः। उपदधातीत्युप—दधाति। दिव्याभिः। एव। एनाः। समिति। सृजति। वर्षुकः। पर्जन्यः (४)। भवति। यः। वै। एतासाम्। आयतनमित्या—यतनम्। क्लृप्तिम्। वेद। आयतनवानित्यायतन—वान्। भवति। कल्पते। अस्मै। अनुसीतमित्यनु—सीतम्। उपेति। दधाति। एतत्। वै। आसाम्। आयतनमित्या—यतनम्। एषा। क्लृप्तिः। यः। एवम्। वेद। आयतनवानित्यायतन—वान्। भवति। कल्पते। अस्मै। द्वंद्वमिति द्वं—द्वम्। अन्याः। उपेति। दधाति। चतस्रः। मध्ये। धृत्यै। अन्नम्। वै। इष्टकाः। एतत्। खलु।

वै । साक्षादिति स—अक्षात् । अन्नम् । यत् । एषः । चरुः । यत् । एतम् । चरुम् । उपदधातीत्युप—दधाति । साक्षादिति स—अक्षात् ( ५ ) । एव । अस्मै । अन्नम् । अवेति । रुन्धे । मध्यतः । उपेति । दधाति । मध्यतः । एव । अस्मै । अन्नम् । दधाति । तस्मात् । मध्यतः । अन्नम् । अद्यते । बार्हस्पत्यः । भवति । ब्रह्म । वै । देवानाम् । बृहस्पतिः । ब्रह्मणा । एव । अस्मै । अन्नम् । अवेति । रुन्धे । ब्रह्मवर्चसमिति ब्रह्म—वर्चसम् । असि । ब्रह्मवर्चसायेति ब्रह्म—वर्चसाय । त्वा । इति । आह । तेजस्वी । ब्रह्मवर्चसीति ब्रह्म—वर्चसी । भवति । यस्य । एषः । उपधीयत इत्युप—धीयते । यः । उ । च । एनम् । एवम् । वेद ( ६ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे पञ्चमाष्टके षष्ठप्रपाठके द्वितीयोऽनुवाकः ॥ २ ॥

---

( अथ पञ्चमकाण्डे षष्ठप्रपाठके द्वितीयोऽनुवाकः । )

---

कुम्भेष्टकामन्त्रणार्था मन्त्राः प्रथम ईरिताः ॥

अथ द्वितीये तदिष्टकोपधानं विधत्ते । यदुक्तं सूत्रकारेण " कुम्भं कुम्भीं चाद्भिः पूरयित्वा शर्म च स्थ वर्म च स्थ देवस्य वः सवितुः प्रसवे मधुमतीः सादयामीति पुरस्तादनुसीतमुपधाय ज्योतिषे वामिति हिरण्यशल्कौ

( कुम्भेष्टकोपधानविधिः )

मर्त्यस्येत्येवमुत्तरा उत्तरैर्मन्त्रैः प्रतिदिशमनुसीतं चतस्रो मध्ये " इति, तदिदमुपधानं विधत्ते—

अपां ग्रहान्गृह्णात्येतद्वाव राजसूयं यदेते ग्रहाः सवोऽग्निर्वरुणसवो राजसूयमग्निसवश्चित्यस्ताभ्यामेव सूयतेऽथो उभावेव लोकावभिजयति यश्च राजसूयेनेजानस्य यश्चाग्निचितः, इति ।

गृह्यन्त आप एष्विति ग्रहा जलाधाराः कुम्भाः कुम्भ्यश्च । ते चाद्भिः पूरितत्वादपां ग्रहास्तान्कुम्भकुम्भीरूपान्गृह्णाति । ग्रहणेनोपधानमुपलक्ष्यते । यस्यैता उपधीयन्त इत्युपसंहारात् । राजसूये ग्रहसद्भावात्तत्साम्यमापादयितुमिह ग्रहिधातुना व्यवहारः । य एते कुम्भकुम्भीरूपा अपां ग्रहा एतदेव राजसूयस्वरूपं, फलेन तत्सदृशत्वात् । योऽयं चीयमानोऽग्निः सोऽयं सवः सूयतेऽभिषिच्यते यजमानोऽत्रेत्यभिषेकयुक्तो यज्ञः सवस्तत्सदृशोऽयमग्निः । यदेतद्राजसूयाख्यं कर्म सोऽयं वरुणसवः । वरुणो हि कदाचिद्राजसूयं कृत्वा तत्राभिषिक्तः । यस्तु चित्यः सोऽयमग्निसवः । अस्मिन्नप्यग्नावभिषेको विद्यते । अतः कुम्भीष्टकोपधाने सति ताभ्यां वरुणसवाग्निसवाभ्यामुभाभ्यां सूयतेऽयं यजमानोऽनुष्ठितवान्भवति । अपि च राजसूयेनेष्टवतो यो लोकोऽग्निचितश्च यो लोकस्तावुभौ लोकावेतदिष्टकोपधानेनाभिजयत्येव ॥

कुम्भेषु कुम्भीषु च जलस्थापनं विधत्ते—

आपो भवन्त्यापो वा अग्नेर्भ्रातृव्या यदपोऽग्नेरधस्तादुपदधाति भ्रातृव्याभिभूत्यै भवत्यात्मना पराऽस्य भ्रातृव्यो भवत्यमृतं वा आपस्तस्मादद्भिरवतान्तमभि षिञ्चन्ति, इति ।

जलेनाग्निशान्तेरपामग्निशत्रुत्वम् । अतश्चीयमानस्याग्नेरधस्ताद्भूमौ कुम्भकुम्भीगतानामपामुपधाने सति भ्रातृव्याभिभूतिर्भवति । उपधाता स्वयमैश्वर्यवान्भवति । भ्रातृव्यः पराभवति । किंचैता आपोऽमृतमेवात्र तस्योदकजन्यत्वात् । यस्मादमृतं तस्मादवतान्तमत्यन्तग्लानिमापन्नं मूर्छितं मूर्छानिवारणाय शीतलाभिरद्भिरभिषिञ्चन्ति ॥

---

१ क. °त्स्यत्ये° । २ घ. ङ. °तरै° ।

एतदुपधानं तद्वेदनं च प्रशंसति—

नाऽऽर्तिमार्छति सर्वमायुरेति यस्यैता उपधीयन्ते य उ चैना एवं वेद, इति ॥

प्रकारान्तरेणापः प्रशंसति—

अन्नं वा आपः पशव आपोऽन्नं पशवोऽन्नादः पशुमान्भवति यस्यैता उपधीयन्ते य उ चैना एवं वेद, इति ।

अन्नस्योदकजन्यत्वात्पशूनां चोदकपोष्यत्वादन्नरूपत्वं च । क्षीराद्यन्नहेतुत्वात्पशूनामप्यन्नत्वम् । अतोऽपामुपधाता वेदिता चान्नवान्पशुमांश्च भवति ॥

जलपात्राणां संख्यां विधत्ते—

द्वादश भवन्ति द्वादश मासाः संवत्सरः संवत्सरेणैवास्मा अन्नमव रुन्धे, इति ॥

उपधेयानामपामाधारान्विधत्ते—

पात्राणि भवन्ति पात्रे वा अन्नमद्यते सयोन्येवान्नमव रुन्ध आ द्वादशात्पुरुषादन्नमत्त्यथो पात्रान्न छिद्यते यस्यैता उपधीयन्ते य उ चैना एवं वेद, इति ।

पात्राणि कुम्भकुम्भीरूपाणि । पात्रे कांस्यादिमये जनैरन्नं भक्ष्यते पच्यते च । अतः पात्रस्यान्नयोनित्वात्तत्सहितमेवान्नमाप्नोति । किंचोपधाता वेदिता च पात्रसंख्यया स्वात्मपुत्रपौत्रादेर्द्वादशपुरुषपर्यन्तादन्नसमृद्धो भवति । अपि च पात्राद्गृहोपकरणसंघातात्कदाचिदपि न विच्छिद्यते ॥

पात्राणां परिमाणविशेषं विधत्ते—

कुम्भाश्च कुम्भीश्च मिथुनानि भवन्ति मिथुनस्य प्रजात्यै प्र प्रजया पशुभिर्मिथुनैर्जायते यस्यैता उपधीयन्ते य उ चैना एवं वेद, इति ।

कुम्भाः पुरुषसदृशाः प्रौढा घटाः । कुम्भ्यो योषित्समाना अल्पाः ।

( कुम्भेष्टकोपधानविधिः )

अतो मिथुनसंपत्त्या प्रजोत्पादनाय भवति । उपधातृवेदितारौ मिथुनरूपाः प्रजा उत्पादयतः ॥

प्रकारान्तरेण तदुपधानं प्रशंसति—

शुग्वा अग्निः सोऽध्वर्युं यजमानं प्रजाः
शुचाऽर्पयति यदप उपदधाति शुचमेवास्य
शमयति नाऽऽर्तिमार्छत्यध्वर्युर्न यजमानः
शाम्यन्ति प्रजा यत्रैता उपधीयन्ते, इति ।

अयमग्निः शुग्वै संतापहेतुरेव । अतः सोऽग्निरध्वर्युप्रभृतीन्संतापेन योजयति । अपामुपधानेनाग्नेः संतापहेतुत्वं शमयति । यस्मिन्कर्मण्येता इष्टका उपधीयन्ते न तत्राध्वर्युर्म्रियते नापि यजमानः । प्रजाश्च सर्वबाधोपशमयुक्ता भवन्ति ॥

पुनः प्रकारान्तरेण प्रशंसति--

अपां वा एतानि हृदयानि यदेता आपो
यदेता अप उपदधाति दिव्याभिरेवैनाः
सꣳ सृजति वर्षुकः पर्जन्यो भवति, इति ।

एताः पात्रगता या आप एतान्यब्देवतानां हृदयस्थानानि । अत एवाऽऽसामुपधातेष्टकारूपोपेता अपो दिव्याभिरद्भिः संयोजयति । ततः पर्जन्यो वर्षणशीलो भवति ॥

अथोपधानस्थानं विधत्ते—

यो वा एतासामायतनं क्लृप्तिं वेदाऽऽयत-
नवान्भवति कल्पतेऽस्मा अनुसीतमुप द-
धात्येतद्वा आसामायतनमेषा क्लृप्तिः, इति ।

आयतनं स्थानम् । क्लृप्तिः सामर्थ्यम् । तदुभयं यो वेद स प्रौढगृहाद्यायतनवान्भवति । एतदर्थं च सर्वं भोग्यजातं समृद्धं भवति । अतोऽभिज्ञोऽनुसीतमुपदध्यात्, एकैकस्यां दिशि या लाङ्गलपद्धतयस्ता अनुसृत्योपदध्यात् । एतत्सीतासमीपमेवैतासां कुम्भेष्टकानां स्थानम् । तत्रावस्थितिरेवैतासां सामर्थ्यमुक्तम् ॥

---

१ ख भवन्ति ।

वेदनफलमुपसंहरति—

य एवं वेदाऽऽयतनवान्भवति कल्पतेऽस्मै , इति ॥

उपधाने प्रकारविशेषं विधत्ते—

द्वंद्वमन्या उप दधाति चतस्रो मध्ये धृत्यै, इति।

पूर्वदिग्वर्तिनीषु तिसृषु सीतासु कुम्भं कुम्भीं चेति द्वंद्वम् । एवं दिगन्तरेष्वपि । तदिदमुच्यते—द्वंद्वमन्या इति । द्वादशानां मध्ये दिक्चतुष्टयेऽष्टौ गताः । अथावशिष्टाश्चतस्रो मध्ये स्थापयेत् । तच्च धृत्यै दार्ढ्याय भवति ॥

अथ दिवि श्रयस्वेतिमन्त्रसाध्यं चरूपधानं विधत्ते—

अन्नं वा इष्टका एतत्खलु वै साक्षा-
दन्नं यदेष चरुर्यदेतं चरुमुपदधाति
साक्षादेवास्मा अन्नमव रुन्धे , इति ॥

इष्टका अन्नहेतुत्वादन्नं, चरुः साक्षादेवान्नमतश्चरूपधानेन व्यवधानं विनैव मुख्यमन्नं प्राप्नोति ॥

उपधानस्थानं विधत्ते—

मध्यत उप दधाति मध्यत एवास्मा अन्नं
दधाति तस्मान्मध्यतोऽन्नमद्यते, इति ।

इष्टकानां मध्ये चरुस्थापनं यत्तद्यजमानस्य मध्य उदरेऽन्नं स्थापितं भवति । मध्यमे वयसि भूयिष्ठमन्नमद्यते ॥

चरोर्देवतां विधत्ते—

बार्हस्पत्यो भवति ब्रह्म वै देवानां बृह-
स्पतिर्ब्रह्मणैवास्मा अन्नमव रुन्धे, इति ।

ब्रह्मणैव ब्राह्मणवृत्त्यैव याजनादिना न तु सेवादिनेत्यर्थः ॥

मन्त्रे ब्रह्मवर्चसशब्दद्वयस्य तात्पर्यं दर्शयति—

ब्रह्मवर्चसमसि ब्रह्मवर्चसाय त्वेत्याह
तेजस्वी ब्रह्मवर्चसी भवति यस्यैष उप-
धीयते य उ चैनमेवं वेद ॥ , इति ॥

तेजः कान्तिः । ब्रह्मवर्चसमध्ययनादिसंपत्तिः ॥

अत्र मीमांसा।

द्वितीयाध्यायस्य तृतीयपादे सप्तमाधिकरणे चिन्तितम्—

चरुर्भवति नैवार उपधत्ते चरुं त्विति।
यागः स्यादुपधानं वा यागः शेषोक्तदेवतः॥
यागत्वानिश्चये शेषो नापेक्ष्योऽतो यजिः कुतः।
किं तूपधानमात्रत्वं यावदुक्तं चरोः स्थितम्॥

अग्नौ श्रूयते–"नैवारश्चरुर्भवति" इति, "चरुमुपदधाति" इति च। तत्र नीवारचरुद्रव्यको यागो विधीयते। न चात्र देवताया अभावः। "बृहस्पतेर्वा एतदन्नं यन्नीवाराः" इति वाक्यशेषेण देवतासिद्धेः। उपधानं तु यागोपयुक्तस्य प्रतिपत्तिः स्विष्टकृद्वदिति प्राप्ते ब्रूमः—यागविधौ निश्चिते सति पश्चाद्देवतायामपेक्षितायां वाक्यशेषबलाद्देवताक्लृप्तिः। इह तु देवताकल्पनेन यागविधित्वनिश्चय इत्यन्योन्याश्रयः। तस्मादिहोपधानमात्रं विधीयते॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये पञ्चमकाण्डे षष्ठप्रपाठके द्वितीयोऽनुवाकः॥ २॥

---

( अथ पञ्चमाष्टके षष्ठप्रपाठके तृतीयोऽनुवाकः। )

---

भूतेष्टका उप॑ दधात्यत्रा॑त्र॒ वै मृ॒त्युर्जा॑यते॒ यत्र॑यत्रै॒व मृ॒त्युर्जाय॑ते॒ तत॑ ए॒वैन॒मव॑ यजते॒ तस्मा॑दग्नि॒चित्सर्व॒मायु॑रेति॒ सर्वे॒ ह्य॑स्य मृ॒त्यवो॑ऽवेष्टा॒स्तस्मा॑दग्नि॒चिन्ना॑भि॒चरि॑त॒वै प्र॒त्यगे॑न॒मभि॒चा॒रः स्तृ॑णुते॒ सूय॑ते॒ वा ए॒ष यो॑ऽग्निं चि॑नु॒ते दे॑वसु॒वामे॒तानि॑ ह॒वीꣳषि॑ भवन्त्ये॒ताव॑न्तो॒ वै दे॒वानाꣳ॑ स॒वास्त ए॒व (१) अ॒स्मै

---

१ ख. 'गस्यानि'।

सवान्प्र यच्छन्ति त एनꣳ सुवन्ते सवोऽग्नि-
र्वरुणसवो राजसूयं ब्रह्मसवश्चित्यो देवस्य त्वा
सवितुः प्रसव इत्याह सवितृप्रसूत एवैनं
ब्रह्मणा देवताभिरभि षिञ्चत्यन्नस्यान्नस्याभि-
षिञ्चत्यन्नस्यान्नस्यावरुद्ध्यै पुरस्तात्प्रत्यञ्चमभि-
षिञ्चति पुरस्ताद्धि प्रतीचीनमन्नमद्यते शीर्ष-
तोऽभि षिञ्चति शीर्षतो ह्यन्नमद्यत आ मुखा-
दन्ववस्रावयति ( २ ) मुखत एवास्मा अन्नाद्यं
दधात्यग्नेस्त्वा साम्राज्येनाभि षिञ्चामीत्याहैष
वा अग्नेः सवस्तेनैवैनमभि षिञ्चति बृहस्प-
तेस्त्वा साम्राज्येनाभि षिञ्चामीत्याह ब्रह्म वै
देवानां बृहस्पतिर्ब्रह्मणैवैनमभि षिञ्चतीन्द्रस्य
त्वा साम्राज्येनाभि षिञ्चामीत्याहेन्द्रियमेवा-
स्मिन्नुपरिष्टाद्दधात्येतद्व ( ३ ) वै राजसूयस्य
रूपं य एवं विद्वानग्निं चिनुत उभावेव लोका-
वभि जयति यश्च राजसूयेनेजानस्य यश्चाग्नि-
चित इन्द्रस्य सुषुवाणस्य दशधेन्द्रियं वीर्यं
पराऽपतत्तद्देवाः सौत्रामण्या समभरन्त्सूयते
वा एष योऽग्निं चिनुतेऽग्निं चित्वा सौत्राम-

ण्या यजतेन्द्रियमेव वीर्यꣳ संभृत्याऽऽत्मन्धत्ते ( ४ ) ॥

( त एवान्ववंस्रावयत्येतद्दष्टाचत्वारिꣳशच्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां पञ्चमाष्टके षष्ठप्रपाठके तृतीयोऽनुवाकः ॥ ३ ॥

---

( अथ पञ्चमाष्टके षष्ठप्रपाठके तृतीयोऽनुवाकः । )

---

भूतेष्टका इति भूत—इष्टकाः । उपेति । दधाति । अत्रात्रेत्यत्र—अत्र । वै । मृत्युः । जायते । यत्रयत्रेति यत्र—यत्र । एव । मृत्युः । जायते । ततः । एव । एनम् । अवेति । यजते । तस्मात् । अग्निचिदित्यग्नि—चित् । सर्वम् । आयुः । एति । सर्वे । हि । अस्य । मृत्यवः । अवेष्टा इत्यव—इष्टाः । तस्मात् । अग्निचिदित्यग्नि—चित् । न । अभिचरितवा इत्यभि—चरितवै । प्रत्यक् । एनम् । अभिचार इत्यभि—चारः । स्तृणुते । सूयते । वै । एषः । यः । अग्निम् । चिनुते । देवसुवामिति देव—सुवाम् । एतानि । हवीꣳषि । भवन्ति । एतावन्तः । वै । देवानाम् । सवाः । ते । एव ( १ ) । अस्मै । सवान् । प्रेति । यच्छन्ति । ते । एनम् । सुवन्ते । सवः । अग्निः । वरुणसव

इति॑ वरुण—स॒वः । रा॒ज॒सू॒य॒मिति॑ राज—सूय॑म् । ब्र॒ह्म॒स॒व इति॑ ब्रह्म—स॒वः । चित्यः॑ । दे॒वस्य॑ । त्वा॒ । स॒वि॒तुः । प्र॒स॒व इति॑ प्र—स॒वे । इति॑ । आ॒ह॒ । स॒वि॒तृप्र॑सू॒त इति॑ सवि॒तृ—प्र॒सू॒तः । ए॒व । ए॒नम् । ब्रह्म॑णा । दे॒वता॑भिः । अ॒भीति॑ । सि॒ञ्च॒ति । अन्न॑स्यान्न॒स्येत्यन्न॑स्य—अ॒न्न॒स्य॒ । अ॒भीति॑ । सि॒ञ्च॒ति । अन्न॑स्यान्न॒स्येत्यन्न॑स्य—अ॒न्न॒स्य॒ । अव॑रुद्ध्या॒ इत्यव॑—रु॒द्ध्यै॒ । पु॒रस्ता॑त् । प्र॒त्यञ्च॑म् । अ॒भीति॑ । सि॒ञ्च॒ति । पु॒रस्ता॑त् । हि । प्र॒ती॒चीन॑म् । अन्न॑म् । अ॒द्यते॑ । शी॒र्ष॒तः । अ॒भीति॑ । सि॒ञ्च॒ति । शी॒र्ष॒तः । हि । अन्न॑म् । अ॒द्यते॑ । एति॑ । मुखा॑त् । अ॒न्व॒व॑स्रावय॒तीत्य॑नु—अव॑स्रावयति (२) । मु॒ख॒तः । ए॒व । अ॒स्मै॒ । अ॒न्ना॒द्यमित्य॑न्न—अद्य॑म् । द॒धा॒ति॒ । अ॒ग्नेः । त्वा॒ । साम्रा॑ज्ये॒नेति॒ साम्—रा॒ज्ये॒न॒ । अ॒भीति॑ । सि॒ञ्चा॒मि॒ । इति॑ । आ॒ह॒ । ए॒षः । वै । अ॒ग्नेः । स॒वः । तेन॑ । ए॒व । ए॒नम् । अ॒भीति॑ । सि॒ञ्च॒ति । बृह॒स्पतेः॑ । त्वा॒ । साम्रा॑ज्ये॒नेति॒ साम्—रा॒ज्ये॒न॒ । अ॒भीति॑ । सि॒ञ्चा॒मि॒ । इति॑ । आ॒ह॒ । ब्रह्म॑ । वै । दे॒वाना॑म् । बृह॒स्पतिः॑ । ब्रह्म॑णा । ए॒व । ए॒नम् । अ॒भीति॑ । सि॒ञ्च॒ति । इन्द्र॑स्य । त्वा॒ । साम्रा॑ज्ये॒नेति॒ साम्—रा॒ज्ये॒न॒ ।

( कुम्भेष्टकोपधानविधिः )

अभीति । सिञ्चामि । इति । आह । इन्द्रियम् । एव । अस्मिन् । उपरिष्टात् । दधाति । एतत् (३) । वै । राजसूयस्येति राज—सूयस्य । रूपम् । यः । एवम् । विद्वान् । अग्निम् । चिनुते । उभौ । एव । लोकौ । अभीति । जयति । यः । च । राजसूयेनेति राज—सूयेन । ईजानस्य । यः । च । अग्निचित इत्यग्नि—चितः । इन्द्रस्य । सुषुवाणस्य । दशधेति दश—धा । इन्द्रियम् । वीर्यम् । परेति । अपतत् । तत् । देवाः । सौत्रामण्या । समिति । अभरन् । सूयते । वै । एषः । यः । अग्निम् । चिनुते । अग्निम् । चित्वा । सौत्रामण्या । यजेत । इन्द्रियम् । एव । वीर्यम् । संभृत्येति सं—भृत्य । आत्मन् । धत्ते ( ४ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे पञ्चमाष्टके षष्ठप्रपाठके तृतीयोऽनुवाकः ॥ ३ ॥

---

( अथ पञ्चमकाण्डे षष्ठप्रपाठके तृतीयोऽनुवाकः । )

---

कुम्भेष्टकाश्चरुश्चेति द्वितीये द्वयमीरितम् ॥

अथ तृतीये भूतेष्टकादिकमुच्यते । यदुक्तं सूत्रकारेण—" प्रसवाय त्वोपयामाय त्वा काटाय त्वाऽर्णवाय त्वा धर्णसाय त्वा द्रविणाय त्वा सिन्धवे त्वा समुद्राय त्वा सरस्वते त्वा विश्वव्यचसे त्वा सुभूताय त्वाऽन्तरिक्षाय त्वेति द्वादश भूतेष्टकाः " इति । एते च मन्त्राः शाखान्तरगताः । तत्साध्यमुपधानं विधत्ते—

भूतेष्टका उप दधात्यत्रात्र वै मृत्युर्जायते यत्रयत्रैव मृत्युर्जायते तत एवैनमव यजते तस्मादग्निचित्सर्वमायुरेति सर्वे ह्यस्य मृत्यवोऽवेष्टास्तस्मादग्निचिन्नाभिचरितवै प्रत्यगेनमभिचारः स्तृणुते , इति ।

देशकालनिमित्तविशेषानपेक्ष्यात्रात्रेति वीप्सा। सर्पव्याघ्रचोराकुलदेशा मृत्युहेतवः । संध्यामध्यरात्रादिर्यक्षराक्षसादिप्रयुक्तमृत्युकालः। दुराहारभोजनादीनि मृत्युनिमित्तानि। भूतेष्टकोपधानेन तत एव देशप्रयुक्तात्कालप्रयुक्तान्निमित्तप्रयुक्ताच्च सर्वस्मादपि मृत्योरेनं यजमानमपनयति। तस्मादयमग्निचित्स्वस्य प्राप्तमायुः सर्वमेव प्राप्नोति। यस्मादस्य सर्वेऽप्यपमृत्यवो विनाशिताः। किंचायमग्निचिदभिचारविषयोऽपि न भवति। एवं सति यो मूर्खोऽभिचरति एनं मूर्खं सोऽभिचारः प्रत्यङ्मुखो भूत्वा हिनस्ति ॥

यदुक्तं सूत्रकारेण—"अग्नीषोमीयस्य पशुपुरोडाशमष्टौ देवसुवां हवींष्यनु निर्वपति समानं तु स्विष्टकृदिडम्" इति, तदिदं विधत्ते—

सूयते वा एष योऽग्निं चिनुते देवसुवामेतानि हवीꣳषि भवन्त्येतावन्तो वै देवानाꣳ सवास्त एवास्मै सवान्प्र यच्छन्ति त एनꣳ सुवन्ते , इति ।

यो यजमानोऽग्निं चिनुते स एष देवैः सूयते प्रेर्यते। अतः प्रेरणाय हवींषि निर्वपेत्। अग्नये गृहपतये पुरोडाशमित्यादिराजसूयाम्नातानि देवसुवां हवींषि। तत्र श्रुता येऽग्न्यादयो देवा एतावन्त एव देवानां मध्ये प्रेरकाः। त एव देवा अस्मै यजमानाय स्वकीयाः सर्वा अनुज्ञाः प्रयच्छन्ति । तेन चानुज्ञाप्रदानेनैनं यजमानं प्रेरयन्ति ॥

यदुक्तं सूत्रकारेण—"दक्षिणं प्रत्यपि पक्षमौदुम्बरीमासन्दीं प्रतिष्ठाप्य तस्यां कृष्णाजिनं प्राचीनग्रीवमुत्तरलोमाऽऽस्तीर्य तस्मिन्नासीनं यजमानमग्निमन्वारब्धं संपातैरभिषिञ्चति" इति, तदिदं विधातुं प्रस्तौति—

सवोऽग्निर्वरुणसवो राजसूयं ब्रह्मसवश्चित्यः , इति ।

अभिषेकयुक्तो यागः सव इति ह्युक्तम्। स च द्विविधो वरुणसवो ब्रह्म-

(भूतेष्टकाद्यभिधानम्)

सवश्च। राजकर्तृ[क]त्वाद्राजसूयं वरुणसवः। वरुणो हि राजाभिमानी देवः। चित्योऽग्निस्तु ब्राह्मणैरप्यनुष्ठेयत्वाद्ब्रह्मसवः। अग्निर्ब्राह्मणाभिमानी देवः। अतः सवत्वादयमभिषेकयोग्य इत्यर्थः॥

मन्त्रपूर्वकमभिषेकं विधत्ते—

देवस्य त्वा सवितुः प्रसव इत्याह सवितृप्रसूत एवैनं ब्रह्मणा देवताभिरभि षिञ्चति, इति।

ब्रह्मणा मन्त्रेण, प्रतिपाद्याभिरिति शेषः॥

सर्वौषधिरसमभिषेकद्रव्यत्वेन विधत्ते—

अन्नस्यान्नस्याभि षिञ्चत्यन्नस्यान्नस्यावरुद्ध्यै, इति॥

प्रकारविशेषं विधत्ते—

पुरस्तात्प्रत्यञ्चमभि षिञ्चति पुरस्ताद्धि प्रतीचीनमन्नमद्यते शीर्षतोऽभि षिञ्चति शीर्षतो ह्यन्नमद्यते, इति।

पूर्वस्यां दिशि पश्चिमाभिमुखोऽवस्थाय प्रत्यञ्चं स्वाभिमुखं यजमानमभिषिञ्चेत्। लोके हि पुरस्तात्पात्रेऽवस्थितमन्नं स्वाभिमुखत्वेनाद्यते। शिर आरभ्याभिषिञ्चेत्। अन्नमपि शिरोदेशावस्थिते मुखे भुज्यते॥

गुणान्तरं विधत्ते—

आ मुखादन्ववस्रावयति मुखत एवास्मा अन्नाद्यं दधाति, इति।

शिर आरभ्याऽऽनुलोम्येन मुखपर्यन्तमवस्रावयेन्न त्वधः॥

मन्त्रेष्वग्निबृहस्पतीन्द्रशब्दतात्पर्यं व्याचष्टे—

अग्नेस्त्वा साम्राज्येनाभि षिञ्चामीत्याहैष वा अग्नेः सवस्तेनैवैनमभि षिञ्चति बृहस्पतेस्त्वा साम्राज्येनाभि षिञ्चामीत्याह ब्रह्म वै देवानां बृहस्पतिर्ब्रह्मणैवैनमभि षिञ्चतीन्द्रस्य त्वा साम्राज्येनाभि षिञ्चामीत्याहेन्द्रियमेवास्मिन्नुपरिष्टाद्दधाति, इति।

एष ओषधिरसोऽग्नेः सवोऽग्निना प्रेरितः। अतोऽग्निशब्दमुच्चारयन्नग्निसंबन्धेनं तेनैव रसेनाभिषिञ्चति। एष वै बृहस्पतेः सव एष वा इन्द्रस्य सव इत्यप्यनुसंधेयम्। एतेऽभिषेकमन्त्राः शाखान्तर आम्नाताः। इह ब्राह्मणेन व्याख्याताः॥

राजसूयसाम्येनाभिषेकं प्रशंसति--

एतद्वै राजसूयस्य रूपं य एवं विद्वा-
नग्निं चिनुत उभावेव लोकावभि जयति
यश्च राजसूयेनेजानस्य यश्चाग्निचितः, इति।

एतदभिषेचनमेवाग्नेश्चित्यस्य राजसूयस्य स्वरूपम्। एवंविदश्चिन्वानस्योभयफलं भवति॥

अतश्चयनाङ्गत्वेन सौत्रामणीं विधत्ते--

इन्द्रस्य सुषुवाणस्य दशधेन्द्रियं वीर्यं पराऽ-
पतत्तद्देवाः सौत्रामण्या समभरन्त्सूयते वा एष
योऽग्निं चिनुतेऽग्निं चित्वा सौत्रामण्या यजे-
तेन्द्रियमेव वीर्यꣳ संभृत्याऽऽत्मन्धत्ते ॥, इति॥

सोममभिषुतवत इन्द्रस्येन्द्रियं सोमोपद्रवपापेन दशधा भूत्वा पतितमभूत्। तदेतदिन्द्रियं देवाः सौत्रामण्या स्वाद्वीं त्वेत्यादिग्रन्थप्रतिपाद्येन यागेन सम्यक्संपादितवन्तः। एवं सत्यत्रापि योऽग्निं चिनुत एषोऽपि सोमाभिषवे प्रेर्यते। तस्मादयमपीन्द्रियसामर्थ्यसंपादनाय सौत्रामण्याख्यं यागमनुतिष्ठेत्। सौत्रामण्याश्चयनाङ्गत्वं न बोध्यते, किंतु कालविधिरयम्। तस्मादिदं वाक्यं प्रकरणादुत्क्रष्टव्यम्॥

अथ मीमांसा।

चतुर्थाध्यायस्य तृतीयपादे विंशेऽधिकरणे चिन्तितम्—

अग्निं चित्वा यजेत्सौत्रामण्येत्यङ्गेष्टिरीदृशी।
अङ्गिकाले स्वकाले वा स्यादाद्योऽन्याङ्गवन्मतः॥
निर्वृत्ते चयनादौ तु कर्मान्तरविधानतः।
स्वकाले चोदकप्राप्ते तदनुष्ठानमास्थितम्॥

अग्निं चित्वा सौत्रामण्या यजेत, वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेतेत्यत्र

१ ख. च. न तेन ते°।

( होमाभिधानम् )

सौत्रामणीबृहस्पतिसवयोरङ्गत्वं पूर्वमुक्तम्। तच्चाङ्गमङ्गिकालेऽङ्गिना सह प्रयोक्तव्यमितरेषामङ्गानां तथा प्रयुज्यमानत्वादिति चेन्मैवम्। क्त्वाप्रत्ययेन पूर्वकालवाचिना साङ्गे चयनादौ निर्वृत्ते सति पश्चात्कर्मान्तरत्वेन सौत्रामण्यादेर्विहितत्वात्। यद्यङ्गिना सहैकप्रयोगः स्यात्तदा क्त्वाप्रत्ययप्रापितः पूर्वोत्तरकालविभागो बाध्येत। न ह्यङ्गिना सह प्रयोक्तव्यानामुखासंभरणादीनां चयने निर्वृत्ते पश्चाद्विधानं श्रुतम्। ततः पृथक्प्रयोगेऽवश्यंभाविनि सति स्वस्वचोदकप्रापिते काले तदनुष्ठानं युक्तम्। सौत्रामण्या इष्टिप्रकृतिकत्वात्पर्वकालश्चोदकप्राप्तः। चयनेन सहैव प्रयोगे तु पर्वण्युखासंभरणादिविधानादन्यस्मिन्दिने सौत्रामणी प्रसज्येत। तथा बृहस्पतिसवस्य ज्योतिष्टोमविकृतित्वाद्वसन्तकालश्चोदकप्राप्तः। वाजपेयेन सह प्रयोगैक्ये शरदि वाजपेयस्य विहितत्वाद्बृहस्पतिसवोऽपि शरदि प्रसज्येत। तस्मादतिदिष्टे पर्वणि वसन्ते[च] तदनुष्ठानम्। ननु सर्वत्राङ्गापूर्वैः प्रधानापूर्वं जनयितव्यम्। इह तु पूर्वकालीनेन साङ्गप्रधानानुष्ठानेन फलापूर्वस्य निष्पन्नत्वादुत्तरकालीनमङ्गं निरर्थकमिति चेन्न। तस्यैवापूर्वस्यानेनाङ्गेन प्राबल्यदशायाः कल्पनीयत्वात्। तस्मान्नाङ्गिनः कालेऽनुष्ठानं, किंतु स्वकाल इति स्थितम्। पूर्वानुवाकोक्तकुम्भेष्टकाचरूपधानस्य प्राणभृद्भ्योऽपानभृद्भ्यश्चोर्ध्वभावित्वादिदं ब्राह्मणमभिमन्त्रणमन्त्रसहितं पशुर्वा एष यदग्निरित्यनुवाकान्ते द्रष्टव्यम्। भूतेष्टकोपधानं तु वालखिल्योपधानादूर्ध्वं भवति। अभिषेकस्त्वग्निर्वै देवानामभिषिक्त इत्यस्मात्पूर्वं द्रष्टव्यः। सौत्रामणीब्राह्मणं तु कृत्स्नाद्ब्राह्मणादूर्ध्वं द्रष्टव्यम्॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये पञ्चमकाण्डे षष्ठप्रपाठके
तृतीयोऽनुवाकः॥ ३॥



( अथ पञ्चमाष्टके षष्ठप्रपाठके चतुर्थोऽनुवाकः। )

सजूरब्दोऽयावभिः सजूरुषा अरुणीभिः सजूः सूर्य एतशेन सजोषावश्विना दꣳसोभिः सजूरग्निर्वैश्वानर इडाभिर्घृतेन स्वाहा संवत्सरो

१ क. घ. ङ. °ष्टिविकृतित्वा°।

वा अब्दो मासा अयावा उषा अरुणीः सूर्य
एतश इमे अश्विना संवत्सरोऽग्निर्वैश्वानरः पशव
इडा पशवो घृतꣳ संवत्सरं पशवोऽनु प्र जाय-
न्ते संवत्सरेणैवास्मै पशून्प्र जनयति दर्भस्तम्बे
जुहोति यद् ( १ ) वा अस्या अमृतं यद्वीर्यं
तद्दर्भास्तस्मिञ्जुहोति प्रैव जायतेऽन्नादो
भवति यस्यैवं जुह्वत्येता वै देवता अग्नेः पुर-
स्ताद्भागास्ता एव प्रीणात्यथो चक्षुरेवाग्नेः पुर-
स्तात्प्रति दधात्यनन्धो भवति य एवं वेदाऽऽ-
पो वा इदमग्रे सलिलमासीत्स प्रजापतिः
पुष्करपर्णे वातो भूतोऽलेलायत्सः ( २ ) प्रति-
ष्ठां नाविन्दत स एतदपां कुलायमपश्यत्तस्मि-
न्नग्निमचिनुत तदियमभवत्ततो वै स प्रत्यति-
ष्ठद्यां पुरस्तादुपादधात्तच्छिरोऽभवत्सा प्राची
दिग्यां दक्षिणत उपादधात्स दक्षिणः पक्षोऽ-
भवत्सा दक्षिणा दिग्यां पश्चादुपादधात्तत्पु-
च्छमभवत्सा प्रतीची दिग्यामुत्तरत उपादधात्
( ३ ) स उत्तरः पक्षोऽभवत्सोदीची दिग्यामु-
परिष्टादुपादधात्तत्पृष्ठमभवत्सोर्ध्वा दिगियं वा
अग्निः पञ्चेष्टकस्तस्माद्यदस्यां खनन्त्यभीष्टकां

तृन्दन्त्यभि शर्कराः सर्वा वा इयं वयोभ्यो नक्तं दृशे दीप्यते तस्मादिमां वयांसि नक्तं नाध्यासते य एवं विद्वानग्निं चिनुते प्रत्येव (४) तिष्ठत्यभि दिशो जयत्याग्नेयो वै ब्राह्मणस्तस्माद्ब्राह्मणाय सर्वासु दिक्ष्वर्धुकः स्वामेव तद्दिशमन्वेत्यपां वा अग्निः कुलायं तस्मादापोऽग्निं हारुकाः स्वामेव तद्योनिं प्र विशन्ति (५)

( यदलेलायत्स उत्तरत उपादधादेव द्वात्रिंशच्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां पञ्चमाष्टके षष्ठप्रपाठके चतुर्थोऽनुवाकः ॥ ४ ॥

---

( अथ पञ्चमाष्टके षष्ठप्रपाठके चतुर्थोऽनुवाकः । )

---

सजूरिति स—जूः । अब्दः । अयावभिरित्ययाव—भिः । सजूरिति स—जूः । उषाः । अरुणीभिः । सजूरिति स—जूः । सूर्यः । एतशेन । सजोषाविति स—जोषौ । अश्विना । दंसोभिरिति दंसः—भिः । सजूरिति स—जूः । अग्निः । वैश्वानरः । इडाभिः । घृतेन । स्वाहा । संवत्सर इति सं—वत्सरः । वै । अब्दः । मासाः । अयावाः । उषाः । अरुणी । सूर्यः । एतशः । इमे इति । अश्विना । संवत्सर

इति सं—वत्सरः । अग्निः । वैश्वानरः । पशवः । इडा । पशवः । घृतम् । संवत्सरमिति सं—वत्सरम् । पशवः । अनु । प्रेति । जायन्ते । संवत्सरेणेति सं—वत्सरेण । एव । अस्मै । पशून् । प्रेति । जनयति । दर्भस्तम्ब इति दर्भ—स्तम्बे । जुहोति । यत् (१) । वै । अस्याः । अमृतम् । यत् । वीर्यम् । तत् । दर्भाः । तस्मिन् । जुहोति । प्रेति । एव । जायते । अन्नाद इत्यन्न—अदः । भवति । यस्य । एवम् । जुह्वति । एताः । वै । देवताः । अग्नेः । पुरस्ताद्भागा इति पुरस्तात्—भागाः । ताः । एव । प्रीणाति । अथो इति । चक्षुः । एव । अग्नेः । पुरस्तात् । प्रतीति । दधाति । अनन्धः । भवति । यः । एवम् । वेद । आपः । वै । इदम् । अग्रे । सलिलम् । आसीत् । सः । प्रजापतिरिति प्रजा—पतिः । पुष्करपर्ण इति पुष्कर—पर्णे । वातः । भूतः । अलेलायत् । सः ( २ ) । प्रतिष्ठामिति प्रति—स्थाम् । न । अविन्दत । सः । एतत् । अपाम् । कुलायम् । अपश्यत् । तस्मिन् । अग्निम् । अचिनुत । तत् । इयम् । अभवत् । ततः । वै । सः । प्रतीति । अतिष्ठत् । याम् । पुरस्तात् । उपादधादित्युप—अदधात् ।

तत् । शिरः । अभवत् । सा । प्राची । दिक् । याम् । दक्षिणतः । उपादधादित्युप—अदधात् । सः । दक्षिणः । पक्षः । अभवत् । सा । दक्षिणा । दिक् । याम् । पश्चात् । उपादधादित्युप—अदधात् । तत् । पुच्छम् । अभवत् । सा । प्रतीची । दिक् । याम् । उत्तरत इत्युत्—तरतः । उपादधादित्युप—अदधात् ( ३ ) । सः । उत्तर इत्युत्—तरः । पक्षः । अभवत् । सा । उदीची । दिक् । याम् । उपरिष्टात् । उपादधादित्युप—अदधात् । तत् । पृष्ठम् । अभवत् । सा । ऊर्ध्वा । दिक् । इयम् । वै । अग्निः । पञ्चेष्टक इति पञ्च—इष्टकः । तस्मात् । यत् । अस्याम् । खनन्ति । अभीति । इष्टकाम् । तृन्दन्ति । अभीति । शर्कराम् । सर्वा । वै । इयम् । वयोभ्य इति वयः—भ्यः । नक्तम् । दृशे । दीप्यते । तस्मात् । इमाम् । वयांसि । नक्तम् । न । अधीति । आसते । यः । एवम् । विद्वान् । अग्निम् । चिनुते । प्रतीति । एव ( ४ ) । तिष्ठति । अभीति । दिशः । जयति । आग्नेयः । वै । ब्राह्मणः । तस्मात् । ब्राह्मणाय । सर्वासु । दिक्षु । अर्धुकम् । स्वाम् । एव । तत् । दिशम् । अन्वितिं । एति । अपाम् । वै ।

अ॒ग्निः । कु॒लाय॑म् । तस्मा॑त् । आप॑ः । अ॒ग्निम् । हारु॑काः । स्वाम् । ए॒व । तत् । योनि॑म् । प्रेति॑ । वि॒श॒न्ति॒ ( ५ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे पञ्चमाष्टके षष्ठप्रपाठके चतुर्थोऽनुवाकः ॥ ४ ॥

---

( अथ पञ्चमकाण्डे षष्ठप्रपाठके चतुर्थोऽनुवाकः । )

---

भूतेष्टकाभिषेकादि तृतीये समुदीरितम् ॥

अथ चतुर्थे होमो विधीयते । यदुक्तं सूत्रकारेण–" सजूरब्दोऽयावभिरिति दर्भस्तम्बे पञ्चाऽऽहुतीर्जुहोति " इति, तमिमं विधातुं मन्त्रानुत्पादयति—

सजूरब्दोऽयावभिः सजूरुषा अरुणीभिः सजूः सूर्य एतशेन सजोषावश्विना दꣳसोभिः सजूरग्निर्वैश्वानर इडाभिर्घृतेन स्वाहा, इति ।

अब्दः संवत्सरः । अयावा मासाः । स च संवत्सरस्तैर्मासैः सह समानप्रीतिः । अत्र सर्वेषु मन्त्रेषु घृतेन स्वाहेत्यनुषज्यते । तस्मै माससहिताय संवत्सराय घृतेन द्रव्येण स्वाहा जुहोमि । उषा येयमुषःकालदेवता सेयमरुणीभी रक्तवर्णाभिः प्रभाभिः सजूः समानप्रीतिः । तामुद्दिश्य घृतेन स्वाहा जुहोमि । सूर्यो देव एतशेन स्वकीयाश्वेन सजूः समानप्रीतिः । तमुद्दिश्य घृतेन स्वाहा जुहोमि । अश्विना यावेतावश्विनौ तौ दंसोभिर्दर्शनैर्व्याधिनिराकरणव्यापारैः सजोषौ परस्परं समानप्रीती । तावुद्दिश्य घृतेन जुहोमि । वैश्वानरः सर्वमनुष्यप्रियो योऽग्निः स इडाभिः पशुभिः सजूः समानप्रीतिः । तमुद्दिश्य घृतेन जुहोमि ॥

मन्त्रान्व्याचष्टे—

संवत्सरो वा अब्दो मासा अयावा उषा अरुणीः सूर्य एतश इमे अश्विना संवत्सरोऽग्निर्वैश्वानरः पशव इडा पशवो

घृतꣳ संवत्सरं पशवोऽनु प्र जायन्ते संवत्सरेणैवास्मै पशून्प्र जनयति, इति।

मन्त्रागतस्याब्दशब्दस्य संवत्सर एवार्थः। अयात्रशब्देन मासा अभिधीयन्ते। उषःशब्दादयश्चत्वारः प्रसिद्धाः। इमे द्यावापृथिव्यावश्विशब्देन विवक्षिते। अग्निर्वैश्वानर इत्यनेन संवत्सरो विवक्षितः। इडाशब्देन पशवो विवक्षिताः। घृतशब्देनापि तत्कारणत्वात्पशव एव विवक्षिताः। तात्पर्यार्थस्तु गर्भभूताः पशवः संवत्सरमनुसृत्य प्रजायन्ते। अत एतन्मन्त्रपाठेनास्मै यजमानाय संवत्सरकालेन पशूनुत्पादयति॥

अथ होमं विधत्ते—

दर्भस्तम्बे जुहोति यद्वा अस्या अमृतं यद्वीर्यं तद्दर्भास्तस्मिन्जुहोति प्रैव जायतेऽन्नादो भवति यस्यैवं जुह्वत्येता वै देवता अग्नेः पुरस्ताद्भागास्ता एव प्रीणात्यथो चक्षुरेवाग्नेः पुरस्तात्प्रति दधाति, इति।

अस्याः पृथिव्याः संबन्धि यदमृतं स्वादुद्रव्यं, यच्च तत्संबन्धि वीर्यं सामर्थ्यं तदुभयमेवैते दर्भाः। अतस्तस्मिन्नमृते वीर्ये दर्भरूपे हुतवान्भवति। तेन होमेन प्रजा उत्पादयत्येव। यस्य यजमानस्य कर्मण्येवं जुह्वति स यजमानो न केवलं प्रजोत्पादकः किं त्वन्नादश्च भवति। एता एव मन्त्रोक्ताः संवत्सरमासादयः सर्वा देवता अग्नेरपि पूर्वभागिनोऽतस्ताः प्रीणयत्येव। किं च पूर्वकालीनेन होमेनाग्नेश्चक्षुरेव संपादयति। तदेवं दर्भस्तम्बहोमो देवताः कालश्च प्रशस्ताः॥

अथ वेदनं प्रशंसति—

अनन्धो भवति य एवं वेद, इति॥

अथ चितियोग्या भूमिर्बहुधा स्तूयते, तत्र तावदादौ भूमिनिष्पत्तिप्रकारं दर्शयति—

आपो वा इदमग्रे सलिलमासीत्स प्रजापतिः पुष्करपर्णे वातो भूतोऽलेलायत्स प्रतिष्ठां नाविन्दत स एतदपां कुलायमपश्यत्तस्मिन्न-

ग्निमचिनुत तदियमभवत्ततो वै
स प्रत्यतिष्ठत् , इति ।

यदिदं जगदिदानीं दृश्यते तच्च सर्वमुत्पत्तेः पूर्वमाप एवाऽऽसीन्न तु देवमनुष्यादिकम् । तस्मिन्न(तास्व)प्सु पृथिव्यादिभूतान्तरमेलनं वारयितुं सलिलमिति विशेष्यते । शुद्धजलमेवाऽऽसीदित्यर्थः । तदानीं प्रजापतिः स्वशरीरमवस्थापयितुं मूर्तस्य कस्यचिदाधारस्याभावात्स्वयं वायुरूपोऽभूत्तदुदकमध्यवर्तिनि कस्मिंश्चित्पद्मपत्रे समाश्रितः । तस्य चलत्वात्स्वयं च वायुरूपत्वादलेलायदितस्ततो डोला(ल)यमानोऽभूत् । तादृशः कुत्रापि स्थिरां स्थितिं नालभत । स पुनराधारं पर्यालोचयन्नपां मध्ये कुलायं शैवालमपश्यत् । तस्मिञ्शैवालेऽग्निमिष्टकाभिश्चितवान् । सोऽयमिष्टकाचितोऽग्निरियं दृश्यमाना भूमिरभवत् । तत उर्ध्वं स प्रजापतिस्तस्यां भूमौ प्रतिष्ठितोऽभूत् ॥

चयनेन भूम्युत्पत्तिप्रकारं प्रपञ्चयति—

यां पुरस्तादुपादधात्तच्छिरोऽभवत्सा प्राची दिग्यां दक्षिणत उपादधात्स दक्षिणः पक्षोऽभवत्सा दक्षिणा दिग्यां पश्चादुपादधात्तत्पुच्छमभवत्सा प्रतीची दिग्यामुत्तरत उपादधात्स उत्तरः पक्षोऽभवत्सोदीची दिग्यामुपरिष्टादुपादधात्तत्पृष्ठमभवत्सोर्ध्वा दिक्, इति ।

स प्रजापतिर्यां मौढामिष्टकां स्वस्य पुरस्तादुपादधात्तदिष्टकारूपं चीयमानस्याग्नेः शिरस्थानमभवत् । लोके तु भूम्येकदेशरूपा पूर्वा दिक्संपन्ना । एवं दक्षिणाद्यूर्ध्वान्तेषु योजयितव्यम् ॥

भूमेश्चित्याग्निरूपत्वं शास्त्रीयलौकिकदृष्टिभ्यां दृढी करोति—

इयं वा अग्निः पञ्चेष्टकस्तस्माद्यदस्यां खनन्त्यभीष्टकां तृन्दन्त्यभि शर्कराꣳ सर्वा वा इयं वयोभ्यो नक्तं दृशे दीप्यते तस्मादिमां वयाꣳसि नक्तं नाध्यासते , इति ।

येयं भूमिरस्ति सेयमेव यः पञ्चभिरिष्टकाभिश्चितोऽग्निः । तस्मादग्नित्वाद्य-

१ ख. च. सेयं प° ।

ह्यनभिज्ञाः प्राणिनोऽस्यां भूमौ कचित्खनन्ति तदानीं ते मूर्खाः प्रजापतिनोपहितामिष्टकामभितो हिंसन्ति चूर्णी कुर्वन्ति । तथा येयं शर्करा तेनोपहिता तामप्यभितृन्दन्ति सर्वतश्चूर्णयन्ति, तथाविधः प्रत्यवायस्तेषां भवतीत्यर्थः । सेयं शास्त्रीयदृष्टिः। अथ लौकिकदृष्टिरुच्यते—वयोभ्यो हशे पक्षिणां दृष्टौ भूमिः सर्वाऽपि रात्रावग्निवद्दीप्ता भवति। यस्मादेवं तस्माद्रात्रौ पक्षिणो भूमिं नाऽऽश्रयन्ति, किंतु वृक्षाग्राण्याश्रयन्ति । तस्माच्छास्त्रीयलौकिकदृष्टिभ्यामियं भूमिरग्निरेव॥

एतद्वेदनं प्रशंसति—

य एवं विद्वानग्निं चिनुते प्रत्येव
तिष्ठत्यभि दिशो जयति , इति।

अथ ब्राह्मणद्वारा सर्वदिगुपेताया भूमेरग्नित्वं द्रढयति—

आग्नेयो वै ब्राह्मणस्तस्माद्ब्राह्मणाय सर्वासु
दिक्ष्वर्धुकꣳ स्वामेव तद्दिशमन्वेति , इति।

अग्निब्राह्मणयोः प्रजापतिमुखजत्वसंबन्धेन ब्राह्मण आग्नेयः। यस्मादयमग्निसंबन्धस्तस्मादग्निरूपभूम्यवयवरूपासु सर्वास्वपि दिक्षु ब्राह्मणस्य समृद्धिशीलं जीवनं भवति। स्वदेश इव परदेशेष्वपि देवदत्तः शास्त्राभिज्ञः पूज्यते । अयं हि स्वकीयां दिशमनु गच्छति । तस्माद्युक्तमेतत् ॥

इदानीं लौकिकजलद्वारा पुनरप्यग्नित्वं द्रढयति—

अपां वा अग्निः कुलायं तस्मादापोऽग्निꣳ हा-
रुकाः स्वामेव तद्योनिं प्र विशन्ति ॥ , इति॥

योऽयं भूमिरूपोऽग्निः सोऽयं नदीकूपादिगतानामपां कुलायं स्थानम् । भूमाववस्थितत्वाद्योनिश्चापां भूमिरूपोऽग्निरेव । यस्मादग्निकार्या आपस्तस्मान्महतो गृहादिदाहिनोऽग्नेरपहरणाय मनुष्यैः सेचिता आपस्तमग्निमपहरन्त्यः स्वयमपि शुष्यन्ति। यस्मादेवाग्निरूपां स्वयोनिं प्रविशन्ति । तस्मादवगम्यते जलकारणाग्निरूपेयं भूमिरिति। अत्रोक्तस्य होमस्य वेदिविमानात्पूर्वभावित्वात्पुरुषमात्रेणेत्यनुवाकात्पूर्वमिदं ब्राह्मणं द्रष्टव्यम् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये पञ्चमकाण्डे षष्ठप्रपाठके
चतुर्थोऽनुवाकः ॥ ४ ॥

——

( अथ पञ्चमाष्टके षष्ठप्रपाठके पञ्चमोऽनुवाकः । )

---

संवत्सरमुख्यं भृत्वा द्वितीये संवत्सर आंग्नेयमष्टाकपालं निर्वपेदैन्द्रमेकादशकपालं वैश्वदेवं द्वादशकपालं बार्हस्पत्यं चरुं वैष्णवं त्रिकपालं तृतीये संवत्सरेऽभिजिता यजेत यदष्टाकपालो भवत्यष्टाक्षरा गायत्र्याग्नेयं गायत्रं प्रातःसवनं प्रातःसवनमेव तेनं दाधार गायत्रीं छन्दो यदेकादशकपालो भवत्येकादशाक्षरा त्रिष्टुगैन्द्रं त्रैष्टुभं माध्यंदिनꣳ सवनं माध्यंदिनमेव सवनं तेनं दाधार त्रिष्टुभं (१) छन्दो यद्द्वादशकपालो भवति द्वादशाक्षरा जगती वैश्वदेवं जागतं तृतीयसवनं तृतीयसवनमेव तेनं दाधार जगतीं छन्दो यद्बार्हस्पत्यश्चरुर्भवति ब्रह्म वै देवानां बृहस्पतिर्ब्रह्मैव तेनं दाधार यद्वैष्णवस्त्रिकपालो भवति यज्ञो वै विष्णुर्यज्ञमेव तेनं दाधार यत्तृतीये संवत्सरेऽभिजिता यजतेऽभिजित्यै यत्संवत्सरमुख्यं बिभर्तीममेव (२) तेनं लोकꣳ स्पृणोति यद्द्वितीये संवत्सरेऽग्निं चिनुतेऽन्तरिक्षमेव तेनं स्पृणोति यत्तृतीये संवत्सरे यजतेऽमुमेव तेनं

लोकः स्पृंणोत्येतं वै परं आट्णारः कक्षीवाँ औशिजो वीतहंव्यः श्रायसस्त्रसदंस्युः पौरुकुत्स्यः प्रजाकांमा अचिन्वत ततो वै ते सहस्रंं सहस्रं पुत्रानंविन्दन्त प्रथंते प्रजयां पशुभिस्तां मात्रांमाप्नोति यां तेऽगंच्छन्य एवं विद्वानेतमग्निं चिंनुते ( ३ ) ॥

( दाधार त्रिष्टुभंमिमप्वैवं चत्वारिं च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां पञ्चमाष्टके षष्ठप्रपाठके पञ्चमोऽनुवाकः ॥ ५ ॥

---

( अथ पञ्चमाष्टके षष्ठप्रपाठके पञ्चमोऽनुवाकः । )

---

संवत्सरमितिं सं—वत्सरम् । उख्यंम् । भृत्वा । द्वितीयें । संवत्सर इतिं सं—वत्सरे । आग्नेयम् । अष्टाकंपालमित्यष्टा—कपालम् । निरितिं । वपेत् । ऐन्द्रम् । एकांदशकपालमित्येकांदश—कपालम् । वैश्वदेवमितिं वैश्व—देवम् । द्वादंशकपालमिति द्वादंश—कपालम् । बार्हस्पत्यम् । चरुम् । वैष्णवम् । त्रिकपालमितिं त्रि—कपालम् । तृतीयें । संवत्सर इतिं सं—वत्सरे । अभिजितेत्यंभि—जितां । यजेत । यत् । अष्टाकंपाल इत्यष्टा—कपालः । भवंति । अष्टाक्षरेत्यष्टा—अक्षरा । गायत्री । आग्नेयः । गाय-

त्रम् । प्रातःसवनमिति प्रातः—सवनम् । प्रातःसवनमिति प्रातः—सवनम् । एव । तेन । दाधार । गायत्रीम् । छन्दः । यत् । एकादशकपाल इत्येकादश—कपालः । भवति । एकादशाक्षरेत्येकादश—अक्षरा । त्रिष्टुक् । ऐन्द्रम् । त्रैष्टुभम् । माध्यंदिनम् । सवनम् । माध्यंदिनम् । एव । सवनम् । तेन दाधार । त्रिष्टुभम् ( १ ) । छन्दः । यत् । द्वादशकपाल इति द्वादश—कपालः । भवति । द्वादशाक्षरेति द्वादश—अक्षरा । जगती । वैश्वदेवमिति वैश्व—देवम् । जागतम् । तृतीयसवनमिति तृतीय—सवनम् । तृतीयसवनमिति तृतीय—सवनम् । एव । तेन । दाधार । जगतीम् । छन्दः । यत् । बार्हस्पत्यः । चरुः । भवति । ब्रह्म । वै । देवानाम् । बृहस्पतिः । ब्रह्म । एव । तेन । दाधार । यत् । वैष्णवः । त्रिकपाल इति त्रि—कपालः । भवति । यज्ञः । वै । विष्णुः । यज्ञम् । एव । तेन । दाधार । यत् । तृतीये । संवत्सर इति सं—वत्सरे । अभिजितेत्यभि—जिता । यजते । अभिजित्या इत्यभि—जित्यै । यत् । संवत्सरमिति सं—वत्सरम् । उरव्यम् । बिभर्ति । इमम् । एव । ( २ ) । तेन । लोकम् । स्पृणोति । यत् । द्वितीये ।

संवत्सर इति सं—वत्सरे । अग्निम् । चिनुते । अन्तरिक्षम् । एव । तेन । स्पृणोति । यत् । तृतीये । संवत्सर इति सं—वत्सरे । यजते । अमुम् । एव । तेन । लोकम् । स्पृणोति । एतम् । वै । परः । आट्णारः । कक्षीवानिति कक्षी—वान् । औशिजः । वीतहव्य इति वीत—हव्यः । श्रायसः । त्रसदस्युः । पौरुकुत्स्य इति पौरु—कुत्स्यः । प्रजाकामा इति प्रजा—कामाः । अचिन्वत । ततः । वै । ते । सहस्रंसहस्रमिति सहस्रं—सहस्रम् । पुत्रान् । अविन्दन्त । प्रथते । प्रजयेति प्र—जया । पशुभिरिति पशु—भिः । ताम् । मात्राम् । आप्नोति । याम् । ते । अगच्छन् । यः । एवम् । विद्वान् । एतम् । अग्निम् । चिनुते ( ३ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे पञ्चमाष्टके षष्ठप्रपाठके पञ्चमोऽनुवाकः ॥ ५ ॥

---

( अथ पञ्चमकाण्डे षष्ठप्रपाठके पञ्चमोऽनुवाकः । )

---

क्षेत्रमानात्पुरा होमश्चतुर्थे समुदीरितः ॥

अथ पञ्चमे कानिचिद्धवींषि विधीयन्ते । पूर्वस्मिन्प्रपाठके संवत्सरत्र्यहषडहद्वादशाहाग्निधारणपक्षाश्चत्वारोऽभिहिताः । तत्र तापश्चितामयनाख्यस्य संवत्सरसत्रस्याङ्गभूते चयने संवत्सरमुख्यधारणं नियतम् ।

---

१ ख. घ. ङ. च. क्षेत्रं मातुं पुरा ।

अत एव सूत्रकार आह—"तापश्चितेऽग्नौ संवत्सरं दीक्षा संवत्सरमुपसदः पुरस्तादुपसदामाग्नेयमष्टाकपालमिति पञ्च" इति, तदिदं सूत्रोक्तहविःपञ्चकं विधत्ते—

संवत्सरमुख्यं भृत्वा द्वितीये संवत्सर आग्नेयमष्टाकपालं निर्वपेदैन्द्रमेकादशकपालं वैश्वदेवं द्वादशकपालं बार्हस्पत्यं चरुं वैष्णवं त्रिकपालम्, इति ॥

यदप्युक्तं सूत्रकारेण—"तृतीये संवत्सरेऽभिजिता विश्वजिता वा यजेत सर्ववेदसं ददाति" इति, तत्राऽऽद्यं पक्षं विधत्ते—

तृतीये संवत्सरेऽभिजिता यजेत, इति ।

अभिजिदिति सोमयागविशेषः ॥

तत्र पञ्चसु हविःषु प्रथमहविः प्रशंसति—

यदष्टाकपालो भवत्यष्टाक्षरा गायत्र्याग्नेयं गायत्रं प्रातःसवनं प्रातःसवनमेव तेन दाधार गायत्रीं छन्दः, इति ।

गायत्रीपादस्याष्टाक्षरत्वं प्रसिद्धम् । प्रातःसवनं च गायत्रीछन्दसा निष्पाद्यत्वाद्गायत्रम् । गायत्र्या सहाग्नेरुत्पन्नत्वात्तदाग्नेयमपि । अतस्तेन हविषा प्रातःसवनफलं गायत्रीछन्दोदेवतां च प्राप्नोति ॥

इतराणि चत्वारि हवींष्यभिजिदाख्यं सोमयागं च क्रमेण प्रशंसति—

यदेकादशकपालो भवत्येकादशाक्षरा त्रिष्टुगैन्द्रं त्रैष्टुभं माध्यंदिनꣳ सवनं माध्यंदिनमेव सवनं तेन दाधार त्रिष्टुभं छन्दो यद्द्वादशकपालो भवति द्वादशाक्षरा जगती वैश्वदेवं जागतं तृतीयसवनं तृतीयसवनमेव तेन दाधार जगतीं छन्दो यद्बार्हस्पत्यश्चरुर्भवति ब्रह्म वै देवानां बृहस्पतिर्ब्र-

१ क. घ. ङ. °दः पर° । २ ख. °यत्रीं छन्दो दे° ।

ह्येव तेन दाधार यद्वैष्णवस्त्रिकपालो भवति
यज्ञो वै विष्णुर्यज्ञमेव तेन दाधार यत्तृतीये
संवत्सरेऽभिजिता यजतेऽभिजित्यै, इति ।

अत्र सर्वत्र हविष्प्रशंसा देवताप्रशंसाऽभिजिद्यागप्रशंसा च विस्पष्टा ॥

अथोख्यधारणं पञ्चहविर्युक्तचयनमभिजिदाख्यमेकाहं च क्रमेण प्रशंसति—

यत्संवत्सरमुख्यं बिभर्तीममेव तेन लोकꣳ
स्पृणोति यद्द्वितीये संवत्सरेऽग्निं चिनुतेऽ-
न्तरिक्षमेव तेन स्पृणोति यत्तृतीये संवत्सरे
यजतेऽमुमेव तेन लोकꣳ स्पृणोति, इति ।

यद्यप्ययमभिजिदेकाहो न तु संवत्सरसाध्यमयनं तथाऽपि तापश्चितामयनेऽङ्गभूतो योऽग्निस्तद्धर्मः संवत्सरोख्यधारणं संवत्सरोपसदश्चे, तेऽभिजिदङ्गेऽप्यतिदिश्यन्ते । तस्मादयमङ्गभूतोऽग्निर्धर्मातिदेशार्थं तापश्चित इत्युच्यते । पञ्च हवींष्यभिजिदङ्गभूतेऽग्नौ विशिष्यन्ते ॥

तदिदं पञ्चहविरुपेतं चयनं प्रकारान्तरेण प्रशंसति—

एतं वै पर आट्णारः कक्षीवाꣳ औ-
शिजो वीतहव्यः श्रायसस्त्रसदस्युः पौरु-
कुत्स्यः प्रजाकामा अचिन्वत ततो वै ते
सहस्रꣳसहस्रं पुत्रानविन्दन्त , इति ।

परशब्दाभिधेयः कश्चिदृषिः । सोऽयमट्णारस्य पुत्रः । कक्षीवानन्य ऋषिः । स चोशिजः पुत्रः । वीतहव्योऽन्य ऋषिः । स च श्रयसः पुत्रः । त्रसदस्युरन्यः । स च पुरुकुत्सस्य पुत्रः । त एते प्रजाकामाः सन्तस्तमेतं संवत्सरधारणेन पञ्चहविर्भिश्चोपेतमग्निं चित्वा प्रत्येकं सहस्रं पुत्रानलभन्त ॥

अथैतस्य चयनस्य फलं दर्शयति—

प्रथते प्रजया पशुभिस्तां मात्रामाप्नोति यां
तेऽगच्छन्य एवं विद्वानेतमग्निं चिनुते॥ , इति ॥

---

१ ख. °श्च, सोऽभि° । घ. ङ. च. °श्च, साभि° । २ ख. °श्यते । त° ।

( पूर्वोक्तविधिप्रशंसा )

पूर्वोक्ता महर्षयो यां मात्रां सहस्रपुत्ररूपमैश्वर्यप्रमाणमगच्छन्, तां मात्रामयमप्येतमग्निं चिन्वानः प्राप्नोति ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये पञ्चमकाण्डे षष्ठप्रपाठके पञ्चमोऽनुवाकः ॥ ५ ॥

---

( अथ पञ्चमाष्टके षष्ठप्रपाठके षष्ठोऽनुवाकः । )

---

प्रजापतिरग्निमचिनुत स क्षुरपविर्भूत्वाऽतिष्ठत्तं देवा बिभ्यतो नोपाऽऽयन्ते छन्दोभिरात्मानं छादयित्वोपाऽऽयन्तच्छन्दसां छन्दस्त्वं ब्रह्म वै छन्दाꣳसि ब्रह्मण एतद्रूपं यत्कृष्णाजिनं कार्ष्णी उपानहावुपमुञ्चते छन्दोभिरेवाऽऽत्मानं छादयित्वाऽग्निमुप चरत्यात्मनोऽहिꣳसायै देवनिधिर्वा एष नि धीयते यदग्निः ( १ ) अन्ये वा वै निधिमगुप्तं विन्दन्ति न वा प्रति प्र जानात्युखामा क्रामत्यात्मानमेवाधिपां कुरुते गुप्त्या अथो खल्वाहुर्नाऽऽक्रम्येति नैर्ऋत्युखा यदाक्रामेन्निर्ऋत्या आत्मानमपि दध्यात्तस्मान्नाऽऽक्रम्या पुरुषशीर्षमुप दधाति गुप्त्या अथो यथा ब्रूयादेतन्मे गोपायेति तादृगेव तत् ( २ ) प्रजापतिर्वा अथर्वाऽग्निरेव दध्यङ्ङाथर्वणस्तस्येष्टका अस्थान्ये-

तꣳ ह वाव तदृषिरभ्यनूवाचेन्द्रो दधीचो अस्थभिरिति यदिष्टकाभिरग्निं चिनोति सात्मानमेवाग्निं चिनुते सात्माऽमुष्मिँल्लोके भवति य एवं वेद शरीरं वा एतदग्नेर्यच्चित्य आत्मा वैश्वानरो यच्चिते वैश्वानरं जुहोति शरीरमेव सꣳस्कृत्य ( ३ ) अभ्यारोहति शरीरं वा एतद्यजमानः सꣳ स्कुरुते यदग्निं चिनुते यच्चिते वैश्वानरं जुहोति शरीरमेव सꣳस्कृत्याऽऽत्मनाऽभ्यारोहति तस्मात्तस्य नावं द्यन्ति जीवन्नेव देवानप्येति वैश्वानर्यर्चा पुरीषमुप दधातीयं वा अग्निर्वैश्वानरस्तस्यैषा चितिर्यत्पुरीषमग्निमेव वैश्वानरं चिनुत एषा वा अग्नेः प्रिया तनूर्यद्वैश्वानरः प्रियामेवास्य तनुवमव रुन्धे (४)॥

( अग्निस्तत्सꣳस्कृत्याग्नेर्दश च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां पञ्चमाष्टके षष्ठप्रपाठके षष्ठोऽनुवाकः ॥ ६ ॥

---

( अथ पञ्चमाष्टके षष्ठप्रपाठके षष्ठोऽनुवाकः । )

---

प्रजापतिरिति प्रजा—पतिः । अग्निम् । अचिनुत । सः । क्षुरपविरिति क्षुर—पविः । भूत्वा । अतिष्ठत् । तम् । देवाः । बिभ्यतः । न । उपेति । आ-

यन् । ते । छन्दोभिरिति छन्दः—भिः । आत्मानम् । छादयित्वा । उपेति । आयन् । तत् । छन्दसाम् । छन्दस्त्वमिति छन्दः—त्वम् । ब्रह्म । वै । छन्दांसि । ब्रह्मणः । एतत् । रूपम् । यत् । कृष्णाजिनमिति कृष्ण—अजिनम् । कार्ष्णी इति । उपानहौ । उपेति । मुञ्चते । छन्दोभिरिति छन्दः—भिः । एव । आत्मानम् । छादयित्वा । अग्निम् । उपेति । चरति । आत्मनः । अहिंसायै । देवनिधिरिति देव—निधिः । वै । एषः । नीति । धीयते । यत् । अग्निः ( १ ) । अन्ये । वा । वै । निधिमिति नि—धिम् । अगुप्तम् । विन्दन्ति । न । वा । प्रति । प्रेति । जानाति । उखाम् । एति । क्रामति । आत्मानम् । एव । अधिपामित्यधि—पाम् । कुरुते । गुप्त्यै । अथो इति । खलु । आहुः । न । आक्रम्येत्या—क्रम्य । इति । नैर्ऋतीति नैः—ऋती । उखा । यत् । आक्रामेदित्या—क्रामेत् । निर्ऋत्या इति निः—ऋत्यै । आत्मानम् । अपीति । दध्यात् । तस्मात् । न । आक्रम्येत्या—क्रम्य । पुरुषशीर्षमिति पुरुष—शीर्षम् । उपेति । दधाति । गुप्त्यै । अथो इति । यथा । ब्रूयात् । एतत् । मे । गोपाय । इति ।

तादृक् । एव । तत् ( २ ) । प्रजापतिरिति प्रजा—
पतिः । वै । अथर्वा । अग्निः । एव । दध्यङ् ।
आथर्वणः । तस्य । इष्टकाः । अस्थानि । एतम् ।
ह । वाव । तत् । ऋषिः । अभ्यनूवाचेत्यभि—
अनूवाच । इन्द्रः । दधीचः । अस्थभिरित्यस्थ—भिः ।
इति । यत् । इष्टकाभिः । अग्निम् । चिनोति । सा-
त्मानमिति स—आत्मानम् । एव । अग्निम् । चिनु-
ते । सात्मेति स—आत्मा । अमुष्मिन् । लोके ।
भवति । यः । एवम् । वेद । शरीरम् । वै । एतत् ।
अग्नेः । यत् । चित्यः । आत्मा । वैश्वानरः । यत् ।
चिते । वैश्वानरम् । जुहोति । शरीरम् । एव ।
संस्कृत्य ( ३ ) । अभ्यारोहतीत्यभि—आरोहति ।
शरीरम् । वै । एतत् । यजमानः । समिति । कुरुते ।
यत् । अग्निम् । चिनुते । यत् । चिते । वैश्वा-
नरम् । जुहोति । शरीरम् । एव । संस्कृत्य ।
आत्मना । अभ्यारोहतीत्यभि—आरोहति । तस्मात् ।
तस्य । न । अवेति । घ्नन्ति । जीवन् । एव । देवान् ।
अपीति । एति । वैश्वानर्या । ऋचा । पुरीषम् ।
उपेति । दधाति । इयम् । वै । अग्निः । वैश्वानरः ।
तस्य । एषा । चितिः । यत् । पुरीषम् । अग्निम् ।

एव । वैश्वानरम् । चिनुते । एषा । वै । अग्नेः । प्रिया । तनूः । यत् । वैश्वानरः । प्रियाम् । एव । अस्य । तनुवम् । अवेति । रुन्धे ( ४ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे पञ्चमाष्टके षष्ठप्रपाठके षष्ठोऽनुवाकः ॥ ६ ॥

( अथ पञ्चमकाण्डे षष्ठप्रपाठके षष्ठोऽनुवाकः । )

पञ्चमेऽभिजितोऽङ्गं यच्चयने तद्विशेषितम् ॥

अस्य च ब्राह्मणस्य पूर्वशेषत्वाभावान्न तत्रान्तर्भावः, किं त्वन्ते निवेशः । अथ षष्ठे पूर्वप्रकरणोक्तानेव विधीन्कानिचि(न्कांश्चि)दनूद्य प्रशंसति । तत्राश्मन्नूर्जमिति परिषिञ्चतीत्यनुवाके कार्ष्णी उपानहावुप मुञ्चत इति यद्विहितं तस्य प्रशंसां दर्शयति—

प्रजापतिरग्निमचिनुत स क्षुरपविर्भूत्वाऽतिष्ठत्तं देवा बिभ्यतो नोपायन्ते छन्दोभिरात्मानं छादयित्वोपाऽऽयन्तच्छन्दसां छन्दस्त्वं ब्रह्म वै छन्दाꣳसि ब्रह्मण एतद्रूपं यत्कृष्णाजिनं कार्ष्णी उपानहावुप मुञ्चते छन्दोभिरेवाऽऽत्मानं छादयित्वाऽग्निमुप चरत्यात्मनोऽहिꣳसायै , इति ।

यदा प्रजापतिरग्निं चितवांस्तदा सोऽग्निः क्षुरपविर्भूत्वा केनाप्यगम्योऽतिष्ठत् । क्षुरधारासमानधारा यस्य वज्रस्य सोऽयं वज्रः क्षुरपविः । तथाविधवज्रवदत्युग्र इत्यर्थः । तं तादृशमग्निं दृष्ट्वा देवा भीताः सन्तस्तत्समीपं न प्राप्ताः । ततः प्रतीकारं विचार्य च्छन्दोयुक्तैर्मन्त्रैः स्वशरीरमाच्छाद्य मन्त्रजपेन रक्षां कृत्वा वह्निसमीपमागताः । छादयन्त्येभिरिति व्युत्पत्त्या छन्दस्त्वं संपन्नम् । तेषां च च्छन्दसां वेदेऽन्तर्भूतत्वाद्वेद एव तद्रूपम् । कृष्णाजिनं च वेदस्य स्वरूपम् । ऋक्सामे वै देवेभ्यो यज्ञायातिष्ठमाने कृष्णो रूपं कृत्वेत्युक्तत्वात् । तस्मात्कृष्णाजिननिर्मिते उपानहावुपमुञ्चेत । तथा सति च्छन्दोभिरेव स्वशरी-

१ ख. च. मुञ्चते । त° ।

रमाच्छायाग्नेरुपचरणात्स्वस्य हिंसा न भवति । यद्यपि मृत्युर्वा एष यदग्निर्ब्रह्मण एतद्रूपं यत्कृष्णाजिनमिति प्रशंसाऽपि तत्रैव कृता, तथाऽपि तस्या एवायं प्रपञ्च इत्यविरोधः ॥

एषां वा एतल्लोकानामित्यनुवाके यद्विहितं मध्ये पुरुषशीर्षमुप दधाति सवीर्यत्वायोखायामपि दधातीति, तदेतत्पूर्वोत्तरपक्षाभ्यां प्रशंसितुं पूर्वपक्षं तावद्दर्शयति—

देवनिधिर्वा एष नि धीयते यदग्नि-
रन्ये वा वै निधिमगुप्तं विन्दन्ति
न वा प्रति प्र जानात्युखामा क्राम-
त्यात्मानमेवाधिपां कुरुते गुप्त्यै , इति ।

योऽयं चीयमानोऽग्निः सोऽयं देवानां निधिस्थानीयः । एवं सति लोके यो निधिरगुप्तो भवति तं निधिमन्ये वा विरोधिनो लभन्ते । स्वयं वा कदाचित्तदीयस्थानविस्मरणेन तं निधिं न प्रजानाति । अतो दोषद्वयपरिहाराय पूर्वमुपहितामुखां स्वपादेनाऽऽक्रामेत् । तथा सति यजमानः स्वात्मानमेव निधेरधिकं पालकं करोति । तच्च रक्षणाय भवति । आक्रमणेन स्वबुद्धौ दृढीकृतत्वान्न कदाचिद्विस्मरति । स्वेन रक्षितत्वादेव वैरिणोऽपि तं निधिं न लभन्ते ॥

अथ सिद्धान्तं दर्शयति—

अथो खल्वाहुर्नाऽऽक्रम्येति नैर्ऋत्युखा यदा-
क्रामेन्निर्ऋत्या आत्मानमपि दध्यात्तस्मान्नाऽऽ-
क्रम्या पुरुषशीर्षमुप दधाति गुप्त्या अथो
यथा ब्रूयादेतन्मे गोपायेति तादृगेव तत्, इति ।

अभिज्ञाः खलु तं पक्षमनादृत्यैवमाहुः—पादेन सेयमुखा नाऽऽक्रम्येति । तत्रायं हेतुः—इयमुखा राक्षसदेवताया निर्ऋतेः संबन्धिनी अत उखाया आक्रमणे निर्ऋत्यै स्वशरीरं समर्पयेत् । तस्मात्सर्वथा नाऽऽक्रमणीया । यदि निधेर्गुप्तिरपेक्षिता तर्हि पुरुषशीर्षमुखायामुपरि स्थापयेत् । तथा सति यथा लोके कंचित्पुरुषं रक्षकं निधिसमीपेऽवस्थाप्य मदीयमेतद्द्रव्यं गोपायेति स्वामी ब्रूयात्तादृगेव तत्पुरुषशिरःस्थापनं द्रष्टव्यम् ॥

पञ्चमप्रपाठके य एवं विद्वानग्निं चिनुत ऋध्नोत्येवेति पश्चयनविधिरुक्तस्तं पुनः प्रशंसति—

प्रजापतिर्वा अथर्वाऽग्निरेव दध्यङ्ङाथर्वणस्तस्येष्टका अस्थान्येतꣳ ह वाव तदृषिरभ्यनूवाचेन्द्रो दधीचो अस्थभिरिति यदिष्टकाभिरग्निं चिनोति सात्मानमेवाग्निं चिनुते , इति ।

अत्र किंचिद्रूपकं परिकल्प्यते । अस्ति कश्चिदथर्वाख्य ऋषिः । तस्य च पुत्रो दध्यङ्नामा । दधीचोऽस्थीनि क्वचिच्छत्रुहननायाऽऽयुधत्वं प्राप्तानि । तत्सर्वमत्र संपाद्यते । योऽयमग्नेश्चेता प्रजापतिः स एवाथर्वा । चीयमानश्चाग्निस्तत्पुत्रो दध्यङ् । इष्टकाश्चास्थीनि । तमेतमेवार्थमभिप्रेत्य कश्चिदृषिर्मन्त्रस्तत्सर्वमनुवदति । मन्त्रस्य च प्रतीकमिदमिन्द्रो दधीचो अस्थभिरिति । स च मन्त्रोऽन्यत्रैवमाम्नातः—“इन्द्रो दधीचो अस्थभिः । वृत्राण्यप्रतिष्कुतः । जघान नवतीर्नव ” इति । तदेवमिष्टकानामास्थित्वात्ताभिश्चयने सति सशरीरोऽग्निश्चितो भवति ॥

वेदनं प्रशंसति—

सात्माऽमुष्मिँल्लोके भवति य एवं वेद , इति ॥

प्राचीमनु प्रदिशं प्रेहि विद्वानित्याद्येत्यनुवाके यद्विहितं द्वादशकपालो वैश्वानरो भवतीति तत्प्रशंसति—

शरीरं वा एतदग्नेर्यच्चित्य आत्मा वैश्वानरो यच्चिते वैश्वानरं जुहोति शरीरमेव सꣳस्कृत्याभ्यारोहति , इति ।

यश्चितिनिष्पाद्योऽग्निस्तदिदमग्निदेवतायाः शरीरम् । वैश्वानरश्च शरीरावस्थितो जीवात्मा । तथा सति चितेऽग्नौ वैश्वानरं पुरोडाशं जुहोतीति यत्तेनाग्निदेवतायाः शरीरमेव संस्कृत्य पश्चादारूढो भवति ॥

तस्यैतस्य वैश्वानरपुरोडाशस्य चोदकप्राप्तमवदानं निषेधति—

शरीरं वा एतद्यजमानः सꣳस्कुरुते यदग्निं चिनुते यच्चिते वैश्वानरं जुहोति शरीरमेव

संꣳस्कृत्याऽऽत्मनाऽभ्यारोहति तस्मात्तस्य नाव द्यन्ति जीवन्नेव देवानप्येति , इति ।

यजमानोऽग्निं चिनुत इति यत्तेनासौ स्वशरीरमेव संस्करोति । एवं सति चितेऽग्नौ वैश्वानरपुरोडाशं जुहोतीति यत्तेन स्वशरीरमेव संस्कृत्य तस्मिञ्शरीरे जीवरूपेणाऽऽरूढो भवति । तस्मात्तस्य जीवात्मस्थानीयस्य पुरोडाशस्याव-दानं न कुर्यात् । तदकरणे च स्वयं जीवन्नेव देवान्प्राप्नोति ॥

यावती वै पृथिवीत्यनुवाके पुरीषेणाभ्यूहतीति यद्विहितं तत्र पृष्टो दिवी-त्येतामृचमन्यत्राऽऽम्नातां विनियुङ्क्ते—

वैश्वानर्यर्चा पुरीषमुपदधातीयं वा अग्निर्वैश्वान-रस्तस्यैषा चितिर्यत्पुरीषमग्निमेव वैश्वानरं चिनुत एषा वा अग्नेः प्रिया तनूर्यद्वैश्वा-नरः प्रियामेवास्य तनुवमव रुन्धे ॥ , इति ॥

पृष्टो दिवीतिमन्त्रप्रतिपाद्यो यो वैश्वानरोऽग्निः स भूमिस्वरूप एव । पुरीषं च चितिस्वरूपम् । अतः पुरीषोपधानेन भूमिरूपं वैश्वानराग्निमेव चितवान्भ-वति । किंच, वैश्वानरशब्दोदितः सर्वपुरुषहितकारी यो विग्रह एषैवाग्नेः प्रिया तनूः । ततो वैश्वानरमन्त्रेणोपधाने सत्यग्नेः प्रियामेव तनुवं प्राप्नोति । एतानि च ब्राह्मणवाक्यानि विधिशेषत्वात्तद्विधिसमीप एव द्रष्टव्यानि ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदी-यतैत्तिरीयसंहिताभाष्ये पञ्चमकाण्डे षष्ठप्रपाठके षष्ठोऽनुवाकः ॥ ६ ॥

---

( अथ पञ्चमाष्टके षष्ठप्रपाठके सप्तमोऽनुवाकः । )

---

अ॒ग्नेर्वै दी॒क्षया॑ दे॒वा वि॒राज॑माप्नुवन्ति॒स्रो रात्री॑र्दी॒क्षि॒तः स्या॑त्त्रि॒पदा॑ वि॒रा॒ड्विराज॑माप्नोति॒ षड्रात्री॑र्दी॒क्षि॒तः स्या॒त्षड्वा ऋ॒तवः॑ संवत्स॒रः सं॑वत्स॒रो वि॒रा॒ड्विराज॑माप्नोति॒ दश॒ रात्री॑र्दी॒क्षि॒तः

स्याद्दशाक्षरा विराड्विराजमाप्नोति द्वादश रात्रीर्दीक्षितः स्याद्द्वादश मासाः संवत्सरः संवत्सरो विराड्विराजमाप्नोति त्रयोदश रात्रीर्दीक्षितः स्यात्त्रयोदश ( १ ) मासाः संवत्सरः संवत्सरो विराड्विराजमाप्नोति पञ्चदश रात्रीर्दीक्षितः स्यात्पञ्चदश वा अर्धमासस्य रात्रयोऽर्धमासशः संवत्सर आप्यते संवत्सरो विराड्विराजमाप्नोति सप्तदश रात्रीर्दीक्षितः स्याद्द्वादश मासाः पञ्चर्तवः स संवत्सरः संवत्सरो विराड्विराजमाप्नोति चतुर्विंशतिꣳ रात्रीर्दीक्षितः स्याच्चतुर्विꣳशतिरर्धमासाः संवत्सरः संवत्सरो विराड्विराजमाप्नोति त्रिꣳशतꣳ रात्रीर्दीक्षितः स्यात् ( २ ) त्रिꣳशदक्षरा विराड्विराजमाप्नोति मासं दीक्षितः स्याद्यो मासः स संवत्सरः संवत्सरो विराड्विराजमाप्नोति चतुरो मासो दीक्षितः स्याच्चतुरो वा एतं मासो वसवोऽबिभरुस्ते पृथिवीमाऽजयन्गायत्रीं छन्दोऽष्टौ रुद्रास्तेऽन्तरिक्षमाऽजयन्त्रिष्टुभं छन्दो द्वादशाऽऽदित्यास्ते दिवमाऽजयञ्जगतीं छन्दस्ततो वै ते व्यावृतमगच्छञ्छ्रैष्ठ्यं देवानां तस्मा-

द्वादंश मासो भृत्वाऽग्निं चिन्वीत द्वादंश मासाः संवत्सरः संवत्सरोऽग्निश्चित्यस्तस्याहो-रात्राणीष्टका आप्तेष्टकमेनं चिनुतेऽथो व्यावृत्त-मेव गच्छति श्रैष्ठ्यꣳ समानानाम् (३)॥

(स्यात्रयोदश त्रिꣳशतꣳ रात्रीर्दीक्षितः स्याद्वे तेऽष्टाविꣳशतिश्च।)

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां पञ्चमाष्टके षष्ठप्रपाठके सप्तमोऽनुवाकः॥ ७॥

---

(अथ पञ्चमाष्टके षष्ठप्रपाठके सप्तमोऽनुवाकः।)

---

अग्नेः। वै। दीक्षयां। देवाः। विराजमिति वि—राजम्। आप्नुवन्। तिस्रः। रात्रीः। दीक्षितः। स्यात्। त्रिपदेति त्रि—पदा। विराडिति वि—राट्। विराजमिति वि—राजम्। आप्नोति। षट्। रात्रीः। दीक्षितः। स्यात्। षट्। वै। ऋतवः। संवत्सर इति सं—वत्सरः। संवत्सर इति सं—वत्सरः। विराडिति वि—राट्। विराजमिति वि—राजम्। आप्नोति। दश। रात्रीः। दीक्षितः। स्यात्। दशाक्षरेति दश—अक्षरा। विराडिति वि—राट्। विराजमिति वि—राजम्। आप्नोति। द्वादश। रात्रीः। दीक्षितः। स्यात्। द्वादश। मासाः। संवत्सर इति

सं—वत्सरः । संवत्सर इति सं—वत्सरः । विराडिति वि—राट् । विराजमिति वि—राजम् । आप्नोति । त्रयोदशेति त्रयः—दश । रात्रीः । दीक्षितः । स्यात् । त्रयोदशेति त्रयः—दश (१)। मासाः । संवत्सर इति सं—वत्सरः । संवत्सर इति सं—वत्सरः । विराडिति वि—राट् । विराजमिति वि—राजम् । आप्नोति । पञ्चदशेति पञ्च—दश । रात्रीः । दीक्षितः । स्यात् । पञ्चदशेति पञ्च—दश । वै । अर्धमासस्येत्यर्ध—मासस्य । रात्रयः । अर्धमासश इत्यर्धमास—शः । संवत्सर इति सं—वत्सरः । आप्यते । संवत्सर इति सं—वत्सरः । विराडिति वि—राट् । विराजमिति वि—राजम् । आप्नोति । सप्तदशेति सप्त—दश । रात्रीः । दीक्षितः । स्यात् । द्वादश । मासाः । पञ्च । ऋतवः । सः । संवत्सर इति सं—वत्सरः । संवत्सर इति सं—वत्सरः । विराडिति वि—राट् । विराजमिति वि—राजम् । आप्नोति । चतुर्विंशतिमिति चतुः—विंशतिम् । रात्रीः । दीक्षितः । स्यात् । चतुर्विंशतिरिति चतुः—विंशतिः । अर्धमासा इत्यर्ध—मासाः । संवत्सर इति सं—वत्सरः । संवत्सर इति सं—वत्सरः । विराडिति वि—राट् । विराज-

( दीक्षाविकल्पविधिः )

मितिं वि—राजंम् । आप्नोति । त्रिꣳशतंम् । रात्रीः । दीक्षितः । स्यात् ( २ ) । त्रिꣳशदंक्षरेतिं त्रिꣳशत्—अक्षरा । विराडितिं वि—राट् । विराजमितिं वि—राजंम् । आप्नोति । मासंम् । दीक्षितः । स्यात् । यः । मासंः । सः । संवत्सर इतिं सं—वत्सरः । संवत्सर इतिं सं—वत्सरः । विराडितिं वि—राट् । विराजमितिं वि—राजंम् । आप्नोति । चतुरंः । मासः । दीक्षितः । स्यात् । चतुरंः । वै । एतम् । मासः । वसंवः । अबिभरुः । ते । पृथिवीम् । एतिं । अजयन् । गायत्रीम् । छन्दंः । अष्टौ । रुद्राः । ते । अन्तरिंक्षम् । एतिं । अजयन् । त्रिष्टुभंम् । छन्दंः । द्वादंश । आदित्याः । ते । दिवंम् । एतिं । अजयन् । जगंतीम् । छन्दंः । ततंः । वै । ते । व्यावृतमितिं वि—आवृतंम् । अगच्छन् । श्रैष्ठ्यंम् । देवानांम् । तस्मांत् । द्वादंश । मासः । भृत्वा । अग्निम् । चिन्वीत । द्वादंश । मासाः । संवत्सर इतिं सं—वत्सरः । संवत्सर इतिं सं—वत्सरः । अग्निः । चित्यंः । तस्यं । अहोरात्राणीत्यंहः—रात्राणिं । इष्टंकाः । आप्तेष्टंकमित्याप्त—इष्टकम् । एनम् । चिनुते । अथो

इतिं । व्यावृ॑त॒मितिं वि—आ॒वृ॑तम् । ए॒व । ग॒च्छ॒ति॒ । श्रैष्ठ्य॑म् । स॒मा॒नानां॑म् ( ३ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे पञ्चमाष्टके षष्ठप्रपाठके सप्तमोऽनुवाकः ॥ ७ ॥

---

( अथ पञ्चमकाण्डे षष्ठप्रपाठके सप्तमोऽनुवाकः । )

---

षष्ठे प्रशंसाः कथितास्तत्तद्विध्यनुवादतः ॥

अथ सप्तमे दीक्षाविकल्पान्विधातुं प्रस्तौति—

अग्नेर्वै दीक्षया देवा विराजमाप्नुवन्, इति ।

मौण्ड्यमौनादिनियमस्वीकाररूपा दीक्षा । चीयमानस्याग्नेः संबन्धिन्या तादृश्या दीक्षया देवा विराजं प्राप्ताः । विराट्शब्दः प्रशस्तं छन्दोविशेषं ब्रूते । तेन च विशिष्टं राज्यमुपलक्ष्यते । तद्राज्यं प्राप्ता इत्यर्थः । अतो विधास्यमानेषु दीक्षाकालविकल्पेषु सर्वत्र विराट्प्राप्तिरुपन्यस्यते ॥

तानेतान्विकल्पितपक्षान्विधत्ते—

तिस्रो रात्रीर्दीक्षितः स्यात्त्रिपदा विराड्विराजमाप्नोति षड्रात्रीर्दीक्षितः स्यात्षड्वा ऋतवः संवत्सरः संवत्सरो विराड्विराजमाप्नोति दश रात्रीर्दीक्षितः स्याद्दशाक्षरा विराड्विराजमाप्नोति द्वादश रात्रीर्दीक्षितः स्याद्द्वादश मासाः संवत्सरः संवत्सरो विराड्विराजमाप्नोति त्रयोदश रात्रीर्दीक्षितः स्यात्त्रयोदश मासाः संवत्सरः संवत्सरो विराड्विराजमाप्नोति पञ्चदश रात्रीर्दीक्षितः स्यात्पञ्चदश वा अर्धमासस्य रात्रयोऽर्धमासशः संवत्सर आप्यते संवत्सरो विराड्विराजमाप्नोति सप्तदश

रात्रीर्दीक्षितः स्याद्द्वादश मासाः पञ्चर्तवः स संवत्सरः संवत्सरो विराड्विराजमाप्नोति चतुर्विꣳशतिꣳ रात्रीर्दीक्षितः स्याच्चतुर्विꣳशतिरर्धमासाः संवत्सरः संवत्सरो विराड्विराजमाप्नोति त्रिꣳशतꣳ रात्रीर्दीक्षितः स्यात्त्रिꣳशदक्षरा विराड्विराजमाप्नोति मासं दीक्षितः स्याद्यो मासः स संवत्सरः संवत्सरो विराड्विराजमाप्नोति चतुरो मासो दीक्षितः स्याच्चतुरो वा एतं मासो वसवोऽबिभरुस्ते पृथिवीमाऽजयन्गायत्रीं छन्दोऽष्टौ रुद्रास्तेऽन्तरिक्षमाऽजयन्त्रिष्टुभं छन्दो द्वादशाऽऽदित्यास्ते दिवमाऽजयन्जगतीं छन्दस्ततो वै ते व्यावृतमगच्छञ्छ्रैष्ठ्यं देवानाम् , इति।

त्रिरात्रषड्रात्रदशरात्रद्वादशरात्रत्रयोदशरात्रपञ्चदशरात्रसप्तदशरात्रचतुर्विंशतिरात्रत्रिंशद्रात्रमासचतुर्मासाष्टमासद्वादशमासरूपास्त्रयोदश पक्षा विकल्पिताः। दशाक्षरैस्त्रिभिः पादैरुपेतं विराडाख्यं छन्दः। अतस्त्रित्वसंख्यया तत्प्राप्तिः। षट्संख्यानामृतूनां संवत्सरावयवत्वेन संवत्सरस्वरूपत्वात्संवत्सरस्य च षट्त्रिंशद्भिर्दिनदशकैर्निष्पाद्यत्वाद्दशसंख्यायाश्च विराट्पादाक्षरगतत्वात्संवत्सरद्वारा तत्प्राप्तिः। एवं सर्वत्र योज्यम्। अधिकमासेन सह त्रयोदश मासाः। सावनमासस्य त्रिंशद्रात्रनियमेऽपि चान्द्रमासस्य तन्नियमाभावात्तदपेक्षया पृथङ्मासोपन्यासः। वसवो मासचतुष्टयमुख्याग्निं भृत्वा पृथिवीं गायत्रीछन्दोदेवतां च वशीकृतवन्तः। रुद्रास्तु मासाष्टकं भृत्वाऽन्तरिक्षं त्रिष्टुप्छन्दोदेवतां च वशीकृतवन्तः। आदित्यास्तु मासद्वादशकं भृत्वा द्युलोकं जगतीछन्दोदेवतां च वशीकृतवन्तः। एतेषु पक्षेषु संवत्सरपक्षस्यात्यन्तप्रशस्तत्वादादित्या इतरेभ्यो व्यावृत्तिं प्राप्य देवानां मध्ये श्रैष्ठ्यं प्राप्ताः॥

अत एतमेव पक्षमादरेण पुनः प्रशंसति—

तस्माद्द्वादश मासो भृत्वाऽग्निं चिन्वीत द्वादश मासाः संवत्सरः संवत्सरोऽग्निश्चित्यस्तस्याहोरात्राणीष्टका आप्तेष्टकमेनं चिनुतेऽथो व्यावृत्तमेव गच्छति श्रैष्ठ्यꣳ समानानाम् ॥, इति ॥

द्वादश मासानुपस्थानकाले नैरन्तर्येणोख्याग्निं भृत्वाऽग्निं चिनुयात् । मासद्वादशकस्य संवत्सररूपत्वाच्चित्याग्निरपि धारणद्वारा संवत्सरात्मकः । तस्य संवत्सरात्मनोऽग्नेरिष्टका एवाहोरात्राणि । ततः संवत्सरधारणेन संपूर्णत्वेन प्राप्तेष्टकमिममग्निं चितवान्भवति । अपि चेतरेभ्योऽग्निचिद्भ्यो व्यावृत्तः समानानां मध्ये श्रैष्ठ्यं प्राप्नोति । यद्यपि तस्मात्संवत्सरं भार्य इत्यादौ संवत्सरत्रिरात्रषड्रात्रद्वादशरात्रपक्षा विहितास्तथाऽप्यर्थवादसंबन्धार्थमत्र पुनरुपन्यासः । एतच्च ब्राह्मणमाग्नावैष्णवविधिवत्षड्भिर्दीक्षयतीत्यनुवाकसमीपे द्रष्टव्यम् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये पञ्चमकाण्डे षष्ठप्रपाठके सप्तमोऽनुवाकः ॥ ७ ॥

---

( अथ पञ्चमाष्टके षष्ठप्रपाठकेऽष्टमोऽनुवाकः । )

---

सुवर्गाय वा एष लोकाय चीयते यदग्निस्तं यन्नान्वारोहेत्सुवर्गाल्लोकाद्यजमानो हीयेत पृथिवीमाऽक्रमिषं प्राणो मा मा हासीदन्तरिक्षमाऽक्रमिषं प्रजा मा मा हासीद्दिवमाऽक्रमिषꣳ सुवरगन्मेत्याहैष वा अग्नेरन्वारोहस्तेनैवैनमन्वारोहति सुवर्गस्य लोकस्य समष्ट्यै यत्पक्षसंमितां मिनुयात् ( १ ) कनीयाꣳसं यज्ञक्रतुमुपेयात्पापीयस्यस्याऽऽत्मनः प्रजा स्याद्वे-

दिसंमितां मिनोति ज्यायाꣳसमेव यज्ञक्रतु-
मुपैति नास्याऽऽत्मनः पापीयसी प्रजा भवति
साहस्रं चिन्वीत प्रथमं चिन्वानः सहस्रसं-
मितो वा अयं लोक इममेव लोकमभि
जयति द्विषाहस्रं चिन्वीत द्वितीयं चिन्वानो
द्विषाहस्रं वा अन्तरिक्षमन्तरिक्षमेवाभि जयति
त्रिषाहस्रं चिन्वीत तृतीयं चिन्वानः ( २ )
त्रिषाहस्रो वा असौ लोकोऽमुमेव लोकमभि
जयति जानुदघ्नं चिन्वीत प्रथमं चिन्वानो
गायत्रियैवेमं लोकमभ्यारोहति नाभिदघ्नं
चिन्वीत द्वितीयं चिन्वानस्त्रिष्टुभैवान्तरिक्षम-
भ्यारोहति ग्रीवदघ्नं चिन्वीत तृतीयं चिन्वानो
जगत्यैवामुं लोकमभ्यारोहति नाग्निं चित्वा
रामामुपेयादयोनौ रेतो धास्यामीति न द्वितीयं
चित्वाऽन्यस्य स्त्रियम् ( ३ ) उपेयान्न तृतीयं
चित्वा कां चनोपेयाद्रेतो वा एतन्नि धत्ते
यदग्निं चिनुते यदुपेयाद्रेतसा व्यृध्येताथो
खल्वाहुरप्रजस्यं तद्यन्नोपेयादिति यद्रेतःसिचा-
वुपदधाति ते एव यजमानस्य रेतो बिभृतस्त-
स्मादुपेयाद्रेतसोऽस्कन्दाय त्रीणि वाव रेताꣳसि

पिता पुत्रः पौत्रः ( ४ ) यद्द्वे रेतःसिचा-वुपदध्याद्रेतोऽस्य वि च्छिन्द्यात्तिस्र उप दधाति रेतसः संतत्या इयं वाव प्रथमा रेतःसिग्वाग्वा इयं तस्मात्पश्यन्तीमां पश्यन्ति वाचं वदन्तीमन्तरिक्षं द्वितीया प्राणो वा अन्तरिक्षं तस्मान्नान्तरिक्षं पश्यन्ति न प्राण-मसौ तृतीया चक्षुर्वा असौ तस्मात्पश्यन्त्यमूं पश्यन्ति चक्षुर्यजुषेमां च ( ५ ) अमूं चोप दधाति मनसा मध्यमामेषां लोकानां क्लृ-प्त्या अथो प्राणानामिष्टो यज्ञो भृगुभिराशीर्दा वसुभिस्तस्य त इष्टस्य वीतस्य द्रविणेह भक्षीयेत्याह स्तुतशस्त्रे एवैतेन दुहे पिता मातरिश्वाऽच्छिद्रा पदा धा अच्छिद्रा उशिजः पदाऽनु तक्षुः सोमो विश्वविन्नेता नेषद्बृहस्प-तिरुक्थामदानि शंसिषदित्याहैतद्वा अग्ने-रुक्थं तेनैवैनमनु शंसति ( ६ ) ॥

( मिनुयात्तृतीयं चिन्वानः स्त्रियं पौत्रश्च वै सप्त च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां पञ्चमाष्टके षष्ठप्रपाठकेऽष्टमोऽनुवाकः ॥ ८ ॥

———

( अन्वारोहणाद्यभिधानम् )

( अथ पञ्चमाष्टके षष्ठप्रपाठकेऽष्टमोऽनुवाकः । )

---

सुवर्गायेति सुवः—गाय । वै । एषः । लोकाय । चीयते । यत् । अग्निः । तम् । यत् । न । अन्वारोहेदित्यनु—आरोहेत् । सुवर्गादिति सुवः—गात् । लोकात् । यजमानः । हीयेत । पृथिवीम् । एति । अक्रमिषम् । प्राण इति प्र—अनः । मा । मा । हासीत् । अन्तरिक्षम् । एति । अक्रमिषम् । प्रजेति प्र—जा । मा । मा । हासीत् । दिवम् । एति । अक्रमिषम् । सुवः । अगन्म । इति । आह । एषः । वै । अग्नेः । अन्वारोह इत्यनु—आरोहः । तेन । एव । एनम् । अन्वारोहतीत्यनु—आरोहति । सुवर्गस्येति सुवः—गस्य । लोकस्य । समष्ट्या इति सम्—अष्ट्यै । यत् । पक्षसंमितामिति पक्ष—संमिताम् । मिनुयात् ( १ ) । कनीयाꣳसम् । यज्ञक्रतुमिति यज्ञ—क्रतुम् । उपेति । इयात् । पापीयसी । अस्य । आत्मनः । प्रजेति प्र—जा । स्यात् । वेदिसंमितामिति वेदि—संमिताम् । मिनोति । ज्यायाꣳसम् । एव । यज्ञक्रतुमिति यज्ञ—क्रतुम् । उपेति । एति । न । अस्य । आत्मनः । पापीयसी । प्रजेति प्र—जा । भवति । साहस्रम् । चिन्वीत । प्रथमम् ।

चिन्वानः । सहस्रसंमित इति सहस्र—संमितः । वै । अयम् । लोकः । इमम् । एव । लोकम् । अभीति । जयति । द्विषाहस्रमिति द्वि—साहस्रम् । चिन्वीत । द्वितीयम् । चिन्वानः । द्विषाहस्रमिति द्वि—साहस्रम् । वै । अन्तरिक्षम् । अन्तरिक्षम् । एव । अभीति । जयति । त्रिषाहस्रमिति त्रि—साहस्रम् । चिन्वीत । तृतीयम् । चिन्वानः ( २ ) । त्रिषाहस्र इति त्रि—साहस्रः । वै । असौ । लोकः । अमुम् । एव । लोकम् । अभीति । जयति । जानुदघ्नमिति जानु—दघ्नम् । चिन्वीत । प्रथमम् । चिन्वानः । गायत्रिया । एव । इमम् । लोकम् । अभ्यारोहतीत्यभि—आरोहति । नाभिदघ्नमिति नाभि—दघ्नम् । चिन्वीत । द्वितीयम् । चिन्वानः । त्रिष्टुभा । एव । अन्तरिक्षम् । अभ्यारोहतीत्यभि—आरोहति । ग्रीवदघ्नमिति ग्रीव—दघ्नम् । चिन्वीत । तृतीयम् । चिन्वानः । जगत्या । एव । अमुम् । लोकम् । अभ्यारोहतीत्यभि—आरोहति । न । अग्निम् । चित्वा । रामाम् । उपेति । इयात् । अयोनौ । रेतः । धास्यामि । इति । न । द्वितीयम् । चित्वा । अन्यस्य । स्त्रियम् ( ३ ) । उपेति । इयात् । न ।

तृतीयम् । चित्वा । काम् । चन । उपेति । इयात् । रेतः । वै । एतत् । नीति । धत्ते । यत् । अग्निम् । चिनुते । यत् । उपेयादित्युप—इयात् । रेतसा । वीति । ऋध्येत । अथो इति । खलु । आहुः । अप्रजस्यमित्यप्र—जस्यम् । तत् । यत् । न । उपेयादित्युप—इयात् । इति । यत् । रेतःसिचाविति रेतः—सिचौ । उपदधातीत्युप—दधाति । ते इति । एव । यजमानस्य । रेतः । बिभृतः । तस्मात् । उपेति । इयात् । रेतसः । अस्कन्दाय । त्रीणि । वाव । रेतांसि । पिता । पुत्रः । पौत्रः ( ४ ) । यत् । द्वे इति । रेतःसिचाविति रेतः—सिचौ । उपदध्यादित्युप—दध्यात् । रेतः । अस्य । वीति । छिन्द्यात् । तिस्रः । उपेति । दधाति । रेतसः । संतत्या इति सं—तत्यै । इयम् । वाव । प्रथमा । रेतःसिगिति रेतः—सिक् । वाक् । वै । इयम् । तस्मात् । पश्यन्ति । इमाम् । पश्यन्ति । वाचम् । वदन्तीम् । अन्तरिक्षम् । द्वितीया । प्राण इति प्र—अनः । वै । अन्तरिक्षम् । तस्मात् । न । अन्तरिक्षम् । पश्यन्ति । न । प्राणमिति प्र—अनम् । असौ । तृतीया । चक्षुः । वै । असौ । तस्मात् । पश्यन्ति । अमूम् । पश्यन्ति ।

चक्षुः । यजुंषा । इमाम् । च ( ५ ) । अमूम् । च । उपेति । दधाति । मनसा । मध्यमाम् । एषाम् । लोकानाम् । क्लृप्त्यै । अथो इति । प्राणानामिति प्र—अनानाम् । इष्टः । यज्ञः । भृगुंभिरिति भृगु—भिः । आशीर्दा इत्याशीः—दाः । वसुंभिरिति वसु—भिः । तस्य । ते । इष्टस्य । वीतस्य । द्रविणा । इह । भक्षीय । इति । आह । स्तुतशस्त्रे इति स्तुत—शस्त्रे । एव । एतेन । दुहे । पिता । मातरिश्वा । अच्छिद्रा । पदा । धाः । अच्छिद्राः । उशिजः । पदा । अन्विति । तक्षुः । सोमः । विश्वविदिति विश्व—वित् । नेता । नेषत् । बृहस्पतिः । उक्थामदानीत्युक्थ—मदानि । शंसिषत् । इति । आह । एतत् । वै । अग्नेः । उक्थम् । तेन । एव । एनम् । अन्विति । शंसति ( ६ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे पञ्चमाष्टके षष्ठप्रपाठकेऽष्टमोऽनुवाकः ॥ ८ ॥

---

( अथ पञ्चमकाण्डे षष्ठप्रपाठकेऽष्टमोऽनुवाकः । )

---

दीक्षाकालविकल्पा ये ते सप्तम उदीरिताः ।
अथाष्टमेऽन्वारोहणादिकमुच्यते ।

यदुक्तं सूत्रकारेण " नमस्ते हरसे शोचिष इति द्वाभ्यामग्निमधिरोहति पृथिवीमाक्रमिषमित्येतैर्यजमानः " इति, तद्विधिमिहोन्नयति—

सुवर्गाय वा एष लोकाय चीयते यदग्नि-
स्तं यन्नान्वारोहेत्सुवर्गाल्लोकाद्यजमानो
हीयेत पृथिवीमाऽक्रमिषं प्राणो मा
मा हासीदन्तरिक्षमाऽक्रमिषं प्रजा मा
मा हासीद्दिवमाऽक्रमिषꣳ सुवरगन्मेत्या-
हैष वा अग्नेरन्वारोहस्तेनैवैनमन्वारोहति
सुवर्गस्य लोकस्य समष्ट्यै , इति।

योऽयं चीयमानोऽग्निरेष सुवर्गलोकार्थं चीयतेऽतस्तस्यान्वारोहाभावे सुवर्गाद्धीयेत तन्मा भूदिति पृथिवीमित्यादिभिरन्वारोहेदिति विधिरुन्नेयः । मन्त्रार्थस्तु—यजमानोऽहं पृथिवीं पादेनाऽऽक्रमिषमतः प्राणो मां मा परित्यजतु । अन्तरिक्षाक्रमणेन पुत्रादिप्रजा मा परित्यजतु । दिव आक्रमणेन स्वर्गं प्राप्नुमः । एतन्मन्त्रपाठ एवाग्नेरन्वारोहहेतुः । अतस्तेनैवान्वारोहति । तच्च स्वर्गप्राप्त्यै भवति ॥

अथ यूपैकादशिन्यां कंचिद्विशेषं विधत्ते—

यत्पक्षसंमितां मिनुयात्कनीयाꣳसं य-
ज्ञक्रतुमुपेयात्पापीयस्यस्याऽऽत्मनः प्र-
जा स्याद्वेदिसंमितां मिनोति ज्यायाꣳ-
समेव यज्ञक्रतुमुपैति नास्याऽऽत्मनः
पापीयसी प्रजा भवति , इति ।

पक्षदैर्घ्यपरिमित एव देशे यद्येकादशिनीमवस्थापयेत्तदानीमल्पं यज्ञक्रतुं प्राप्नुयात् । अस्य यजमानस्य स्वकीया प्रजा पापीयसी च भवेत् । अतः पक्षपरिमाणादधिके वेदिप्रमाणयुक्तदेशे यूपान्तरालानि विलिख्यैकादशिनीं मिनुयात् । तथा सति प्रभूतमेव यज्ञक्रतुं प्राप्नोति । अस्य प्रजा च पापीयसी न भवति । पूर्वस्मिन्प्रपाठके वज्र एकादशिनीत्यत्र प्रकृतिभूते चयने पश्वेकादशिनीपक्षेऽप्येक एव यूपो न तु यूपैकादशिनीत्युक्तम् । इह तु चयनविकृतिषु यूपैकादशिन्यभ्युपगम्यत इत्यविरोधः ॥

अथ पञ्चस्वपि चितिषु संभूयेष्टकासंख्यां विधत्ते—

साहस्रं चिन्वीत प्रथमं चिन्वानः सहस्रसं-

मितो वा अयं लोक इममेव लोक-
मभि जयति द्विषाहस्रं चिन्वीत द्वितीयं
चिन्वानो द्विषाहस्रं वा अन्तरिक्षमन्त-
रिक्षमेवाभि जयति त्रिषाहस्रं चिन्वी-
त तृतीयं चिन्वानस्त्रिषाहस्रो वा असौ
लोकोऽमुमेव लोकमभि जयति , इति ।

सहस्रसंख्याकानामिष्टकानां समूहः साहस्रम् । अथवा सहस्रसंख्याकाभिरिष्टकाभिर्निष्पाद्योऽग्निः साहस्रः । यः प्राथमिकमग्निं चिन्वीत स तु साहस्रं कुर्यात् । द्वितीयवारं चिन्वानो द्विगुणम् । तृतीयवारं चिन्वानस्त्रिगुणम् । पृथिव्यन्तरिक्षद्युलोकाश्चोत्तरोत्तरभूयस्त्वात्तत्तच्चितिसंमिताः । अतस्तैश्चयनैस्तत्प्राप्तिः ॥

पक्षत्रयेऽपि क्रमेणोर्ध्वपरिमाणं विधत्ते—

जानुदघ्नं चिन्वीत प्रथमं चिन्वानो गायत्रि-
यैवेमं लोकमभ्यारोहति नाभिदघ्नं चिन्वीत
द्वितीयं चिन्वानस्त्रिष्टुभैवान्तरिक्षमभ्यारो-
हति ग्रीवदघ्नं चिन्वीत तृतीयं चिन्वा-
नो जगत्यैवामुं लोकमभ्यारोहति , इति ।

तथा प्रथमद्वितीयतृतीयचितीनामुत्तरोत्तरमौन्नत्यम् । अत एव गायत्रीत्रिष्टुब्जगतीनामुत्तरोत्तरमक्षराधिक्यम् । अतः क्रमेण गायत्र्यादिद्वारा लोकत्रयमधिरोहति ॥

त्रिविधचयने क्रमेण नियमविशेषान्विधत्ते—

नाग्निं चित्वा रामामुपेयादयोनौ रेतो धास्या-
मीति न द्वितीयं चित्वाऽन्यस्य स्त्रियमुपेयान्न
तृतीयं चित्वा कांचनोपेयाद्रेतो वा एतन्नि धत्ते
यदग्निं चिनुते यदुपेयाद्रेतसा व्यृध्येत , इति ।

यः प्राथमिकमग्निचयनं करोति स रामां नोपेयात् । स्वकीयासु भार्यासु मध्ये रमणीयेयमिति मत्वा कामुको न प्रवर्तेत । पुत्रार्थं तस्यामीप्सितानुज्ञा ।

रामोपगमनाभावेऽयं हेतुः-अयोनौ पुत्रोत्पत्त्यनुपयुक्तायां वृथैव रेतः स्थापयिष्यामीति तन्मा भूदित्यनुपगमनम् । द्वितीयचयनानुष्ठायी सार्ववर्णिकविवाहोपेतोऽन्यस्य वर्णान्तरस्य दुहितरं नोपेयात् । सवर्णायामीप्सितस्यानुज्ञा । तृतीयचयनानुष्ठायी सवर्णामसवर्णां रमणीयां पुत्रार्थिनीं वा कामपि नोपेयात् । तत्रायं हेतुः—अग्निं चिनुत इति यत्तदेतद्रेतसो गुप्तत्वेन स्थापनम् । तथा सत्युपगमने रेतसा वियुक्तो भवति ॥

तमिममगमनपक्षं दूषयित्वा सर्वत्र गमनमभ्यनुजानाति—

अथो खल्वाहुरप्रजस्यं तद्यन्नोपेयादिति यद्रेतःसिचावुपदधाति ते एव यजमानस्य रेतो बिभृतस्तस्मादुपेयाद्रेतसोऽस्कन्दाय, इति ।

अभिज्ञाः खल्वेवमाहुः—अनुपगमनमप्रजस्यं प्रजोत्पादनहेतुर्न भवति । न चोपगमने रेतोहानिः शङ्कनीया। विराड्ज्योतिरित्यादिमन्त्राभ्यां रेतःसिचाविष्टके अनेनोपहिते । तस्मात्ते एवास्य यजमानस्य रेतः पालयतः । अतो रेतसो विनाशाभावाय प्रजोत्पत्त्यर्थमुपेयात् । साहस्रादिविधीनामाम्नातब्राह्मणोक्तावप्यवकाशाभावात्सर्वान्ते निवेशः । पूर्वस्य त्वन्वारोहणविधेर्नमस्ते हरस इत्याद्यधिरोहणादूर्ध्वभावित्वादश्मन्नूर्जमिति परि षिञ्चतीत्यनुवाकान्ते निवेशः ॥

पूर्वस्मिन्प्रपाठके यद्विराजावुपदधातीत्यादिना रेतःसिचो विधानमुक्तम् । तत्रैव कंचिद्विशेषं विधत्ते—

त्रीणि वाव रेताꣳसि पिता पुत्रः पौत्रो यद्द्वे रेतःसिचावुपदध्याद्रेतोऽस्य विच्छिन्द्यात्तिस्र उप दधाति रेतसः संतत्यै, इति ।

योऽयं पितेदानीं वर्तते सोऽतीतस्य कस्यचिद्रेतः । अस्य पितुः पुत्रो रेतः । पौत्रस्तु पुत्रस्य रेतः । एवं पितृपुत्रपौत्राणां त्रीणि रेतांसि । तथा सति द्वयोरेव रेतःसिचोरुपधाने सत्यवशिष्टं रेतो विच्छिन्द्यात् । तस्मात्तिस्रो रेतःसिच उपदध्यात् । तच्च रेतःसंतत्यै संपद्यते ॥

तिस्रोऽपि रेतःसिचः क्रमेण प्रशंसति—

इयं वाव प्रथमा रेतःसिग्वाग्वा इयं तस्मात्पश्यन्तीमां पश्यन्ति वाचं वदन्तीमन्तरिक्षं

द्वितीया प्राणो वा अन्तरिक्षं तस्मान्नान्तरिक्षं पश्यन्ति न प्राणमसौ तृतीया चक्षुर्वा असौ तस्मात्पश्यन्त्यमूं पश्यन्ति चक्षुः, इति।

या प्रथमा रेतःसिक्सा भूमिरेव प्राथम्यसाम्यात्। भूमिश्च वाग्रूपिण्यधोवृत्तित्वसाम्यात्। आस्ये हि वाग्वृत्तित्वे नासिकायां प्राणस्तत उपरि चक्षुस्ततो वाचोऽधोवृत्तित्वम्। यस्माद्भूमिवाचावधोवृत्तित्वेन समानरूपे तस्माल्लोकेऽपि नानाविधसस्यादिपूर्णामिमां भूमिं मातृरूपेण पश्यन्ति। तथा विद्वत्सभायां सम्यग्वदन्तीं वाचं पश्यन्त्याद्रियन्ते। येयं द्वितीया रेतःसिक्सा चान्तरिक्षरूपा मध्यमत्वसाम्यात्। तच्चान्तरिक्षं प्राणस्वरूपं प्राणस्यापि वाक्चक्षुषोर्मध्यवर्तित्वात्। यस्मादन्तरिक्षप्राणयोः साम्यं तस्मादमूर्तमन्तरिक्षं चक्षुषा न पश्यन्ति। प्राणं च नासिकासंचारिणं चक्षुषा न पश्यन्ति। येयं तृतीया रेतःसिगिष्टका सा द्युलोकस्वरूपोपरिवर्तित्वसाम्यात्। सा च द्यौश्चक्षुःस्वरूपा। चक्षुरपि हि वाक्प्राणाभ्यामूर्ध्वं वर्तते। यस्माद्द्युचक्षुषोः साम्यं तस्माल्लोके जनाः सूर्यचन्द्रनक्षत्राद्यङ्किताममूं दिवं प्रत्यक्षेण पश्यन्ति। चक्षुरपि शुक्लकृष्णकनीनिकोपेतं परकीयमुखस्थं प्रत्यक्षतः पश्यन्ति॥

तदेवं तिस्रः प्रशस्य तासु कंचिद्विशेषं विधत्ते—

यजुषेमां चामूं चोप दधाति मनसा मध्यमामेषां लोकानां क्लृप्त्या अथो प्राणानाम्, इति।

विराड्ज्योतिरधारयदिति यजुषोच्चारितेनेमां प्रथमां रेतःसिचमुपदध्यात्। तथा सम्राड्ज्योतिरधारयदिति यजुषोच्चारितेनामूं तृतीयां रेतःसिचमुपदध्यात्। स्वराड्ज्योतिरधारयदित्येतद्यजुरनुच्चार्य मनसा स्मृत्वा मध्यमां रेतःसिचमुपदध्यात्। अयं च प्रकार एषां पृथिव्यादिलोकानां स्वस्वव्यापारसामर्थ्याय संपद्यते। अपि च वाक्प्राणचक्षुराख्यानां प्राणानामपि स्वस्वव्यापारसामर्थ्याय संपद्यते। तदिदं रेतःसिचां ब्राह्मणं यद्विराजावुपदधातीत्यनेन सह स्वयमातृण्णामुप दधातीत्यनुवाके द्रष्टव्यम्॥

यदुक्तं सूत्रकारेण—“एकादश समिष्टयजूंषि जुहोति नवाऽऽध्वरिकाणि हुत्वेष्टो यज्ञो भृगुभिरिति दशमैकादशे जुहोति” इति, तदेतद्विधातुं मन्त्रावुत्पादयति—

( अन्वारोहणाद्यभिधानम् )

इष्टो यज्ञो भृगुभिराशीर्दा वसुभिस्तस्य त इष्टस्य वीतस्य द्रविणेह भक्षीय , इति।

भृगुभिर्भृगुसमानैर्ऋत्विग्भिर्वसुभिर्निवासहेतुभिर्देवैश्चेष्टोऽयं यज्ञ आशीर्दा यजमानस्य फलप्रदोऽस्तु। सोऽयमेको मन्त्रः। हे यज्ञ तस्य तादृशस्य भृगुभिरिष्टस्य ते तव द्रविणा फलभूतानि, धनानीह कर्मणि भक्षीय भजे यथाऽऽप्नुयाम्। सोऽयं द्वितीयो मन्त्रः॥

एतन्मन्त्रसाध्यं होमविधिमुन्नयति—

इत्याह स्तुतशस्त्रे एवैतेन दुहे , इति।

इत्युक्तमन्त्रद्वयं होमकाले पठेत्। तेन स्तुतशस्त्रे उभे अपि दुग्धवान्भवति। तदिदं ब्राह्मणमन्ते द्रष्टव्यम्॥

यदुक्तं सूत्रकारेण—"पिता मातरिश्वेति संचितोक्थेन होताऽनुशंसति होतर्यकामयमानेऽध्वर्युः" इति, तत्र मन्त्रमुत्पाद्य विधत्ते—

पिता मातरिश्वाऽच्छिद्रा पदा धा अच्छिद्रा उशिजः पदाऽनु तक्षुः सोमो विश्वविन्नेता नेषद्बृहस्पतिरुक्थामदानि शꣳसिषदित्याहै-तद्वा अग्नेरुक्थं तेनैवैनमनु शꣳसति॥, इति॥

पिता पालको मातरिश्वा वायुरच्छिद्रा पदा विनाशरहितानि स्थानानि धा दधातु संपादयतु। तथोशिजः कमनीया महर्षयोऽच्छिद्राः स्वयं विनाशरहिताः सन्तः पदानि स्थानानि अनुतक्षुः सम्यक्संपादयन्तु। विश्ववित्सर्वज्ञो नेता जगतः प्रवर्तकः सोमो नेषन्नयतु तानि प्रापयतु। बृहस्पतिश्चोक्थामदानि शस्त्राणि हर्षकारणानि शंसिषच्छंसत्वित्येतादृशं मन्त्रं पठेत्। एतदेव मन्त्रस्वरूपमग्नेः प्रियमुक्थं शस्त्रम्। तेनैव मन्त्रपाठेनैनमग्निमनु क्रमेण शंसति। एतच्च ब्राह्मणं गायत्रादिसामोपस्थानेन सह विकर्षणादूर्ध्वं द्रष्टव्यम्॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये पञ्चमकाण्डे षष्ठप्रपाठकेऽष्टमोऽनुवाकः॥ ८॥

---

( अथ पञ्चमाष्टके षष्ठप्रपाठके नवमोऽनुवाकः । )

---

सूयते वा एषोऽग्नीनां य उखायां भ्रियते यदधः सादयेद्गर्भाः प्रपादुकाः स्युरथो यथा सवात्प्रत्यवरोहति तादृगेव तदासन्दी सादयति गर्भाणां धृत्या अप्रपादायाथो सवमेवैनं करोति गर्भो वा एष यदुख्यो योनिः शिक्यं यच्छिक्यादुखां निरूहेद्योनेर्गर्भं निर्हण्यात्षड्दुद्यामꣳ शिक्यं भवति षोढाविहितो वै( १ ) पुरुष आत्मा च शिरश्च चत्वार्यङ्गान्यात्मन्नेवैनं बिभर्ति प्रजापतिर्वा एष यदग्निस्तस्योखा चोलूखलं च स्तनौ तावस्य प्रजा उप जीवन्ति यदुखां चोलूखलं चोपदधाति ताभ्यामेव यजमानोऽमुष्मिँल्लोकेऽग्निं दुहे संवत्सरो वा एष यदग्निस्तस्य त्रेधाविहिता इष्टकाः प्राजापत्या वैष्णवीः ( २ ) वैश्वकर्मणीरहोरात्राण्येवास्य प्राजापत्या यदुख्यं बिभर्ति प्राजापत्या एव तदुप धत्ते यत्समिध आदधाति वैष्णवा वै वनस्पतयो वैष्णवीरेव तदुप धत्ते यदिष्टकाभिरग्निं चिनोतीयं वै विश्वकर्मा वैश्वकर्मणीरेव तदुप धत्ते तस्मादाहुस्त्रिवृदग्निरिति तं वा

एतं यजमान एव चिन्वीत यदस्यान्यश्चिनुयाद्यत्तं दक्षिणाभिर्न राधयेदग्निमस्य वृञ्जीत योऽस्याग्निं चिनुयात्तं दक्षिणाभी राधयेदग्निमेव तत्स्पृणोति ( ३ ) ॥

( षोढाविहितो वै वैष्णवीरन्यो विꣳशतिश्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां पञ्चमाष्टके षष्ठप्रपाठके नवमोऽनुवाकः ॥ ९ ॥

---

( अथ पञ्चमाष्टके षष्ठप्रपाठके नवमोऽनुवाकः । )

---

सूयते । वै । एषः । अग्नीनाम् । यः । उखायाम् । ध्रियते । यत् । अधः । सादयेत् । गर्भाः । प्रपादुका इति प्र—पादुकाः । स्युः । अथो इति । यथा । सवात् । प्रत्यवरोहतीति प्रति—अवरोहति । तादृक् । एव । तत् । आसन्दी । सादयति । गर्भाणाम् । धृत्यै । अप्रपादायेत्यप्र—पादाय । अथो इति । सवम् । एव । एनम् । करोति । गर्भः । वै । एषः । यत् । उख्यः । योनिः । शिक्यम् । यत् । शिक्यात् । उखाम् । निरूहेदिति निः—ऊहेत् । योनेः । गर्भम् । निरिति । हन्यात् । षडुद्याममिति षट्—उद्यामम् । शिक्यम् । भवति । षोढाविहित इति षोढा—विहितः । वै ( १ ) । पुरुषः । आत्मा । च । शिरः ।

च । चत्वारि । अङ्गानि । आत्मन् । एव । एनम् । बिभर्ति । प्रजापतिरिति प्रजा—पतिः । वै । एषः । यत् । अग्निः । तस्य । उखा । च । उलूखलम् । च । स्तनौ । तौ । अस्य । प्रजा इति प्र—जाः । उपेति । जीवन्ति । यत् । उखाम् । च । उलूख-लम् । च । उपदधातीत्युप—दधाति । ताभ्याम् । एव । यजमानः । अमुष्मिन् । लोके । अग्निम् । दुहे । संवत्सर इति सं—वत्सरः । वै । एषः । यत् । अग्निः । तस्य । त्रेधाविहिता इति त्रेधा—विहिताः । इष्टकाः । प्राजापत्या इति प्राजा—पत्याः । वै-ष्णवीः ( २ ) । वैश्वकर्मणीरिति वैश्व—कर्मणीः । अहो-रात्राणीत्यहः—रात्राणि । एव । अस्य । प्राजापत्या इति प्राजा—पत्याः । यत् । उख्यम् । बिभर्ति । प्राजापत्या इति प्राजा—पत्याः । एव । तत् । उ-पेति । धत्ते । यत् । समिध इति सम्—इधः । आद-धातीत्या—दधाति । वैष्णवाः । वै । वनस्पतयः । वैष्णवीः । एव । तत् । उपेति । धत्ते । यत् । इष्टकाभिः । अग्निम् । चिनोति । इयम् । वै । विश्वकर्मेति वि-श्व—कर्मा । वैश्वकर्मणीरिति वैश्व—कर्मणीः । एव । तत् । उपेति । धत्ते । तस्मात् । आहुः । त्रिवृदिति

त्रि—वृत् । अग्निः । इति । तम् । वै । एतम् । यज॑मानः । एव । चि॒न्वी॒त । यत् । अ॒स्य । अ॒न्यः । चि॒नु॒यात् । यत् । तम् । दक्षि॑णाभिः । न । रा॒ध॒येत् । अ॒ग्निम् । अ॒स्य । वृ॒ञ्जी॒त । यः । अ॒स्य । अ॒ग्निम् । चि॒नु॒यात् । तम् । दक्षि॑णाभिः । रा॒ध॒ये॒त् । अ॒ग्निम् । ए॒व । तत् । स्पृ॒णो॒ति ( ३ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे पञ्चमाष्टके
षष्ठप्रपाठके नवमोऽनुवाकः ॥ ९ ॥

---

( अथ पञ्चमकाण्डे षष्ठप्रपाठके नवमोऽनुवाकः । )

---

अन्वारोहादिविधयो ह्यष्टमे समुदीरिताः ॥

अथ नवम आसन्द्यादिकमभिधीयते । विष्णुमुखा वै देवा इत्यस्मिन्ननुवाके चतसृभिः सादयतीति यद्विहितं तत्र सादनाधारं विधत्ते—

सूयते वा एषोऽग्नीनां य उखायां भ्रियते यदधः सादयेद्गर्भाः प्रपादुकाः स्युरथो यथा सवात्प्रत्यवरोहति तादृगेव तदासन्दी सादयति गर्भाणां धृत्या अप्रपादायाथो सवमेवैनं करोति , इति ।

योऽयमग्निरुखायां धार्यत एषोऽग्निरन्येषामग्नीनां मध्ये सूयतेऽभिषिच्यत ईश्वरत्वं प्राप्नोतीत्यर्थः । यद्येतादृशमग्निमधो भूमौ सादयेत्तदानीं प्राणिनां गर्भा भूमौ प्रपादुकाः पतिताः स्युः । अपि च यथा लोके सवादैश्वर्यपदात्प्रत्यवरोहति भ्रश्यति तादृगेव तदधः सादनम् । तस्मादासन्दीमासादयति महत्यामासन्द्यामुख्यं स्थापयेत् । तच्च स्थापनं प्राणिगर्भधारणाय पतनराहित्याय च भवति । अपि चैनं सवमभिषिक्तमीश्वरमेव करोति । एतच्च सादनविधिसमीप एव द्रष्टव्यम् ॥

न ह स्म वै पुराऽग्निरित्यनुवाके यद्विहितं षडुद्यामं शिक्यं भवतीति तदेतदनूद्य प्रशंसति—

गर्भो वा एष यदुख्यो योनिः शिक्यं यच्छिक्यादुखां निरूहेद्योनेर्गर्भं निर्हण्यात्षडुद्यामꣳ शिक्यं भवति षोढाविहितो वै पुरुष आत्मा च शिरश्च चत्वार्यङ्गान्यात्मन्नेवैनं बिभर्ति, इति।

योऽयमुख्योऽग्निः स गर्भस्थानीयः। शिक्यं च योनिस्थानीयम्। यदि शिक्यादुखां निरूहेन्निर्गमयेद्विस्तृतेनोद्यामराहित्येनाधः पातयेदित्यर्थः। तदा योनेः सकाशाद्गर्भं निःशेषेण हतवान्भवति। अतस्तत्परिहाराय शिक्यं षड्भिरुद्यामैरूर्ध्वमस्तृतरज्जुविशेषैर्युक्तं कर्तव्यम्। लोके पुरुषः षोढाविहितः षड्भिरवयवैरुपेतः। आत्मा मध्यशरीरमेकोऽवयवः शिरो द्वितीयोऽवयवो द्वौ हस्तौ द्वौ पादाविति चत्वार्यङ्गानि। अतः षडुद्यामे सति षडवयवयुक्तस्वशरीर एवैनमग्निं धारयति। एतच्च वाक्यं षडुद्यामविधिसमीपे द्रष्टव्यम्॥

एषां वा एतल्लोकानामित्यनुवाके यदुखामुपदधातीति विहितं यच्च स्वयमातृण्णामित्यनुवाक उलूखलमुपदधातीति विहितं तदुभयमत्र सह प्रशंसति—

प्रजापतिर्वा एष यदग्निस्तस्योखा चोलूखलं च स्तनौ तावस्य प्रजा उप जीवन्ति यदुखां चोलूखलं चोपदधाति ताभ्यामेव यजमानोऽमुष्मिँल्लोकेऽग्निं दुहे, इति।

यश्चीयमानोऽग्निरेष प्रजापतिस्वरूपस्तेन चितत्वात्। उखोलूखलयोः फलसाधनत्वात्स्तनसादृश्यम्। एतदनुष्ठानजन्यं फलं प्रजा उपजीवन्ति। एतदुपधानेन यजमानोऽपि स्वर्गे तत्फलं दुहे। एतच्चोदाहृतयोरनुवाकयोरेकत्र द्रष्टव्यम्॥

अथोख्यधारणसमिदाधानेष्टकोपधानानि प्रशंसति—

संवत्सरो वा एष यदग्निस्तस्य त्रेधाविहिता इष्टकाः प्राजापत्या वैष्णवीर्वैश्वकर्मणीरहोरात्राण्येवास्य प्राजापत्या यदुख्यं बिभर्ति

प्राजापत्या एव तदुप धत्ते यत्समिध आद-
धाति वैष्णवा वै वनस्पतयो वैष्णवी-
रेव तदुप धत्ते यदिष्टकाभिरग्निं चिनो-
तीयं वै विश्वकर्मा वैश्वकर्मणीरेव तदुप
धत्ते तस्मादाहुस्त्रिवृदग्निरिति, इति।

योऽयं चीयमानोऽग्निः स एव संवत्सरधारणात्संवत्सरात्मकः। तस्य च संवत्सररूपस्याग्नेः संबन्धिन्य इष्टकास्त्रेधा विहितास्त्रिप्रकाराः संपादिताः। कास्ता इति ता उच्यन्ते—प्राजापत्या वैष्णव्यो वैश्वकर्मण्यश्च। यान्येतान्यहोरात्राणि तान्येवास्य संवत्सररूपस्याग्नेः प्रजापतिनिर्मितत्वात्प्राजापत्या द्रष्टव्याः। अत्रोख्यधारणेन प्राजापत्या उपहिता भवन्ति। तदेवं प्राजापत्यादिभिस्तिसृभिर्निष्पादितत्वादग्निस्त्रिगुण इत्यभिज्ञा आहुः॥

अथोपधानकर्तारं विधत्ते—

तं वा एतं यजमान एव चिन्वीत यद-
स्यान्यश्चिनुयाद्यत्तं दक्षिणाभिर्न राध-
येदग्निमस्य वृञ्जीत योऽस्याग्निं चिनुयात्तं
दक्षिणाभी राधयेदग्निमेव तत्स्पृणोति॥, इति॥

यजमान एव चयनस्य कर्ता नाध्वर्युः। यद्यध्वर्युः कुर्यात्तदानीमध्वर्योर्दक्षिणाभिः परितोषाभावे सत्यग्निं नाशयेत्। अथ स्वयमशक्तोऽध्वर्युणा कारयेत्तदा तं दक्षिणाभिस्तोषयेत्तेनाग्निमेव तोषयति। तदिदं ब्राह्मणद्वयं मन्त्रव्याख्यान्ते मध्येऽवकाशाभावेन निवेशनीयम्॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये पञ्चमकाण्डे षष्ठप्रपाठके नवमोऽनुवाकः॥ ९॥

---

(अथ पञ्चमाष्टके षष्ठप्रपाठके दशमोऽनुवाकः।)

---

प्रजापतिरग्निमचिनुतर्तुभिः संवत्सरं वसन्ते-
नैवास्य पूर्वार्धमचिनुत ग्रीष्मेण दक्षिणं पक्षं

वर्षाभिः पुच्छꣳ शरदोत्तरं पक्षꣳ हेमन्तेन मध्यं ब्रह्मणा वा अस्य तत्पूर्वार्धमचिनुत क्षत्रेण दक्षिणं पक्षं पशुभिः पुच्छं विशोत्तरं पक्षमाशया मध्यं य एवं विद्वानग्निं चिनुत ऋतुभिरेवैनं चिनुतेऽथो एतदेव सर्वमव ( १ ) रुन्धे शृण्वन्त्येनमग्निं चिक्यानमत्त्यन्नꣳ रोचत इयं वाव प्रथमा चितिरोषधयो वनस्पतयः पुरीषमन्तरिक्षं द्वितीया वयाꣳसि पुरीषमसौ तृतीया नक्षत्राणि पुरीषं यज्ञश्चतुर्थी दक्षिणा पुरीषं यजमानः पञ्चमी प्रजा पुरीषं यत्त्रि-चितीकं चिन्वीत यज्ञं दक्षिणामात्मानं प्रजा-मन्तरियात्तस्मात्पञ्चचितीकश्चेतव्य एतदेव सर्वꣳ स्पृणोति यत्तिस्रश्चितयः ( २ ) त्रिवृध्द्य-ग्निर्यद्द्वे द्विपाद्यजमानः प्रतिष्ठित्यै पञ्च चितयो भवन्ति पाङ्क्तः पुरुष आत्मानमेव स्पृणोति पञ्च चितयो भवन्ति पञ्चभिः पुरीषैरभ्यूहति दश सं पद्यन्ते दशाक्षरो वै पुरुषो यावानेव पुरुषस्तꣳ स्पृणोत्यथो दशाक्षरा विराडन्नं विराड्विराज्येवान्नाद्ये प्रतितिष्ठति संवत्सरो वै षष्ठी चितिर्ऋतवः पुरीषꣳ षट्चितयो

भवन्ति षट्पुरीषाणि द्वादश सं पद्यन्ते द्वादश मासाः संवत्सरः संवत्सर एव प्रति तिष्ठति (३)॥

(अव चितयः पुरीषं पञ्चदश च।)

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां पञ्चमाष्टके षष्ठप्रपाठके दशमोऽनुवाकः॥ १०॥

---

(अथ पञ्चमाष्टके षष्ठप्रपाठके दशमोऽनुवाकः।)

---

प्रजापतिरिति प्रजा—पतिः। अग्निम्। अचिनुत। ऋतुभिरित्यृतु—भिः। संवत्सरमिति सं—वत्सरम्। वसन्तेन। एव। अस्य। पूर्वार्धमिति पूर्व—अर्धम्। अचिनुत। ग्रीष्मेण। दक्षिणम्। पक्षम्। वर्षाभिः। पुच्छम्। शरदा। उत्तरमित्युत्—तरम्। पक्षम्। हेमन्तेन। मध्यम्। ब्रह्मणा। वै। अस्य। तत्। पूर्वार्धमिति पूर्व—अर्धम्। अचिनुत। क्षत्रेण। दक्षिणम्। पक्षम्। पशुभिरिति पशु—भिः। पुच्छम्। विशा। उत्तरमित्युत्—तरम्। पक्षम्। आशया। मध्यम्। यः। एवम्। विद्वान्। अग्निम्। चिनुते। ऋतुभिरित्यृतु—भिः। एव। एनम्। चिनुते। अथो इति। एतत्। एव। सर्वम्। अवेति (१)।

इन्धे । शृण्वन्ति । एनम् । अग्निम् । चिक्यानम् । अत्ति । अन्नम् । रोचते । इयम् । वाव । प्रथमा । चितिः । ओषधयः । वनस्पतयः । पुरीषम् । अन्तरिक्षम् । द्वितीया । वयांसि । पुरीषम् । असौ । तृतीया । नक्षत्राणि । पुरीषम् । यज्ञः । चतुर्थी । दक्षिणा । पुरीषम् । यजमानः । पञ्चमी । प्रजेति प्र—जा । पुरीषम् । यत् । त्रिचितीकमिति त्रि—चितीकम् । चिन्वीत । यज्ञम् । दक्षिणाम् । आत्मानम् । प्रजामिति प्र—जाम् । अन्तः । इयात् । तस्मात् । पञ्चचितीक इति पञ्च—चितीकः । चेतव्यः । एतत् । एव । सर्वम् । स्पृणोति । यत् । तिस्रः । चितयः ( २ ) । त्रिवृदिति त्रि—वृत् । हि । अग्निः । यत् । द्वे इति । द्विपादिति द्वि—पात् । यजमानः । प्रतिष्ठित्या इति प्रति—स्थित्यै । पञ्च । चितयः । भवन्ति । पाङ्क्तः । पुरुषः । आत्मानम् । एव । स्पृणोति । पञ्च । चितयः । भवन्ति । पञ्चभिरिति पञ्च—भिः । पुरीषैः । अभीति । ऊहति । दश । समिति । पद्यन्ते । दशाक्षर इति दश—अक्षरः । वै । पुरुषः । यावान् । एव । पुरुषः । तम् । स्पृणोति । अथो इति । दशाक्षरेति दश—अक्षरा ।

विराडिति वि—राट्। अन्नम्। विराडिति वि—राट्। विराजीति वि—राजि। एव। अन्नाद्य इत्यन्न—अद्ये। प्रतीति। तिष्ठति। संवत्सर इति सं—वत्सरः। वै। षष्ठी। चितिः। ऋतवः। पुरीषम्। षट्। चितयः। भवन्ति। षट्। पुरीषाणि। द्वादश। समिति। पद्यन्ते। द्वादश। मासाः। संवत्सर इति सं—वत्सरः। संवत्सर इति सं—वत्सरे। एव। प्रतीति। तिष्ठति (३)॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे पञ्चमाष्टके षष्ठप्रपाठके दशमोऽनुवाकः ॥ १० ॥

---

(अथ पञ्चमकाण्डे षष्ठप्रपाठके दशमोऽनुवाकः।)

---

आसन्द्युद्यामपुख्यानि नवमे वर्णितानि हि ॥

अथ दशमे चयनं बहुधा प्रशस्यते। तत्र वसन्ताद्यृतुद्वारा प्रशंसामाह—

प्रजापतिरग्निमचिनुतर्तुभिः संवत्सरं वसन्तेनैवास्य पूर्वार्धमचिनुत ग्रीष्मेण दक्षिणं पक्षं वर्षाभिः पुच्छꣳ शरदोत्तरं पक्षꣳ हेमन्तेन मध्यम्, इति।

अत्र संवत्सरो दृष्टान्तः। ऋतुभिर्यथा संवत्सरो निष्पाद्यते तथाऽग्निमप्यृतुभिः प्रजापतिरचिनुत। ऋतुमयोऽयं यज्ञ इति संकल्प एव चयनम्। तत्र वसन्तः शिरोभागः। एवं दक्षिणपक्षादयो योज्याः॥

अथ ब्राह्मणादिरूपत्वं संकल्पेन प्रशंसति—

ब्रह्मणा वा अस्य तत्पूर्वार्धमचिनुत क्षत्रेण दक्षिणं पक्षं पशुभिः पुच्छं विशोत्तरं पक्षमाशया मध्यम्, इति।

आशा मानसी तृष्णादिः[1] ॥

अथ वेदनं प्रशंसति—

य एवं विद्वानग्निं चिनुत ऋतुभिरेवैनं चिनु-
तेऽथो एतदेव सर्वमव रुन्धे शृण्व-
न्त्येनमग्निं चिक्यानमत्त्यन्नꣳ रोचते , इति ।

यो यजमान एवं वसन्ताद्यात्मकत्वं ब्राह्मणाद्यात्मकत्वं च विद्वांस्तथैव सर्वदा भावयन्नग्निं चिनुते स प्रजापतिवदृतुभिर्ब्राह्मणादिभिश्च चितवान्भवति । अपि चैतदृतूनां ब्राह्मणादीनां च स्वरूपं सर्वमधीनं करोति । किं चाग्निं चितवन्तमेनं यजमानं सर्वे जनाः शृण्वन्ति, अग्निचित्कपिला सत्रीत्यादिस्मृतिविषयत्वेन सर्वत्र प्रसिद्धो भवतीत्यर्थः । किं चान्नं समृद्धं स्वादु च सर्वदाऽत्ति । अपि च सर्वेभ्यो रोचते प्रीतिविषयो भवति ॥

अथ चितिपञ्चकं पुरीषपञ्चकं च भूम्यादिरूपेण प्रशंसति—

इयं वाव प्रथमा चितिरोषधयो वनस्पतयः
पुरीषमन्तरिक्षं द्वितीया वयाꣳसि पुरीषमसौ
तृतीया नक्षत्राणि पुरीषं यज्ञश्चतुर्थी दक्षिणा
पुरीषं यजमानः पञ्चमी प्रजा पुरीषम् , इति ।

येयं प्रथमा चितिः सा भूमिरेव । यच्च तस्या उपरि प्रसारितं पुरीषं तदोषधिवनस्पतिस्वरूपम् । एवमुत्तरत्रापि द्रष्टव्यम् ॥

अत्र शाखान्तरगतं चितित्रयपक्षं निराकृत्य स्वकीयं चितिपञ्चकपक्षं स्थापयति—

यत्त्रिचितीकं चिन्वीत यज्ञं दक्षिणामा-
त्मानं प्रजामन्तरियात्तस्मात्पञ्चचिती-
कश्चेतव्य एतदेव सर्वꣳ स्पृणोति , इति ।

चतुर्थचितितत्पुरीषयोर्यज्ञदक्षिणारूपत्वमुक्तम् । पञ्चमचितितत्पुरीषयोर्यजमानप्रजारूपत्वम् । एवं सति त्रिचितिपक्षे यज्ञादीनामन्तरायः स्यात् । तस्मात्पञ्चचितियुक्त एवाग्निश्चेतव्यः । तथा सत्येतद्भूम्यादिकं यज्ञादिकं च सर्वमपि प्रीणयत्येव ॥

---

१ क. घ. ङ. च. तृष्णादि ।

(बहुधा चयनप्रशंसा)

आद्यं चितित्रयमुत्तरद्वयं च विभज्य प्रशंसति—

यत्तिस्रश्चितयस्त्रिवृद्ध्यग्निर्यद्द्वे द्वि-
पाद्यजमानः प्रतिष्ठित्यै, इति।

या एता आद्यास्तिस्रश्चितयस्ताभिरग्नेस्त्रैगुण्यं संपादितं भवति। त्रैगुण्यं च प्राजापत्यादिभिरिष्टकाभिः पूर्वमुक्तम्। ये चोत्तरे द्वे चिती ताभ्यां द्विपाद्यजमानः प्रतिष्ठितो भवति॥

अथ समूहरूपेण प्रशंसति—

पञ्च चितयो भवन्ति पाङ्क्तः पुरुष आत्मानमेव
स्पृणोति पञ्च चितयो भवन्ति पञ्चभिः पुरीषैर-
भ्यूहति दश सं पद्यन्ते दशाक्षरो वै पुरुषो या-
वानेव पुरुषस्तꣳ स्पृणोत्यथो दशाक्षरा विरा-
डन्नं विराड्विराज्येवान्नाद्ये प्रति तिष्ठति, इति।

पुरुषस्य दशाक्षरत्वं छिद्राभिप्रायेण द्रष्टव्यम्। यानि शिरसि सप्त च्छिद्राणि ये चाधो द्वे छिद्रे या च नाभिस्तानि सर्वाणि यावज्जीवमविनाशादक्षराणीत्युच्यन्ते। एतदेवाभिप्रेत्य तत्र तत्राऽऽम्नायते—"सप्त वै शीर्षण्याः प्राणा द्वाववाञ्चौ। नव वै पुरुषे प्राणा नाभिर्दशमी" इति। अतो दशसंख्यया पुरुषं साकल्येन प्रीणयति। किंच विराड्द्वाराऽन्ने प्रतितिष्ठति॥

अथ षष्ठचितिं तत्पुरीषं च प्रशंसति—

संवत्सरो वै षष्ठी चितिर्ऋतवः पुरीषम्, इति।

अत्र सर्वत्र प्रशंसारूपत्वात्संवत्सरादिरूपतायां न विस्मेतव्यम्॥

अथ सर्वं मिलित्वा प्रशंसति—

षट्चितयो भवन्ति षट्पुरीषाणि द्वाद-
श सं पद्यन्ते द्वादश मासाः संवत्सरः
संवत्सर एव प्रति तिष्ठति[1], इति॥

---

१ क. घ. ङ. °ञ्चौ प्रा० न°।

तदेतद्ब्राह्मणं सर्वान्ते द्रष्टव्यम् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये पञ्चमकाण्डे षष्ठप्रपाठके दशमोऽनुवाकः ॥ १० ॥

( अथ पञ्चमाष्टके षष्ठप्रपाठक एकादशोऽनुवाकः । )

रोहि॑तो धूम्ररो॑हितः कर्क॒न्धुरो॑हितस्ते प्रा॑जापत्या ब॒भ्रुर॑रुणब॑भ्रुः शु॒कब॑भ्रुस्ते रौ॒द्राः श्येतः॑ श्येताक्षः श्येत॑ग्रीवस्ते पि॑तृदेव॒त्या॑स्ति॒स्रः कृ॒ष्णा व॒शा वा॑रु॒ण्य॑स्ति॒स्रः श्वे॒ता व॒शाः सौ॒र्यो॑ मैत्राबार्हस्पत्या धूम्रल॑लामास्तू॒पराः ( १ ) ॥

( रोहि॑तः षड्वि॑ꣳशतिः । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां पञ्चमाष्टके षष्ठप्रपाठक एकादशोऽनुवाकः ॥ ११ ॥

( अथ पञ्चमाष्टके षष्ठप्रपाठक एकादशोऽनुवाकः । )

रोहि॑तः । धूम्ररो॑हित इति॑ धूम्र—रोहि॒तः । कर्क॒न्धुरो॑हित इति॑ कर्क॒न्धु—रो॒हि॒तः । ते । प्रा॒जा॒पत्या इति॑ प्राजा—प॒त्याः । ब॒भ्रुः । अ॒रु॒णब॑भ्रु॒रि॒त्य॑रु॒ण—ब॒भ्रुः । शु॒कब॑भ्रु॒रिति शु॒क—ब॒भ्रुः । ते । रौ॒द्राः । श्येतः॑ । श्ये॒ता॒क्ष इति॑ श्येत—अ॒क्षः । श्येत॑ग्रीव॒ इति॒ श्येत॑—ग्री॒वः । ते । पि॒तृ॒दे॒व॒त्या॑ इति॑

पितृ—दे॒वत्या॑ः । ति॒स्रः । कृ॒ष्णाः । व॒शाः । वा॒रु॒ण्य॑ः । ति॒स्रः । श्वे॒ताः । व॒शाः । सौ॒र्य॑ः । मै॒त्रा॒—बा॒र्ह॒स्प॒त्या इति॑ मैत्रा—बा॒र्ह॒स्प॒त्याः । धू॒म्रल॑लामा॒ इति॑ धू॒म्र—ल॒ला॒मा॒ः । तू॒प॒राः ( १ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे पञ्चमाष्टके षष्ठप्रपाठक एकादशोऽनुवाकः ॥ ११ ॥

---

( अथ पञ्चमकाण्डे षष्ठप्रपाठक एकादशोऽनुवाकः । )

---

चयनस्य प्रशंसाऽत्र दशमे बहुधेरिता ।
अथाष्टादशिनामानः पशवो ह्याश्वमेधिकाः ॥

अष्टादशसंख्याकानां पशूनामेकैकः संघातः । तत्रास्मिन्नेकादशेऽनुवाके प्रथमं संघमाह—

रोहितो धूम्ररोहितः कर्कन्धुरोहितस्ते प्राजापत्या बभ्रुररुणबभ्रुः शुकबभ्रुस्ते रौद्राः श्येतः श्येताक्षः श्येतग्रीवस्ते पितृदेवत्यास्तिस्रः कृष्णा वशा वारुण्यस्तिस्रः श्वेता वशा सौर्यो मैत्राबार्हस्पत्या धूम्रललामास्तूपराः ॥, इति ॥

पूर्वप्रपाठक इन्द्राय राज्ञे सूकर इत्यादौ जातिभेदा उक्ता इह तु वर्णभेदा उच्यन्ते । रोहितो लोहितवर्णः । धूम्ररोहितोऽस्पष्टलोहितः । कर्कन्धुरोहितः सौवीरवर्णः । त एते त्रयः प्राजापत्याः प्रजापतिदेवताकाः । एवमुत्तरत्राप्येकैकस्य देवस्य त्रयस्त्रयो विज्ञेयाः । बभ्रुः पाण्डुरकपिलः । अरुणबभ्रू रक्तकपिलः । शुकबभ्रुर्हरितशुकसमानवर्णः । श्येतोऽरक्तकवर्णः, शुक्लरक्त

इत्येके । श्येताक्षोऽरक्तदृष्टिः । श्येतग्रीवः प्रसिद्धः । तिस्र इत्यादिकं स्पष्टम् । धूम्रललामा धूम्रवर्णपुण्ड्राः । तूपराः शृङ्गहीनाः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये पञ्चमकाण्डे षष्ठप्रपाठक एकादशोऽनुवाकः ॥ ११ ॥

---

( अथ पञ्चमाष्टके षष्ठप्रपाठके द्वादशोऽनुवाकः । )

---

पृश्निस्तिरश्चीनपृश्निरूर्ध्वपृश्निस्ते मारुताः फल्गूर्लोहितोर्णी बलक्षी ताः सारस्वत्यः पृषती स्थूलपृषती क्षुद्रपृषती ता वैश्वदेव्यस्तिस्रः श्यामा वशाः पौष्णियस्तिस्रो रोहिणीर्वशा मैत्रियं ऐन्द्राबार्हस्पत्या अरुणललामास्तूपराः ( १ ) ॥

( पृश्निः षड्विंशतिः । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां पञ्चमाष्टके षष्ठप्रपाठके द्वादशोऽनुवाकः ॥ १२ ॥

---

( अथ पञ्चमाष्टके षष्ठप्रपाठके द्वादशोऽनुवाकः । )

---

पृश्निः । तिरश्चीनपृश्निरिति तिरश्चीन—पृश्निः । ऊर्ध्वपृश्निरित्यूर्ध्व—पृश्निः । ते । मारुताः । फल्गूः । लोहितोर्णीति लोहित—ऊर्णी । बलक्षी । ताः । सारस्वत्यः । पृषती । स्थूलपृषतीति स्थूल—पृषती ।

क्षुद्रपृषतीति क्षुद्र—पृषती। ताः। वैश्वदेव्य इति वै-श्व—देव्यः। तिस्रः। श्यामाः। वशाः। पौष्णियः। तिस्रः। रोहिणीः। वशाः। मैत्रियः। ऐन्द्राबार्हस्पत्या इत्यैन्द्रा—बार्हस्पत्याः। अरुणललामा इत्यरुण—ललामाः। तूपराः ( १ ) ॥

इति कृष्णयजुर्वेदीयतैतिरीयसंहितापदपाठे पञ्चमाष्टके षष्ठप्रपाठके द्वादशोऽनुवाकः ॥ १२ ॥

---

( अथ पञ्चमकाण्डे षष्ठप्रपाठके द्वादशोऽनुवाकः। )

---

अथ द्वितीयं संघमाह—

पृश्निस्तिरश्चीनपृश्निरूर्ध्वपृश्निस्ते मारुताः फल्गूर्लोहितोर्णी बलक्षी ताः सारस्वत्यः पृषती स्थूलपृषती क्षुद्रपृषती ता वैश्वदेव्यस्तिस्रः श्यामा वशाः पौष्णियस्तिस्रो रोहिणीर्वशा मैत्रिय ऐन्द्राबार्हस्पत्या अरुणललामास्तूपराः॥, इति ॥

पृश्निः शुक्लबिन्दुचितश्चित्रवर्णः। तिरश्चीनपृश्निस्तिर्यक्प्रवृत्तपृश्निवर्णः। एतेनोर्ध्वपृश्निर्व्याख्यातः। फल्गूर्लवणवर्णः। लोहितोर्णी लोहितलोमा। बलक्षी शुक्लावयवा। पृषती शुक्लबिन्दुभिश्चिता। स्थूलपृषती स्थूलशुक्लबिन्दुभिश्चिता। क्षुद्रपृषती सूक्ष्मशुक्लबिन्दुभिरुपेता। श्यामाः श्यामवर्णाः। रोहिणी रोहितवर्णाः। अरुणललामाः संध्यावर्णपुण्ड्राः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये पञ्चमकाण्डे षष्ठप्रपाठके द्वादशोऽनुवाकः ॥ १२ ॥

---

( अष्टादशिपशुतृतीयसंधाभिधानम् )

( अथ पञ्चमाष्टके षष्ठप्रपाठके त्रयोदशोऽनुवाकः । )

---

शितिबाहुरन्यतःशितिबाहुः समन्तशितिबाहुस्त ऐन्द्रवायवाः शितिरन्ध्रोऽन्यतःशितिरन्ध्रः समन्तशितिरन्ध्रस्ते मैत्रावरुणाः शुद्धवालः सर्वशुद्धवालो मणिवालस्त आश्विनास्तिस्रः शिल्पा वशा वैश्वदेव्यस्तिस्रः श्येनीः परमेष्ठिने सोमापौष्णाः श्यामलंलामास्तूपराः ( १ ) ॥

( शितिबाहुः पञ्चविंशतिः । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां पञ्चमाष्टके षष्ठप्रपाठके त्रयोदशोऽनुवाकः ॥ १३ ॥

---

( अथ पञ्चमाष्टके षष्ठप्रपाठके त्रयोदशोऽनुवाकः । )

---

शितिबाहुरिति शिति—बाहुः । अन्यतःशितिबाहुरित्यन्यतः—शितिबाहुः । समन्तशितिबाहुरिति समन्त—शितिबाहुः । ते । ऐन्द्रवायवा इत्यैन्द्र—वायवाः । शितिरन्ध्र इति शिति—रन्ध्रः । अन्यतःशितिरन्ध्र इत्यन्यतः—शितिरन्ध्रः । समन्तशितिरन्ध्र इति समन्त—शितिरन्ध्रः । ते । मैत्रावरुणा इति मैत्रा—वरुणाः । शुद्धवाल इति शुद्ध—वालः । सर्व-

शुद्धवाल इति सर्व—शुद्धवालः । मणिवाल इति मणि—वालः । ते । आश्विनाः । तिस्रः । शिल्पाः । वशाः । वैश्वदेव्यं इति वैश्व—देव्यः । तिस्रः । श्येनीः । परमेष्ठिने । सौमापौष्णा इति सौमा—पौष्णाः । श्यामललामा इति श्याम—ललामाः । तूपराः ( १ )॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे पञ्चमाष्टके षष्ठप्रपाठके त्रयोदशोऽनुवाकः ॥ १३ ॥

---

( अथ पञ्चमकाण्डे षष्ठप्रपाठके त्रयोदशोऽनुवाकः । )

---

तृतीयं संघमाह—

शितिबाहुरन्यतःशितिबाहुः समन्तशितिबाहुस्त ऐन्द्रवायवाः शितिरन्ध्रोऽन्यतःशितिरन्ध्रः समन्तशितिरन्ध्रस्ते मैत्रावरुणाः शुद्धवालः सर्वशुद्धवालो मणिवालस्त आश्विनास्तिस्रः शिल्पा वशा वैश्वदेव्यस्तिस्रः श्येनीः परमेष्ठिने सौमापौष्णाः श्यामललामास्तूपराः॥, इति ॥

शितिः शुक्लो बाह्वेकदेशो यस्यासौ शितिबाहुः । अन्यतःशितिबाहुर्यत्प्रथमस्य शितित्वं ततोऽन्यत्रैकदेशे शितित्वं यस्य सोऽन्यतःशितिस्तादृशो बाहुर्यस्य स तथोक्तः। समन्तशितिबाहुः सर्वशुक्लबाहुः। शितिरन्ध्रः शुक्लच्छिद्रः। अन्यतःशितिरन्ध्रसमन्तशितिरन्ध्रौ च पूर्ववत् । शुद्धवालः शुक्लपुच्छावयवः । सर्वशुद्धवालः शुक्लसर्वपुच्छः । मणिवालः शुक्लाशुक्लचितवालः । शिल्पा नानावर्णाः । श्येन्यः शुक्लवर्णाः । श्यामललामाः श्यामवर्णपुण्ड्राः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये पञ्चमकाण्डे षष्ठप्रपाठके त्रयोदशोऽनुवाकः ॥ १३ ॥

( अथ पञ्चमाष्टके षष्ठप्रपाठके चतुर्दशोऽनुवाकः । )

---

उन्नत ऋषभो वामनस्त ऐन्द्रावरुणाः शितिंककुच्छितिपृष्ठः शितिंभसत्त ऐन्द्राबार्हस्पत्याः शितिपाच्छित्योष्ठः शितिभ्रुस्त ऐन्द्रावैष्णवास्तिस्रः सिध्मा वशा वैश्वकर्मण्यस्तिस्रो धात्रे पृषोदरा ऐन्द्रापौष्णाः श्येतंललामास्तूपराः ( १ ) ॥

( उन्नतः पञ्चविंशतिः । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां पञ्चमाष्टके षष्ठप्रपाठके चतुर्दशोऽनुवाकः ॥ १४ ॥

---

( अथ पञ्चमाष्टके षष्ठप्रपाठके चतुर्दशोऽनुवाकः । )

---

उन्नत इत्युत्—नतः । ऋषभः । वामनः । ते । ऐन्द्रावरुणा इत्यैन्द्रा—वरुणाः । शितिंककुदिति शिति—ककुत् । शितिपृष्ठ इति शिति—पृष्ठः । शितिंभसदिति शिति—भसत् । ते । ऐन्द्राबार्हस्पत्या इत्यैन्द्रा—बार्हस्पत्याः । शितिपादिति शिति—पात् । शित्योष्ठ इति शिति—ओष्ठः । शितिभ्रुरिति शिति—भ्रुः । ते । ऐन्द्रावैष्णवा इत्यैन्द्रा—वैष्णवाः । तिस्रः । सिध्माः । वशाः । वैश्वकर्मण्य इति वैश्व—कर्मण्यः । तिस्रः । धात्रे । पृषोदरा इति पृष—

उदराः । ऐन्द्रापौष्णा इत्यैन्द्रा—पौष्णाः । श्येतल-
लामा इति श्येत—ललामाः । तूपराः ( १ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे पञ्चमाष्टके
षष्ठप्रपाठके चतुर्दशोऽनुवाकः ॥ १४ ॥

(अथ पञ्चमकाण्डे षष्ठप्रपाठके चतुर्दशोऽनुवाकः । )

अथ चतुर्थं संघमाह—

उन्नत ऋषभो वामनस्त ऐन्द्रावरुणाः शितिककु-
च्छितिपृष्ठः शितिभसत्त ऐन्द्राबार्हस्पत्याः शि-
तिपाच्छित्योष्ठः शितिभ्रुस्त ऐन्द्रावैष्णवास्तिस्रः
सिध्मा वशा वैश्वकर्मण्यस्तिस्रो धात्रे पृषोदरा
ऐन्द्रापौष्णाः श्येतललामास्तूपराः ॥, इति ॥

उन्नत उन्नतपृष्ठः । ऋषभो युवा । वामनो ह्रस्वाङ्गः । शितिः शुक्लः ककुद्यस्य स तथोक्तः । शितिपृष्ठः श्वेतपृष्ठः । शितिभसच्छुक्लजघनः । शितिपात्स्पष्टम् । शित्योष्ठः श्वेतोष्ठः । शितिभ्रुः श्वेतभ्रुः । सिध्माः सिध्मलाङ्गाः पादे सिताः श्वैत्याङ्कितदेहाः । पृषोदराः पृषन्त्युदरे यासां ताः पृषोदराः । श्येतललामाः स्पष्टाः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदी-
यतैत्तिरीयसंहिताभाष्ये पञ्चमकाण्डे षष्ठप्रपाठके
चतुर्दशोऽनुवाकः ॥ १४ ॥

( अथ पञ्चमाष्टके षष्ठप्रपाठके पञ्चदशोऽनुवाकः । )

कर्णास्त्रयो यामाः सौम्यास्त्रयः श्वितिङ्गा
अग्नये यविष्ठाय त्रयो नकुलास्तिस्रो रोहिणी-

स्त्र्यव्यस्ता वसूनां तिस्रोऽरुणा दित्यौह्यस्ता रुद्राणाꣳ सोमैन्द्रा बभ्रुललामास्तूपराः ( १ ) ॥

( कर्णास्त्रयोविꣳशतिः । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां पञ्चमाष्टके षष्ठप्रपाठके पञ्चदशोऽनुवाकः ॥ १५ ॥

( अथ पञ्चमाष्टके षष्ठप्रपाठके पञ्चदशोऽनुवाकः । )

कर्णाः । त्रयः । यामाः । सौम्याः । त्रयः । श्वितिङ्गाः । अग्नये । यविष्ठाय । त्रयः । नकुलाः । तिस्रः । रोहिणीः । त्र्यव्य इति त्रि—अव्यः । ताः । वसूनाम् । तिस्रः । अरुणाः । दित्यौह्यः । ताः । रुद्राणाम् । सोमैन्द्रा इति सोम—ऐन्द्राः । बभ्रुललामा इति बभ्रु—ललामाः । तूपराः ( १ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे पञ्चमाष्टके षष्ठप्रपाठके पञ्चदशोऽनुवाकः ॥ १५ ॥

( अथ पञ्चमकाण्डे षष्ठप्रपाठके पञ्चदशोऽनुवाकः । )

पञ्चमं संघमाह—

कर्णास्त्रयो यामाः सौम्यास्त्रयः श्वितिङ्गा अग्नये यविष्ठाय त्रयो नकुलास्तिस्रो रोहिणीस्त्र्यव्यस्ता वसूनां तिस्रोऽरुणा दित्यौह्यस्ता रुद्राणाꣳ सोमैन्द्रा बभ्रुललामास्तूपराः ॥, इति ॥

( अष्टादशिपशुषष्ठसंघाभिधानम् )

कर्णाश्छिन्नकर्णाः । यामा यमदेवत्याः । श्वितिंगाः श्वेतपादाः । यविष्ठाय युवतमाय । नकुला नकुलवर्णाः । त्र्यव्यः सार्धवर्षाः । रोहिणीर्लोहितवर्णाः । दित्यौह्यो द्विवर्षाः । अरुणा अरुणवर्णाः । बभ्रुललामाः पिङ्गलपुण्ड्राः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये पञ्चमकाण्डे षष्ठप्रपाठके पञ्चदशोऽनुवाकः ॥ १५ ॥

---

( अथ पञ्चमाष्टके षष्ठप्रपाठके षोडशोऽनुवाकः । )

---

शुण्ठास्त्रयो वैष्णवा अधीलोधकर्णास्त्रयो विष्णव उरुक्रमाय लप्सुदिनस्त्रयो विष्णव उरुगायाय पञ्चावीस्तिस्र आदित्यानां त्रिवत्सास्तिस्रोऽङ्गिरसामैन्द्रावैष्णवा गौरललामास्तूपराः ( १ ) ॥

( शुण्ठा विंशतिः । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां पञ्चमाष्टके षष्ठप्रपाठके षोडशोऽनुवाकः ॥ १६ ॥

---

( अथ पञ्चमाष्टके षष्ठप्रपाठके षोडशोऽनुवाकः । )

---

शुण्ठाः । त्रयः । वैष्णवाः । अधीलोधकर्णा इत्यधीलोध—कर्णाः । त्रयः । विष्णवे । उरुक्रमायेत्युरु—क्रमाय । लप्सुदिनः । त्रयः । विष्णवे । उरुगायायेत्युरु—गायाय । पञ्चाविरिति पञ्च—अवीः । तिस्रः । आदित्यानाम् । त्रिवत्सा इति त्रि—वत्साः ।

तिस्रः । अङ्गिरसाम् । ऐन्द्रावैष्णवा इत्यैन्द्रा—वैष्णवाः । गौरलंलामा इति गौर—ललामाः । तूपराः ( १ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे पञ्चमाष्टके षष्ठप्रपाठके षोडशोऽनुवाकः ॥ १६ ॥

( अथ पञ्चमकाण्डे षष्ठप्रपाठके षोडशोऽनुवाकः । )

षष्ठं संघमाह—

शुण्ठास्त्रयो वैष्णवा अधीलोधकर्णास्त्रयो विष्णव उरुक्रमाय लप्सुदिनस्त्रयो विष्णव उरुगायाय पञ्चावीस्तिस्र आदित्यानां त्रिवत्सास्तिस्रोऽङ्गिरसामैन्द्रावैष्णवा गौरललामास्तूपराः ॥, इति ॥

शुण्ठा अवेष्टितकर्णाः । अल्पकाया इत्येके । अधीलोधकर्णाः कर्णोपरिप्ररूढकर्णाः । उरुक्रमाय विस्तीर्णपादाय । लप्सुदिनो लम्बमानपुच्छः । उरुगायायोरुभिर्महर्षिभिर्गातव्याय । पञ्चाव्योऽर्धतृतीयवर्षाः । त्रिवत्सास्त्रिवत्सराः । गौरललामाः स्पष्टाः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये पञ्चमकाण्डे षष्ठप्रपाठके षोडशोऽनुवाकः ॥ १६ ॥

( अथ पञ्चमाष्टके षष्ठप्रपाठके सप्तदशोऽनुवाकः । )

इन्द्राय राज्ञे त्रयः शितिपृष्ठा इन्द्रायाधिराजाय त्रयः शितिककुद इन्द्राय स्वराज्ञे त्रयः शितिभसदस्तिस्रस्तुर्यौह्यः साध्यानां तिस्रः

( अष्टादशिपशुसप्तमसंघाभिधानम् )

पंष्ठौह्यो विश्वेषां देवानांमाग्नेन्द्राः कृष्णलंला-
मास्तूपराः ( १ ) ॥

( इन्द्रांय राज्ञे द्वाविंशतिः । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां पञ्चमाष्टके
षष्ठप्रपाठके सप्तदशोऽनुवाकः ॥ १७ ॥

---

( अथ पञ्चमाष्टके षष्ठपाठके सप्तदशोऽनुवाकः । )

---

इन्द्रांय । राज्ञें । त्रयंः । शितिपृष्ठा इतिं शिति—पृष्ठाः । इन्द्रांय । अधिराजायेत्यंधि—राजायं । त्रयंः । शितिंककुद इति शितिं—ककुदः । इन्द्रांय । स्वराज्ञ इति स्व—राज्ञें । त्रयंः । शितिंभसद इति शितिं—भसदः । तिस्रः । तुर्यौह्यंः । साध्यानांम् । तिस्रः । पष्ठौह्यंः । विश्वेंषाम् । देवानांम् । आग्नेन्द्राः । कृष्णलंलामा इतिं कृष्ण—ललामाः । तूपराः ( १ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे पञ्चमाष्टके
षष्ठप्रपाठके सप्तदशोऽनुवाकः ॥ १७ ॥

---

( अथ पञ्चमकाण्डे षष्ठप्रपाठके सप्तदशोऽनुवाकः । )

---

सप्तमं संघमाह—

इन्द्राय राज्ञे त्रयः शितिपृष्ठा इन्द्रा-
याधिराजाय त्रयः शितिककुद इन्द्राय
स्वराज्ञे त्रयः शितिभसदास्तिस्रस्तुर्यौह्यः

साध्यानां तिस्रः पष्ठौह्यो विश्वेषां देवानामाग्नेन्द्राः कृष्णललामास्तूपराः॥ , इति ॥

शितिपृष्ठशितिककुच्छितिभसच्छब्दा व्याख्याताः। तुर्यौह्यः सार्धचतुर्वर्षाः। साध्यानां देवविशेषाणाम्। पष्ठौह्यश्चतुर्वर्षाः॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये पञ्चमकाण्डे षष्ठप्रपाठके सप्तदशोऽनुवाकः ॥ १७ ॥

---

( अथ पञ्चमाष्टके षष्ठप्रपाठकेऽष्टादशोऽनुवाकः । )

---

अदि॑त्यै त्रयो॑ रोहि॒तै॒ता इ॑न्द्रा॒ण्यै त्रय॑ः कृ॒ष्णै॒ताः कु॒ह्वै त्रयो॑ऽरु॒णै॒तास्ति॒स्रो धे॒नवो॑ रा॒काय॑ै त्रयो॑ऽन॒ड्वाह॑ः सिनीवा॒ल्या आ॑ग्नावै॒ष्णवा रोहि॑तललामास्तू॒पराः ( १ ) ॥

( अदि॑त्या अ॒ष्टाद॑श । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां पञ्चमाष्टके षष्ठप्रपाठकेऽष्टादशोऽनुवाकः ॥ १८ ॥

---

( अथ पञ्चमाष्टके षष्ठप्रपाठकेऽष्टादशोऽनुवाकः । )

---

अदि॑त्यै । त्रय॑ः । रो॒हि॒तै॒ता इति॑ रोहित—ए॒ताः । इ॒न्द्रा॒ण्यै । त्रय॑ः । कृ॒ष्णै॒ता इति॑ कृ॒ष्ण—ए॒ताः । कु॒ह्वै । त्रय॑ः । अ॒रु॒णै॒ता इत्य॑रुण—ए॒ताः । ति॒स्रः । धे॒नव॑ः । रा॒काय॑ै । त्रय॑ः । अ॒न॒ड्वाह॑ः । सि॒नी॒वा॒ल्यै ।

( अष्टादशिपशुनवमसंघाभिधानम् )

आग्नावैष्णवा इत्याग्ना—वैष्णवाः । रोहितललामा इति रोहित—ललामाः । तूपराः ( १ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे पञ्चमाष्टके षष्ठप्रपाठकेऽष्टादशोऽनुवाकः ॥ १८ ॥

---

( अथ पञ्चमकाण्डे षष्ठप्रपाठकेऽष्टादशोऽनुवाकः । )

---

अष्टमं संघमाह—

अदित्यै त्रयो रोहितैता इन्द्राण्यै त्रयः कृ-
ष्णैताः कुह्वै त्रयोऽरुणैतास्तिस्रो धेनवो
राकायै त्रयोऽनड्वाहः सिनीवाल्या आग्ना-
वैष्णवा रोहितललामास्तूपराः ॥ ५ इति ॥

एता हरिता हरितवर्णास्ते च रोहितेनात्यन्तरक्तेन युक्ता रोहितैताः । कृष्णेन युक्ताः कृष्णैताः । ईषद्रक्तेन युक्ता अरुणैताः । धेन्वादयः प्रसिद्धाः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये पञ्चमकाण्डे षष्ठप्रपाठकेऽष्टादशोऽनुवाकः ॥ १८ ॥

---

( अथ पञ्चमाष्टके षष्ठप्रपाठक एकोनविंशोऽनुवाकः । )

---

सौम्यास्त्रयः पिशङ्गाः सोमाय राज्ञे त्रयः सारङ्गाः पार्जन्या नभोरूपास्तिस्रोऽजा मल्हा इन्द्राण्यै तिस्रो मेष्य आदित्या द्यावापृथिव्या मालङ्गास्तूपराः ( १ ) ॥

( सौम्या एकान्नविंशतिः । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां पञ्चमाष्टके षष्ठप्रपाठक एकोनविंशोऽनुवाकः ॥ १९ ॥

( अथ पञ्चमाष्टके षष्ठप्रपाठक एकोनविंशोऽनुवाकः । )

सौम्याः । त्रयः । पिशङ्गाः । सोमाय । राज्ञे । त्रयः । साराङ्गाः । पार्जन्याः । नभोरूपा इति नभः—रूपाः । तिस्रः । अजाः । मल्हाः । इन्द्राण्यै । तिस्रः । मेष्यः । आदित्याः । द्यावापृथिव्या इति द्यावा—पृथिव्याः । मालङ्गाः । तूपराः ( १ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे पञ्चमाष्टके षष्ठप्रपाठक एकोनविंशोऽनुवाकः ॥ १९ ॥

( अथ पञ्चमकाण्डे षष्ठप्रपाठक एकोनविंशोऽनुवाकः । )

नवमं संघमाह—

सौम्यास्त्रयः पिशङ्गाः सोमाय राज्ञे त्रयः
साराङ्गाः पार्जन्या नभोरूपास्तिस्रोऽजा
मल्हा इन्द्राण्यै तिस्रो मेष्य आदित्या
द्यावापृथिव्या मालङ्गास्तूपराः ॥, इति ॥

पिशङ्गा गोरोचनवर्णाः । साराङ्गाः साराङ्गवर्णाः । पार्जन्याः पर्जन्यदेवत्याः । नभोरूपा अञ्जनवर्णाः । मल्हा गलस्तनाः । मालङ्गा महाकायाः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये पञ्चमकाण्डे षष्ठप्रपाठक एकोनविंशोऽनुवाकः ॥ १९ ॥

( अथ पञ्चमाष्टके षष्ठप्रपाठके विंशोऽनुवाकः । )

वारुणास्त्रयः कृष्णललामा वरुणाय राज्ञे

त्रयो रोहिंतललामा वरुंणाय रिशादंसे त्रयोंऽरुणलंलामाः शिल्पास्त्रयों वैश्वदेवास्त्रयः पृश्नंयः सर्वदेवत्यां ऐन्द्रासूराः श्येतंललामास्तूपराः ( १ ) ॥

( वारुणा विंꣳशतिः । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां पञ्चमाष्टके षष्ठप्रपाठके विंशोऽनुवाकः ॥ २० ॥

---

( अथ पञ्चमाष्टके षष्ठप्रपाठके विंशोऽनुवाकः । )

---

वारुणाः । त्रयंः । कृष्णलंलामा इतिं कृष्ण—ललामाः । वरुंणाय । राज्ञें । त्रयंः । रोहिंतललामा इति रोहिंत—ललामाः । वरुंणायं । रिशादंस इतिं रिश—अदंसे । त्रयंः । अरुणलंलामा इत्यंरुण—ललामाः । शिल्पाः । त्रयंः । वैश्वदेवा इतिं वैश्व—देवाः । त्रयंः । पृश्नंयः । सर्वदेवत्यां इतिं सर्व—देवत्यांः । ऐन्द्रासूरा इत्यैन्द्रा—सूराः । श्येतंललामा इति श्येतं—ललामाः । तूपराः । ( १ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे पञ्चमाष्टके षष्ठप्रपाठके विंशोऽनुवाकः ॥ २० ॥

---

( अथ पञ्चमकाण्डे षष्ठप्रपाठके विंशोऽनुवाकः । )

---

दशमं संघमाह—

वारुणास्त्रयः कृष्णललामा वरुणाय राज्ञे त्रयो रोहितललामा वरुणाय रिशादसे त्रयोऽरुणललामाः शिल्पास्त्रयो वैश्वदेवास्त्रयः पृश्नयः सर्वदेवत्या ऐन्द्रासूराः श्येतललामास्तूपराः ॥ , इति ॥

रिशानां लोकहिंसकानां नाशयित्रे ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये पञ्चमकाण्डे षष्ठप्रपाठके विंशोऽनुवाकः ॥ २० ॥

---

( अथ पञ्चमाष्टके षष्ठप्रपाठक एकविंशोऽनुवाकः । )

---

सोमा॑य स्वरा॒ज्ञें॑ऽनोवा॒हाव॑न॒ड्वाहा॑विन्द्रा॒ग्निभ्यां॒मोजो॒दाभ्या॒मुष्टा॑रावि॒न्द्रा॒ग्निभ्यां॒ बल॒दाभ्या॑ᳫं सीरवा॒हाववी॒ द्वे धे॒नू भौ॒मी दि॒ग्भ्यो वड॑बे॒ द्वे धे॒नू भौ॒मी वै॑रा॒जी पु॑रु॒षी द्वे धे॒नू भौ॒मी वा॒यवं आरोहणवा॒हाव॑न॒ड्वाहौ॑ वारु॒णी कृ॒ष्णे व॒शे अ॑रा॒ड्यौ॑ दि॒व्यावृ॑ष॒भौ प॑रि॒मरौ ( १ ) ॥

( सोमा॑य स्वरा॒ज्ञे च॒तु॒स्त्रिᳫंशत् । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां पञ्चमाष्टके षष्ठप्रपाठक एकविंशोऽनुवाकः ॥ २१ ॥

---

( अथ पञ्चमाष्टके षष्ठप्रपाठक एकविंशोऽनुवाकः । )

---

सोमा॑य । स्वरा॒ज्ञ इति॑ स्व—रा॒ज्ञें॑ । अ॒नो॒वा॒हा-

वित्यंनः—वाहौ । अनड्वाहौं । इन्द्राग्निभ्यामितीं-न्द्राग्नि—भ्याम् । ओजोदाभ्यामित्योंजः—दाभ्यांम् । उष्टांरौ । इन्द्राग्निभ्यामितीन्द्राग्नि—भ्याम् । बल-दाभ्यामितिं बल—दाभ्यांम् । सीरवाहावितिं सीर—वाहौं । अवी इतिं । द्वे इतिं । धेनू इतिं । भौमी इतिं । दिग्भ्य इतिं दिक्—भ्यः । वडबे इतिं । द्वे इतिं । धेनू इतिं । भौमी इतिं । वैराजी इतिं । पुरुषी इतिं । द्वे इतिं । धेनू इतिं । भौमी इतिं । वायवें । आरोहणवाहावित्यांरोहण—वाहौं । अनड्वाहौं । वारुणी इतिं । कृष्णे इतिं । वशे इतिं । अराज्ञ्यौं । दिव्यौ । ऋषभौ । परिमरावितिं परि—मरौ ( १ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे पञ्चमाष्टके षष्ठप्रपाठक एकविंशोऽनुवाकः ॥ २१ ॥

---

(अथ पञ्चमकाण्डे षष्ठप्रपाठक एकविंशोऽनुवाकः ।)

---

एवमेतैर्दशभिरनुवाकैरष्टादशिनः पशव आम्नाताः । अथैकेनानुवाकेन द्वंद्विनः पशूनाह—

सोमाय स्वराज्ञेऽनोवाहावनड्वाहाविन्द्राग्नि-भ्यामोजोदाभ्यामुष्टाराविन्द्राग्निभ्यां बलदा-भ्याᳪं सीरवाहाववी द्वे धेनू भौमी दिग्भ्यो

वडबे द्वे धेनू भौमी वैराजी पुरुषी द्वे धेनू भौमी वायव आरोहणवाहावनड्वाहौ वारुणी कृष्णे वशे अराड्यौ दिव्यावृषभौ परिमरौ ॥ , इति ॥

अनोवाहौ शकटवहनसमर्थावनड्वाहौ बलीवर्दौ । ओजोदाभ्यामष्टमधातुप्रदातृभ्यामुष्टारौ शकटवाहिनोः सहकारित्वेन पुरोगामियुगवोढारौ । सीरवाहौ लाङ्गलवाहिनावत्री अविसदृशौ ह्रस्वावनड्वाहावित्यर्थः । भूमेर्धेनुद्वयम् । दिशां वडबाद्वयम् । पुनर्भूमेर्धेनुद्वयम् । विराड्देवतायाः पुरुषी मनुष्यस्त्रियौ । पुनर्भूमेर्धेनुद्वयम् । आरोहणवाहौ मनुष्यारोहणार्थं निर्मितं शकटं वहन्तौ बलीवर्दौ । पूर्वं तु धान्यादिवाहिशकटार्थावुक्तौ । अत्र तु राजकुमारादिविनोदार्थशकटवाहिनावित्यर्थः । वरुणस्य तु कृष्णमृगजातीये स्त्रियौ वन्ध्ये । द्युदेवतायास्त्वराड्यावुच्छ्रितशृङ्गौ । ऋषभौ सेचकौ । परिमरावुभयतो मरणयुक्तौ । यस्य पशोरग्रजोऽपि मृतोऽनुजोऽपि मृतस्तादृशौ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये पञ्चमकाण्डे षष्ठप्रपाठक एकविंशोऽनुवाकः ॥ २१ ॥

---

( अथ पञ्चमाष्टके षष्ठप्रपाठके द्वाविंशोऽनुवाकः । )

---

एकादश प्रातर्गव्याः पशव आ लभ्यन्ते छगलः कल्माषः किकिदीविर्विदीगयस्ते त्वाष्ट्राः सौरीर्नव श्वेता वशा अनूबन्ध्या भवन्त्याग्नेय ऐन्द्राग्न आश्विनस्ते विशालयूप आ लभ्यन्ते ( १ ) ॥

( एकादश पञ्चविंशतिः । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां पञ्चमाष्टके षष्ठप्रपाठके द्वाविंशोऽनुवाकः ॥ २२ ॥

---

( अतिरात्रतृतीयेऽहन्यनुष्ठेयपशुभिधानम् )
( अथ पञ्चमाष्टके षष्ठप्रपाठके द्वाविंशोऽनुवाकः । )

एकादश । प्रातः । गव्याः । पशवः । एति । लभ्यन्ते । छगलः । कल्माषः । किकिदीविः । विदीगयः । ते । त्वाष्ट्राः । सौरीः । नव । श्वेताः । वशाः । अनूबन्ध्या इत्यनु—बन्ध्याः । भवन्ति । आग्नेयः । ऐन्द्राग्न इत्यैन्द्र—अग्नः । आश्विनः । ते । विशालयूप इति विशाल—यूपे । एति । लभ्यन्ते ( १ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे पञ्चमाष्टके षष्ठप्रपाठके द्वाविंशोऽनुवाकः ॥ २२ ॥

( अथ पञ्चमकाण्डे षष्ठप्रपाठके द्वाविंशोऽनुवाकः । )

अथोत्तमेऽह्नि अतिरात्रेऽनुष्ठेयान्कांश्चित्पशूनाह—

एकादश प्रातर्गव्याः पशव आ लभ्यन्ते छगलः कल्माषः किकिदीविर्विदीगयस्ते त्वाष्ट्राः सौरीर्नव श्वेता वशा अनूबन्ध्या भवन्त्याग्नेय ऐन्द्राग्न आश्विनस्ते विशालयूप आ लभ्यन्ते ॥ , इति ॥

तृतीयेऽह्नि प्रातःकाले गोजातीया एकादश पशवः । ते च देवताविशेषस्यानुक्तत्वात्प्राजापत्याः । छगलादयस्त्रयस्त्वाष्ट्राः । छगलश्छागार्भकः । स च कल्माषः कृष्णवर्णमिश्रः । किकिदीविस्तित्तिरिः । विदीगयः कुक्कुटविशेषः । एते च तस्मिन्नेवाहन्यालब्धव्याः । सौरीः सूर्यदेवताकाः । अनूबन्ध्याश्चरमकालीनाः पशवः । ताश्च वशा वन्ध्याः श्वेताः श्वेतवर्णा नवसंख्याकाश्च भवन्ति । पुनरप्याग्नेयादयस्त्रयः पशव आलभ्यन्ते । ते च त्रयो मध्यमे यूपेऽतिविस्तृताग्निष्ठाख्ये यूप आलभ्यन्ते ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये पञ्चमकाण्डे षष्ठप्रपाठके द्वाविंशोऽनुवाकः ॥ २२ ॥

( अथ पञ्चमाष्टके षष्ठप्रपाठके त्रयोविंशोऽनुवाकः । )

पिशङ्गास्त्रयो वासन्ताः सारङ्गास्त्रयो ग्रैष्माः पृषन्तस्त्रयो वार्षिकाः पृश्नयस्त्रयः शारदाः पृश्निसक्थास्त्रयो हैमन्तिका अवलिप्तास्त्रयः शैशिराः संवत्सराय निवक्षसः ( १ ) ॥

( पिशङ्गा विंशतिः । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां पञ्चमाष्टके षष्ठप्रपाठके त्रयोविंशोऽनुवाकः ॥ २३ ॥

हिरण्यवर्णा अपां ग्रहान्भूतेष्टकाः सजूः संवत्सरमुख्यं प्रजापतिः स क्षुरपविरग्नेर्वै दीक्षया सुवर्गाय तं यत्र सूयते प्रजापतिर्ऋतुभी रोहितः पृश्निः शितिबाहुरुन्नतः कर्णाः शुण्ठा इन्द्रायादित्यै सौम्या वारुणाः सोमायैकादश पिशङ्गास्त्रयोविंशतिः ॥ २३ ॥

हिरण्यवर्णा भूतेष्टकाश्छन्दो यत्कनीयाꣳसं त्रिवृद्ध्वंग्निर्यद्वै वारुणाश्चतुःपञ्चाशत् ॥ ५४ ॥

हरिः ॐ ।

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां पञ्चमाष्टके षष्ठः प्रपाठकः ॥ ६ ॥

( अथ पञ्चमाष्टके षष्ठपाठके त्रयोविंशोऽनुवाकः । )

पिशङ्गाः । त्रयः । वासन्ताः । सारङ्गाः । त्रयः । ग्रैष्माः । पृषन्तः । त्रयः । वार्षिकाः । पृश्नयः । त्रयः । शारदाः । पृश्निसक्था इति पृश्नि—सक्थाः । त्रयः ।

हैमंन्तिकाः । अवलिप्ता इत्यंव—लिप्ताः । त्रयः । शैशिराः । संवत्सरायेति सं—वत्सरायं । निवंक्षस इति नि—वक्षसः ( १ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे पञ्चमाष्टके षष्ठप्रपाठके त्रयोविंशोऽनुवाकः ॥ २३ ॥

हरिः ॐ ।

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे पञ्चमाष्टके षष्ठः प्रपाठकः ॥ ६ ॥

( अथ पञ्चमकाण्डे षष्ठप्रपाठके त्रयोविंशोऽनुवाकः । )

अथर्तुपशूनाह—

पिशङ्गास्त्रयो वासन्ताः सारङ्गास्त्रयो ग्रैष्माः पृषन्तस्त्रयो वार्षिकाः पृश्नयस्त्रयः शारदाः पृश्निसक्थास्त्रयो हैमन्तिका अवलिप्तास्त्रयः शैशिराः संवत्सराय निवक्षसः ॥ १ इति ॥

पिशङ्गा गोरोचनवर्णाः । सारङ्गाः सारङ्गवर्णाः । पृषन्तो विजातीयबिन्दुयुक्ताः । पृश्नयः श्वेताः । पृश्निसक्थाः कटिभागे श्वेतवर्णाः । अवलिप्ताः संकीर्णवर्णाः । वसन्ताघृ(द्या ऋ)तवस्तेषाम् । संवत्सरदेवतायास्तु निवक्षसो निम्नेन वक्षसा युक्तः ॥

अत्रास्य प्रपाठकस्य विनियोगसंग्रहः—

कुम्भेष्टकामन्त्रणार्था हिरण्येति त्रयोदश ।
दिवीति चरुमादध्यादेवस्येत्यभिषेचनम् ॥ १ ॥
सजूराहुतयः पञ्च घृतेनेत्यनुषज्यते ।
पृष्ठो वैश्वानरी योऽत्र पुरीषं स्थापयेत्तया ॥ २ ॥

---

१ क. युक्ताः । २ ख. ङ. च. याज्ञे । घ. याजे । ३ क. घ. ङ. °त्तथा । अ° ।

अन्वारोहेच्चितिं स्वामी पृथिवीमाक्रमीत्यतः ।
इष्टो यज्ञस्तस्य ते द्वे समिष्टयजुषी मते ॥ ३ ॥
पिता मातेतिमन्त्रेण चित्यग्निमनुशंसति ।
अश्वमेधस्य पशवो रोहिताद्या उदीरिताः ॥ ४ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये पञ्चमकाण्डे षष्ठप्रपाठके त्रयोविंशोऽनुवाकः ॥ २३ ॥

---

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥ १ ॥

इति श्रीमद्विद्यातीर्थमहेश्वरापरावतारस्य श्रीमद्राजाधिराजपरमेश्वरस्य श्रीवीरबुक्कमहाराजस्याऽऽज्ञापरिपालकेन माधवाचार्येण विरचिते वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये पञ्चमकाण्डे षष्ठः प्रपाठकः ॥ ६ ॥

---

( अथ पञ्चमाष्टके सप्तमः प्रपाठकः । )

---

( तत्र प्रथमोऽनुवाकः । )

---

हरिः ॐ ।

यो वा अयथादेवतमग्निं चिनुत आ देवताभ्यो वृश्च्यते पापीयान्भवति यो यथादेवतं न देवताभ्य आ वृश्च्यते वसीयान्भवत्याग्नेय्या गायत्रिया प्रथमां चितिमभि मृशेत्त्रिष्टुभा द्वितीयां जगत्या तृतीयामनुष्टुभा चतुर्थीं पङ्क्त्या पञ्चमीं यथादेवतमेवाग्निं चिनुते न देवताभ्य आ वृश्च्यते वसीयान्भवतीडायै वा एषा विभक्तिः पशव इडा पशुभिरेनम् ( १ )

चिनुते यो वै प्रजापतये प्रतिप्रोच्याग्निं चि-
नोति नाऽऽर्तिमार्छत्यश्वावभितस्तिष्ठेतां कृष्ण
उत्तरतः श्वेतो दक्षिणस्तावालभ्येष्टका उप-
दध्यादेतद्वै प्रजापते रूपं प्राजापत्योऽश्वः सा-
क्षादेव प्रजापतये प्रतिप्रोच्याग्निं चिनोति
नाऽऽर्तिमार्छत्येतद्वा अह्नो रूपं यच्छ्वेतोऽश्वो
रात्रियै कृष्ण एतदह्नः ( २ ) रूपं यदिष्टका
रात्रियै पुरीषमिष्टका उपधास्यञ्छ्वेतमश्वमभिमृ-
शेत्पुरीषमुपधास्यन्कृष्णमहोरात्राभ्यामेवैनं चि-
नुते हिरण्यपात्रं मधोः पूर्णं ददाति मधव्योऽ-
सानीति सौर्या चित्रवत्याऽवेक्षते चित्रमेव
भवति मध्यंदिनेऽश्वमव घ्रापयत्यसौ वा आ-
दित्य इन्द्र एष प्रजापतिः प्राजापत्योऽश्वस्त-
मेव साक्षादृध्नोति ( ३ ) ॥

( एनमेतदह्नोऽष्टाचत्वारिंशच्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां पञ्चमाष्टके
सप्तमप्रपाठके प्रथमोऽनुवाकः ॥ १ ॥

( अथ पञ्चमाष्टके सप्तमः प्रपाठकः । )

( तत्र प्रथमोऽनुवाकः । )

हरिः ॐ ।

यः । वै । अयथादेवतमित्ययथा—देवतम् ।

अग्निम् । चिनुते । एति । देवताभ्यः । वृश्च्यते । पापीयान् । भवति । यः । यथादेवतमिति यथा—देवतम् । न । देवताभ्यः । एति । वृश्च्यते । वसीयान् । भवति । आग्नेय्या । गायत्रिया । प्रथमाम् । चितिम् । अभीति । मृशेत् । त्रिष्टुभा । द्वितीयाम् । जगत्या । तृतीयाम् । अनुष्टुभेत्यनु—स्तुभा । चतुर्थीम् । पङ्क्त्या । पञ्चमीम् । यथादेवतमिति यथा—देवतम् । एव । अग्निम् । चिनुते । न । देवताभ्यः । एति । वृश्च्यते । वसीयान् । भवति । इडायै । वै । एषा । विभक्तिरिति वि—भक्तिः । पशवः । इडा । पशुभिरिति पशु—भिः । एनम् ( १ ) । चिनुते । यः । वै । प्रजापतय इति प्रजा—पतये । प्रतिप्रोच्येति प्रति—प्रोच्य । अग्निम् । चिनोति । न । आर्तिम् । एति । ऋच्छति । अश्वौ । अभितः । तिष्ठेताम् । कृष्णः । उत्तरत इत्युत्—तरतः । श्वेतः । दक्षिणः । तौ । आलभ्येत्या—लभ्य । इष्टकाः । उपेति । दध्यात् । एतत् । वै । प्रजापतेरिति प्रजा—पतेः । रूपम् । प्राजापत्य इति प्राजा—पत्यः । अश्वः । साक्षादिति स—अक्षात् । एव । प्रजापतय इति प्रजा—पतये । प्रतिप्रोच्येति प्रति—प्रोच्य । अग्नि-

म् । चिनोति । न । आर्तिम् । एति । ऋच्छति । एतत् । वै । अह्नः । रूपम् । यत् । श्वेतः । अश्वः । रात्रियै । कृष्णः । एतत् । अह्नः ( २ )। रूपम् । यत् । इष्टकाः । रात्रियै । पुरीषम् । इष्टकाः । उप-धास्यन्नित्युप—धास्यन् । श्वेतम् । अश्वम् । अभीति । मृशेत् । पुरीषम् । उपधास्यन्नित्युप—धास्यन् । कृष्णम् । अहोरात्राभ्यामित्यहः—रात्राभ्याम् । एव । एनम् । चिनुते । हिरण्यपात्रमिति हिरण्य—पात्रम् । मधोः । पूर्णम् । ददाति । मधव्यः । असानि । इति । सौर्या । चित्रवत्येति चित्र—वत्या । अवेति । ईक्षते । चित्रम् । एव । भवति । मध्यंदिने । अश्वम् । अवेति । घ्रापयति । असौ । वै । आदित्यः । इन्द्रः । एषः । प्रजापतिरिति प्रजा—पतिः । प्राजापत्य इति प्राजा—पत्यः । अश्वः । तम् । एव । साक्षादिति स—अक्षात् । ऋध्नोति ( ३ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे पञ्चमाष्टके सप्तमप्रपाठके प्रथमोऽनुवाकः ॥ १ ॥

---

( अथ पञ्चमकाण्डे सप्तमः प्रपाठकः । )

---

( तत्र प्रथमोऽनुवाकः । )

---

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥

उपानुवाक्यं यत्प्रोक्तं द्वयोः पञ्चमषष्ठयोः ।
ततोऽवशिष्टं तत्सर्वं सप्तमेऽत्राभिधीयते ॥ २ ॥

तत्राऽऽदौ तावन्मन्त्रविशेषैश्चितीनामभिमर्शनं विधत्ते—

यो वा अयथादेवतमग्निं चिनुत आ देवताभ्यो वृश्च्यते पापीयान्भवति यो यथादेवतं न देवताभ्य आ वृश्च्यते वसीयान्भवत्याग्नेय्या गायत्रिया प्रथमां चितिमभि मृशेत्त्रिष्टुभा द्वितीयां जगत्या तृतीयामनुष्टुभा चतुर्थीं पङ्क्त्या पञ्चमीं यथादेवतमेवाग्निं चिनुते न देवताभ्य आ वृश्च्यते वसीयान्भवति, इति ।

यस्याश्चितेर्या देवता तामतिक्रम्य चयनमयथादेवतमनतिक्रमणं यथादेवतम् । अतो यथादेवतमनुष्ठानायाऽऽग्नेयगायत्र्यादिभिस्तां तां चितिमभिमृशेत् । अग्ने देवा९ इहाऽऽ वहेत्याग्नेयी गायत्री । अगन्म महा मनसा यविष्ठमिति त्रिष्टुप् । मेधाकारमिति जगती । मनुष्वत्त्वा निधीमहीत्यनुष्टुप् । अग्निंहि वाजिनमिति पङ्क्तिः । ता एता नाचिकेतचयनप्रकरणे यत्ते चितमित्यनुवाके समाम्नास्यमानत्वात्तत्रैव व्याख्यास्यन्ते । एवमभिमर्शने सति नोक्तदोषः कश्चिदप्यस्ति ॥

एकैकचितिस्पर्शने योऽयं मन्त्रविभागस्तमिमं प्रशंसति—

इडायै वा एषा विभक्तिः पशव इडा पशुभिरेनं चिनुते, इति ।

विभक्तिर्गायत्र्यादिमन्त्रविभागः । स चात्रेडार्थं क्रियते । इडा हि नाम पशवः, पशवो वा इडेति श्रुत्यन्तरात् । गायत्र्यादिच्छन्दांसि च पशुस्वरूपाणि । पशवो वै छन्दा९सीति श्रुत्यन्तरात् । अतो गायत्र्यादिरूपैः पशुभिरेनमग्निं चितवान्भवति । एतच्च ब्राह्मणं पशुर्वा एष यदग्निरित्यनुवाके प्रथमचित्यवसाने द्रष्टव्यम् ॥

अथोपधानेऽश्वस्पर्शनं विधत्ते—

यो वै प्रजापतये प्रतिप्रोच्याग्निं चिनोति नाऽऽर्तिमार्छत्यश्वावभितस्तिष्ठेतां कृष्ण

उत्तरतः श्वेतो दक्षिणस्तावालभ्येष्टका उप दध्यादेतद्वै प्रजापते रूपं प्राजापत्योऽश्वः साक्षादेव प्रजापतये प्रतिप्रोच्याग्निं चिनोति नाऽऽर्तिमार्छति, इति ।

प्रजापतिरग्निं प्रति स्रष्टत्वात्प्रथमं चेतृत्वाच्चाग्नेः स्वामी । अतस्तस्मै कथयित्वा तदनुज्ञया चयने कृते सति न विनाशं प्राप्नोति । अतः कथनीयम् । पार्श्वयोर्द्वावश्वाववस्थाप्य तौ स्पृष्ट्वा पश्चादुपदध्यात् । एतदश्वाख्यं शरीरं प्रजापतेः स्वरूपं, प्रजापत्यक्षिजन्यत्वेन तस्य प्राजापत्यत्वात् । अतोऽश्वस्पर्शनमेव प्रजापतये कथनं तेनासौ न विनश्यति ॥

तत्र स्पर्शने विषयव्यवस्थां विधत्ते—

एतद्वा अह्नो रूपं यच्छ्वेतोऽश्वो रात्रियै कृष्ण एतदह्नो रूपं यदिष्टका रात्रियै पुरीषमिष्टका उपधास्यञ्छ्वेतमश्वमभि मृशेत्पुरीषमुपधास्यन्कृष्णमहोरात्राभ्यामेवैनं चिनुते, इति ।

श्वेतोऽश्व इष्टकाश्चेत्युभयमह्नो रूपम् । अत इष्टका उपधास्यञ्श्वेतमभिमृशेत् । कृष्णोऽश्वः पुरीषं चेत्युभयं रात्रेः स्वरूपम् । तत्स्वरूपे वर्णसाम्यं हेतुः । यदा पुरीषमुपधास्यति तदा कृष्णमभिमृशेत् । एवं सत्यहोरात्राभ्यामेवैनमग्निं चितवान्भवति । एतच्च ब्राह्मणमग्ने तव श्रवो वय इत्यनुवाके द्रष्टव्यम् ॥

यदुक्तं सूत्रकारेण—“ दक्षिणाकाले हिरण्यपात्रं मधोः पूर्णं शतमानस्य कृतं चित्रं देवानामित्यवेक्ष्याश्वेनावघ्राप्य ब्रह्मणे ददाति ” इति, तत्र दानं विधत्ते—

हिरण्यपात्रं मधोः पूर्णं ददाति मधव्योऽसानीति, इति ।

परलोके मधुभोग्यद्रव्ययुक्तो भविष्यामीत्यभिप्रेत्य मधुना पूर्णं सुवर्णपात्रं दद्यात् ॥

दात्रा च दानात्पूर्वकालीनमवेक्षणं विधत्ते—

सौर्या चित्रवत्याऽवेक्षते चित्रमेव भवति मध्यंदिने, इति ।

मध्याह्नस्य दक्षिणाकालत्वात्तदानीं दातुमादौ मधुपूर्णं पात्रं मन्त्रेणावेक्षेत। चित्रं देवानामित्येषा सौरी चित्रशब्दयुक्ता च। तयाऽवेक्षणे सति चित्रमेवैश्वर्यं प्राप्नोति ॥

अवेक्षणादूर्ध्वं घ्रापणं विधत्ते—

अश्वमव घ्रापयत्यसौ वा आदित्य इन्द्र एष प्रजापतिः प्राजापत्योऽश्वस्तमेव साक्षादृध्नोति ॥, इति ॥

योऽयं चित्रवत्या प्रतिपाद्य आदित्यः स एव परमैश्वर्योपेतत्वादिन्द्रः, प्रजानां परिपालकत्वात्प्रजापतिः। अवघ्राताऽश्वः प्राजापत्यः। अतोऽश्वावघ्रापणेन तं प्रजापतिमिन्द्रमादित्यमेव साक्षात्समृद्धं करोति। तदिदं ब्राह्मणमन्ते द्रष्टव्यम् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये पञ्चमकाण्डे सप्तमप्रपाठके प्रथमोऽनुवाकः ॥ १ ॥

---

( अथ पञ्चमाष्टके सप्तमप्रपाठके द्वितीयोऽनुवाकः । )

---

त्वाम॑ग्ने वृष॒भं चेकि॑ता॒नं पुन॒र्युवा॑नं ज॒नय॑न्नुपा॒गा॑म् । अ॒स्थू॒रि॒णो॒ गार्ह॑पत्यानि सन्तु ति॒ग्मेन॑ नो॒ ब्रह्म॑णा॒ सꣳ शि॑शाधि । प॒शवो॒ वा ए॒ते यदि॑ष्ट॒का॒श्चित्यां॑ चि॒त्यामृ॑ष॒भमुप॑ दधाति मि॒थु॒नमे॒वास्य॒ त॒द्य॒ज्ञे क॑रोति प्र॒जन॑नाय॒ तस्मा॑द्यू॒थेयू॑थ ऋष॒भः । सं॒व॒त्स॒रस्य॑ प्रति॒मां यां त्वा॑ रात्र्यु॒पास॑ते । प्र॒जाꣳ सु॒वीरां॑ कृ॒त्वा विश्व॒मायु॒र्व्य॑श्नवत् । प्रा॒जा॒प॒त्याम् ( १ ) ए॒तामुप॑

दधातीयं वावैषैकांष्टका यदेवैकांष्टकायामन्नं क्रियते तदेवैतयाऽवं रुन्ध एषा वै प्रजापंतेः कामदुत्रा तयैव यजंमानोऽमुष्मिँल्लोकेऽग्निं दुंहे येनं देवा ज्योतिंषोर्ध्वा उदायन्येनांऽऽदित्या वसंवो येनं रुद्राः । येनाङ्गिरसो महिमानंमानशुस्तेनैंतु यजंमानः स्वस्ति । सुवर्गाय वा एष लोकायं ( २ ) चीयते यदग्निर्येनं देवा ज्योतिंषोर्ध्वा उदायन्नित्युख्यं समिन्ध इष्टंका एवैता उपं धत्ते वानस्पत्याः सुवर्गस्यं लोकस्य समंष्ट्यै शतायुंधाय शतवींर्याय शतोतंयेऽभिमातिषाहें । शतं यो नंः शरदो अजींतानिन्द्रों नेषदतिं दुरितानि विश्वां । ये चत्वारंः पथयों देवयानां अन्तरा द्यावांपृथिवी वियन्तिं । तेषां यो अज्यांनिमजींतिमावहात्तस्मैं नो देवाः ( ३ ) परिं दत्तेह सर्वें । ग्रीष्मो हेमन्त उत नों वसन्तः शरद्वर्षाः सुंवितं नों अस्तु । तेषांमृतूनाꣳ शतशांरदानां निवात एंषामभंये स्याम । इदुवत्सरायं परिवत्सरायं संवत्सरायं कृणुता बृहन्नमंः । तेषां वयꣳ सुंमतौ यज्ञियांनां ज्योगजींता अहंताः स्याम । भद्रान्नः श्रेयः समं-

नैष्ट देवास्त्वयाऽवसेन समंशीमहि त्वा। स नो मयोभूः पितो ( ४ ) आ विंशस्व शं तोकाय तनुवे स्योनः। अग्नीरिता उप दधात्येता वै देवता अपराजितास्ता एव प्र विंशति नैव जीयते ब्रह्मवादिनो वदन्ति यदर्धमासा मासां ऋतवः संवत्सर ओषधीः पचन्त्यथ कस्माद्न्याभ्यो देवताभ्य आग्रयणं निरुप्यत इत्येता हि तद्देवता उदजयन्यदृतुभ्यो निर्वपेद्देवताभ्यः समदं दध्यादाग्रयणं निरुप्यैता आहुतीर्जुहोत्यर्धमासानेव मासानृतून्त्संवत्सरं प्रीणाति न देवताभ्यः समदं दधाति भद्रान्नः श्रेयः समनैष्ट देवा इत्याह हुताद्याय यजमानस्यापराभावाय ( ५ ) ॥

( प्राजापत्यां लोकायं देवाः पितो दध्यादाग्रयणं पञ्चविंशतिश्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां पञ्चमाष्टके सप्तमप्रपाठके द्वितीयोऽनुवाकः ॥ २ ॥

---

( अथ पञ्चमाष्टके सप्तमप्रपाठके द्वितीयोऽनुवाकः । )

---

त्वाम्। अग्ने। वृषभम्। चेकितानम्। पुनः। युवानम्। जनयन्। उपागामित्युप—आगाम्।

( ऋषभेष्टकाद्यभिधानम् )

अस्थूरि। नः। गार्हपत्यानीति गार्ह—पत्यानि। सन्तु। तिग्मेन। नः। ब्रह्मणा। समिति। शिशाधि। पशवः। वै। एते। यत्। इष्टकाः। चित्यांचित्यामिति चित्याम्—चित्याम्। ऋषभम्। उपेति। दधाति। मिथुनम्। एव। अस्य। तत्। यज्ञे। करोति। प्रजननायेति प्र—जननाय। तस्मात्। यूथेयूथ इति यूथे—यूथे। ऋषभः। संवत्सरस्येति सं—वत्सरस्य। प्रतिमामिति प्रति—माम्। याम्। त्वा। रात्रि। उपासत इत्युप—आसते। प्रजामिति प्र—जाम्। सुवीरामिति सु—वीराम्। कृत्वा। विश्वम्। आयुः। वीति। अश्नवत्। प्राजापत्यामिति प्राजा—पत्याम् (१)। एताम्। उपेति। दधाति। इयम्। वाव। एषा। एकाष्टकेत्येक—अष्टका। यत्। एव। एकाष्टकायामित्येक—अष्टकायाम्। अन्नम्। क्रियते। तत्। एव। एतया। अवेति। रुन्धे। एषा। वै। प्रजापतेरिति प्रजा—पतेः। कामदुघेति काम—दुघा। तया। एव। यजमानः। अमुष्मिन्। लोके। अग्निम्। दुहे। येन। देवाः। ज्योतिषा। ऊर्ध्वाः। उदायन्नित्युत्—आयन्। येन। आदित्याः। वसवः। येन। रुद्राः। येन। अङ्गि-

रसः । महिमानम् । आनशुः । तेन । एतु । यज- मानः । स्वस्ति । सुवर्गायेति सुवः—गाय । वै । एषः । लोकाय ( २ ) । चीयते । यत्र । अग्निः । येन । देवाः । ज्योतिषा । ऊर्ध्वाः । उदायन्नित्युत्—आयन् । इति । उख्यम् । समिति । इन्धे । इष्ट- काः । एव । एताः । उपेति । धत्ते । वानस्पत्याः । सुवर्गस्येति सुवः—गस्य । लोकस्य । समष्ट्या इति सम्—अष्ट्यै । शतायुधायेति शत—आयुधाय । शत- वीर्यायेति शत—वीर्याय । शतोतय इति शत—ऊ- तये । अभिमातिषाह इत्यभिमाति—साहे । शतम् । यः । नः । शरदः । अजीतान् । इन्द्रः । नेषत् । अतीति । दुरितानीति दुः—इतानि । विश्वा । ये । चत्वारः । पथयः । देवयाना इति देव—यानाः । अन्तरा । द्यावापृथिवी इति द्यावा—पृथिवी । विय- न्तीति वि—यन्ति । तेषाम् । यः । अ- ज्यानिम् । अजीतिम् । आवहादित्या—वहात् । तस्मै । नः । देवाः ( ३ ) । परीति । दत्त । इह । सर्वे । ग्रीष्मः । हेमन्तः । उत । नः । वसन्तः । श- रत् । वर्षाः । सुवितम् । नः । अस्तु । तेषाम् । ऋ- तूनाम् । शतशारदानामिति शत—शारदानाम् । नि-

वात इति नि—वाते । एषाम् । अभये । स्याम । इदुवत्सरायेतीदु—वत्सराय । परिवत्सरायेति परि—वत्सराय । संवत्सरायेति सं—वत्सराय । कृणुत । बृहत् । नमः । तेषाम् । वयम् । सुमताविति सु—मतौ । यज्ञियानाम् । ज्योक् । अजीताः । अहताः । स्याम । भद्रात् । नः । श्रेयः । समिति । अनैष्ट । देवाः । त्वया । अवसेन । समिति । अशीमहि । त्वा । सः । नः । मयोभूरिति मयः—भूः । पितो इति ( ४ ) । एति । विशस्व । शम् । तोकाय । तनुवे । स्योनः । अज्यानीः । एताः । उपेति । दधाति । एताः । वै । देवताः । अपराजिता इत्यपरा—जिताः । ताः । एव । प्रेति । विशति । न । एव । जीयते । ब्रह्मवादिन इति ब्रह्म—वादिनः । वदन्ति । यत् । अर्धमासा इत्यर्ध—मासाः । मासाः । ऋतवः । संवत्सर इति सं—वत्सरः । ओषधीः । पचन्ति । अथ । कस्मात् । अन्याभ्यः । देवताभ्यः । आग्रयणम् । निरिति । उप्यते । इति । एताः । हि । तत् । देवताः । उदजयन्निरयुत्—अजयन् । यत् । ऋतुभ्य इत्यृतु—भ्यः । निर्वपेदिति निः—वपेत् । देवताभ्यः ।

समदमिति स—मदम् । दध्यात् । आग्रयणम् । निरुप्येति निः—उप्य । एताः । आहुतीरित्या—हुतीः । जुहोति । अर्धमासानित्यर्ध—मासान् । एव । मासान् । ऋतून् । संवत्सरमिति सं—वत्सरम् । प्रीणाति । न । देवताभ्यः । समदमिति स—मदम् । दधाति । भद्रात् । नः । श्रेयः । समिति । अनैष्ट । देवाः । इति । आह । हुताद्यायेति हुत—अद्याय । यजमानस्य । अपराभावायेत्यपरा—भावाय (५) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे पञ्चमाष्टके सप्तमप्रपाठके द्वितीयोऽनुवाकः ॥ २ ॥

---

( अथ पञ्चमकाण्डे सप्तमप्रपाठके द्वितीयोऽनुवाकः । )

---

चितिस्पर्शादिकं त्वाद्येऽनुवाकेऽत्र समीरितम् ॥

अथ द्वितीय ऋषभेष्टकादिकमभिधीयते । यदुक्तं सूत्रकारेण—" त्वामग्ने वृषभमित्यृषभमुपधाय " इति, तदिदं विधातुं मन्त्रमुत्पादयति—

त्वामग्ने वृषभं चेकितानं पुनर्युवानं जनयन्नुपागाम् । अस्थूरि णो गार्हपत्यानि सन्तु तिग्मेन नो ब्रह्मणा सꣳ शिशाधि । , इति ।

हेऽग्ने वृषभं कामानां वर्षितारं चेकितानं सर्वज्ञं युवानं नित्यतरुणं त्वां जनयन्प्रजोत्पादकं कुर्वन्नहं पुनरुपागां भूयो भूयः प्राप्नोमि । नोऽस्माकं गार्हपत्यानि गृहपतिकर्माण्यस्थूरि सन्तु । स्थूरिशब्दः सारवाची । अस्थूरीणि साररहितानि सन्तु । तिग्मेनोज्ज्वलेन ब्रह्मणा ब्रह्मवर्चसेन नोऽस्मान्संशिशाधि सम्यगनुशिष्टान्कुरु ॥

( ऋषभेष्टकायाभिधानम् )

एतन्मन्त्रसाध्यमुपधानं विधत्ते—

पशवो वा एते यदिष्टकाश्चित्यांचित्यामृषभमुप दधाति मिथुनमेवास्य तद्यज्ञे करोति प्रजननाय तस्माद्यूथेयथ ऋषभः, इति।

या एता अन्या इष्टकास्ताः सर्वा गोरूपाः। अतो यज्ञे तासां मिथुनभावायैतामृषभाख्यामिष्टकामुपदध्यात्। यस्मात्त्रै[कै] कस्यां चित्यामृषभमु(उ)पधीयते तस्माल्लोकेऽप्येकैकस्मिन्गोयूथ एकैक ऋषभस्तिष्ठति। सर्वचितिष्वपेक्षितत्वादिदं ब्राह्मणं प्रथमचित्यन्ते द्रष्टव्यम् ॥

यदुक्तं सूत्रकारेण—"संवत्सरस्य प्रतिमामिति प्राजापत्याम्" इति, तदिदं विधातुं मन्त्रमुत्पादयति—

संवत्सरस्य प्रतिमां यां त्वा राज्युपासते।
प्रजाꣳ सुवीरां कृत्वा विश्वमायुर्व्यश्नवत्।, इति।

हे रात्रि एकाष्टकारूपे यां त्वा प्रतिमां प्रतिनिधिरूपां सर्वे यजमाना उपासते सेवन्ते, "एषा वै संवत्सरस्य पत्नी यदेकाष्टकैतस्यां वा एष एताꣳ रात्रिं वसति" इति ह्यन्यत्राऽऽम्नातम्। तां त्वां कृत्वेहोपधाय सुवीरां शोभनभृत्योपेतां प्रजां पुत्रादिरूपां विश्वमायुः कृत्स्नमप्यायुष्यं व्यश्नवद्विशेषेण व्याप्नोति ॥

एतन्मन्त्रसाध्यमुपधानं विधत्ते—

प्राजापत्यामेतामुप दधातीयं वावैषैकाष्टका यदेवैकाष्टकायामन्नं क्रियते तदेवैतयाऽव रुन्ध एषा वै प्रजापतेः कामदुघा तयैव यजमानोऽमुष्मिँल्लोकेऽग्निं दुहे, इति।

एकाष्टकायाः संवत्सररूपप्रजापतिपत्नीत्वात्तद्रूपेयमिष्टका प्राजापत्या, तामेतामुपदध्यात्। एषा चैकाष्टकेयमेव भूमिस्वरूपा। तथा सति भूमिरूपायामेतस्यामेकाष्टकायां यदन्नं संपाद्यते तत्सर्वं प्राप्नोति। किंचेयमेकाष्टका संवत्सररूपस्य प्रजापतेः कामधेनुः। अतस्तयैव यजमानोऽमुष्मिँल्लोके [अग्निं] कामान्दुहे दुग्धे। एतच्च नक्षत्रेष्टकाब्राह्मणादूर्ध्वं द्रष्टव्यम् ॥

यदुक्तं सूत्रकारेण—" येन देवा ज्योतिषोर्ध्वा उदायन्निति प्रादेशमात्रैः काष्ठैरुख्यमुपसमिन्धे " इति, तदिदं विधातुं मन्त्रमुत्पादयति—

येन देवा ज्योतिषोर्ध्वा उदायन्येनाऽऽदि-
त्या वसवो येन रुद्राः । येनाङ्गिरसो महि-
मानमानशुस्तेनैतु यजमानः स्वस्ति । , इति ।

देवाः सर्वे येन ज्योतिषाऽग्निनोर्ध्वा उपरितनलोकवर्तिन उदायन्नुत्कर्षं प्राप्ताः । तथाऽऽदित्या वसवश्च येनोदायन्रुद्राश्च येनाग्निनोदायन् , अङ्गिरसो महर्षयो येनाग्निना महिमानमानशुः स्वकीयं सामर्थ्यं प्राप्तास्तेनाग्निना यजमानोऽयं स्वस्ति क्षेममेतु प्राप्नोतु ॥

तमिमं मन्त्रं विनियुङ्क्ते—

सुवर्गाय वा एष लोकाय चीयते यदग्निर्येन
देवा ज्योतिषोर्ध्वा उदायन्नित्युख्यꣳ समिन्ध
इष्टका एवैता उप धत्ते वानस्पत्याः
सुवर्गस्य लोकस्य समष्ट्यै , इति ।

अस्याग्नेः स्वर्गार्थं चीयमानत्वात्स्वर्गस्थसर्वदेवप्रतिपादकेन मन्त्रेणेन्धने सति याभिः समिद्भिरिध्यते ताः सर्वा वानस्पत्या इष्टका एवोपहिता भवन्ति । तच्च स्वर्गप्राप्त्यै संपद्यते । एतच्च " विष्णुमुखा वै देवाः " इत्यनुवाके द्रष्टव्यम् ॥

यदुक्तं सूत्रकारेण—" शतायुधाय शतवीर्यायेति पञ्चाज्यानीः प्रतिदिशमेकां मध्ये " इति, तत्र प्रथमामाह—

शतायुधाय शतवीर्याय शतोतयेऽभिमा-
तिषाहे । शतं यो नः शरदो अजीता-
निन्द्रो नेषदति दुरितानि विश्वा । , इति ।

य इन्द्रो नोऽस्माञ्शतं शरदः शतसंख्याकान्संवत्सरानजीतान्नेषत्केनापि व्याधितस्करादिना यथा जिताः पीडिता न भवामस्तथा नेतुं समर्थः । किं कृत्वा, विश्वा दुरितान्यति सर्वाणि पापान्यतिक्रम्य यानि पापान्यस्माभिः कृतानि तानि सर्वाणि विनाश्य । सर्वस्मिन्नप्यायुष्यस्मान्केनाप्यनुपद्रुतान्करोतीत्यर्थः । तस्मा इन्द्राय नमोऽस्त्वित्यध्याहारः । कीदृशाय, शतसंख्याका-

न्यायुधानि वज्रधनुरादीनि यस्यासौ शतायुधस्तस्मै। शतसंख्याकानि वीर्याणि युद्धेषु विजयरूपाणि यस्यासौ शतवीर्यस्तस्मै । शतसंख्याका ऊतयोऽस्मद्रक्षणानि यस्यासौ शतोतिस्तस्मै । अभिमातिषाहे[ अभिमातिं ] पाप्मानं सहतेऽभिभवतीत्यभिमातिषाट्तस्मै ॥

अथ द्वितीयामाह—

ये चत्वारः पथयो देवयाना अन्तरा द्यावापृथिवी
वियन्ति । तेषां यो अज्यानिमजीतिमावहा-
त्तस्मै नो देवाः परि दत्तेह सर्वे । , इति ।

द्यावापृथिवी अन्तरा द्यावापृथिव्योर्मध्ये ये चत्वारः पथयो मार्गा वियन्ति विविधं गच्छन्ति प्रवर्तन्ते । कीदृशा मार्गाः, देवयाना देवानां यानं गमनं येषु ते देवयानाः । देवा हि देवलोकपितृलोकब्रह्मलोकमनुष्यलोकविषयेषु मार्गेषु विस्रम्भेण संचरन्ति । तेषां मार्गाणां य इन्द्रोऽज्यानिमजीतिमावहात् , रक्षःप्रभृतिभिरनुपद्रवोऽजीतिः । सा चाजीतिरज्यानिः कदाचिदपि हानिरहिता, तादृशीमजीतिमावहति तेषु मार्गेषु गच्छतामस्माकं नित्यमनुपद्रवं संपादयतीत्यर्थः । तस्मा इन्द्राय हे सर्वे देवा इह कर्माणि नोऽस्मान्परिदत्तायं यजमानः सर्वेषु मार्गेषु रक्षणीय इत्येवमस्मानिन्द्राय समर्पयत ॥

अथ तृतीयामाह—

ग्रीष्मो हेमन्त उत नो वसन्तः शरद्वर्षाः
सुवितं नो अस्तु । तेषामृतूनाꣳ शतशार-
दानां निवात एषामभये स्याम । , इति ।

यो ग्रीष्माख्य ऋतुः स नोऽस्मान्प्रति सुवितमस्तु शोभनगतिं प्राप्नोतु स्वकालोचितभोग्यद्रव्यप्रदोऽस्त्वित्यर्थः । एवं हेमन्तादिषु योज्यम् । शतशारदानामस्मदायुषि शतसंवत्सरसंबन्धिनां तेषामेषां ग्रीष्मादीनामृतूनामनुग्रहाद्वयं निवाते वाताद्युपद्रवरहितेऽभये भयरहिते स्थाने स्याम सुखेनावस्थिता भवेम ॥

अथ चतुर्थीमाह—

इदुवत्सराय परिवत्सराय संवत्सराय कृणु-
ता बृहन्नमः । तेषां वयꣳ सुमतौ यज्ञि-
यानां ज्योगजीता अहताः स्याम । , इति ।

प्रभवादिसंवत्सराणां पञ्चके चतुर्थ इदुवत्सरः। द्वितीयः परिवत्सरः। प्रथमः संवत्सरः। एतच्च कृत्स्नकालस्याप्युपलक्षणम्। हे ऋत्विग्यजमाना इदुवत्सरादिरूपाय कालाय बृहन्नमः कृणुतात्यन्तभक्तिपुरःसरं नमस्कारं कुरुत। यज्ञियानां यज्ञनिष्पादकानां तेषां संवत्सरविशेषाणां सुमतावनुग्रहबुद्धौ सत्यां वयं सर्वे ज्योक्चिरमजीताः केनाप्यवशीकृता अहता अमारिताश्च स्याम भवेम ॥

अथ पञ्चमीमाह—

भद्रान्नः श्रेयः समनैष्ट देवास्त्वयाऽवसेन समशीमहि त्वा। स नो मयोभूः पितो आ विशस्व शं तोकाय तनुवे स्योनः।, इति।

हे देवा भद्रात्कल्याणादस्मात्कर्मसाधनभूताच्छ्रेयोऽधिकं प्रशस्तं फलं नोऽस्मान्समनैष्ट सम्यक्प्रापयत। तथा चित्याग्नौ हूयमान हे साम त्वयाऽवसेन त्वदीयेन रक्षणेन वयं त्वां समशीमहि सम्यग्व्याप्नुयाम। हे पितो अन्नभूत सोम स त्वं मयोभूः सुखस्य भावयिता सन्नोऽस्मानाविशस्व प्रविश, तोकायास्मदपत्याय शं सुखं कुरु, तनुवे शरीराय स्योनः सुखप्रदो भव ॥

एतैर्मन्त्रैः साध्यमुपधानं विधत्ते—

अज्यानीरेता उप दधात्येता वै देवता अपराजितास्ता एव प्र विशति नैव जीयते, इति।

अज्यानिशब्दोपेतैर्मन्त्रैरुपधेया इष्टका अज्यानयस्ता [एता] उपदध्यात्। एतैर्मन्त्रैः प्रतिपाद्या या इन्द्रादिदेवता एताः सर्वा देवताः क्वाप्यपराजिताः। अयं यजमानस्ता एव देवताः प्रविशति, केनाप्यन्येन शत्रुणा नैव जीयते। एतदपि नक्षत्रेष्टकाब्राह्मणसमीपे द्रष्टव्यम् ॥

अथाऽऽग्रयणप्रस्तावे यदुक्तं सूत्रकारेण—“ निरुप्तं हविरुपसन्नमप्रोक्षितं भवत्यथ पञ्चाज्यानीर्जुहोति शतायुधाय शतवीर्यायेति ” इति, तदिदं विधत्ते—

ब्रह्मवादिनो वदन्ति यदर्धमासा मासा ऋतवः संवत्सर ओषधीः पचन्त्यथ कस्मादन्याभ्यो देवताभ्य आग्रयणं निरुप्यत इत्येता हि तद्देवता उदजयन्यदृतुभ्यो निर्वपेद्दे-

वताभ्यः समदं दध्यादाग्रयणं निरुप्यैता आहुतीर्जुहोत्यर्धमासानेव मासानृतून्त्संवत्सरं प्रीणाति न देवताभ्यः समदं दधाति , इति।

ब्रह्मवादिनः परस्परमेवं विचारयन्ति—अर्धमासमासर्तुसंवत्सररूपा देवता ओषधीनां परिपाकं संपादयन्ति। एवं सति ता देवता उपेक्ष्यान्याभ्य इन्द्राग्न्यादिभ्यो देवताभ्य आग्रयणाख्यं नूतनधान्यरूपं हविः कस्मात्कारणान्निरुप्यत इति। तत्राभिज्ञा एवमुत्तरमाहुः—यस्मादेता इन्द्राग्न्यादयो देवता इतरैर्दैवतैः सह समयं कृत्वा तत्र तत्रौषधिविषय उत्कर्षेण जयं प्राप्ताः, तस्मादिन्द्राग्न्यादिभ्यो निर्वापो युक्तः। एतच्च राजसूयप्रकरण आग्रयणविधौ स्पष्टमाम्नातम्—"देवा वा ओषधीष्वाजिमयुः। ता इन्द्राग्नी उदजयताम्"। इति। एवं सति जेतृनिन्द्राग्न्यादीनुपेक्ष्य यद्यृतुमासादिदेवताभ्यो निर्वपेत्तदानीमेतासां तासां च देवतानां कलहं संपादयेत्। एवं तर्ह्योषधिपरिपाकहेतूनामृतुमासादिदेवतानां परितोषः कथमिति चेच्छ्रूयताम्। इन्द्राग्न्यादिभ्य आग्रयणं निरुप्य शतायुधायेत्येता अज्यान्याहुतीर्मासादिदेवताभ्यो जुहुयात्। तेनार्धमासादिदेवताः प्रीणयति। ततो देवतानां कलहं न करोति॥

यदपि सूत्रकारेणाऽऽग्रयणप्रस्तावे विहितं "भद्रान्नः श्रेयः समनैष्ट देवा इति यजमानभागं प्राश्नाति" इति, तं विधिं मन्त्रव्याख्यानरूपार्थवादेनोन्नयति—

भद्रान्नः श्रेयः समनैष्ट देवा इत्याह हुताद्याय यजमानस्यापराभावाय॥, इति॥

यजमानो भक्षणकाले भद्रादित्यादिमन्त्रं पठेत्। अयं च मन्त्रो हुतशेषस्यादनाय समर्थः। अशीमहीतिमन्त्रलिङ्गात्। हुतभक्षणेन यजमानः पराभूतो न भवति। एतच्च ब्राह्मणमाग्रयणविधिसमीपे नेतव्यम्॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये पञ्चमकाण्डे सप्तमप्रपाठके द्वितीयोऽनुवाकः॥ २॥

---

( अथ पञ्चमाष्टके सप्तमप्रपाठके तृतीयोऽनुवाकः । )

---

इन्द्रस्य वज्रोऽसि वार्त्रघ्नस्तनूपा नः प्रतिस्पशः । यो नः पुरस्ताद्दक्षिणतः पश्चादुत्तरतोऽघायुरभिदासत्येतꣳ सोऽश्मानमृच्छतु । देवासुराः संयत्ता आसन्तेऽसुरा दिग्भ्य आऽबाधन्त तान्देवा इष्वा च वज्रेण चापानुदन्त यद्वज्रिणीरुपदधातीष्वा चैव तद्वज्रेण च यजमानो भ्रातृव्यानप नुदते दिक्षूप (१) दधाति देवपुरा एवैतास्तनूपानीः पर्यूहतेऽग्नाविष्णू सजोषसे मा वर्धन्तु वां गिरः । द्युम्नैर्वाजेभिरा गतम् । ब्रह्मवादिनो वदन्ति यन्न देवतायै जुह्वत्यथ किंदेवत्या वसोर्धारेत्यग्निर्वसुस्तस्यैषा धारा विष्णुर्वसुस्तस्यैषा धाराऽऽग्नावैष्णव्यर्चा वसोर्धारां जुहोति भागधेयेनैवैनौ समर्धयत्यथो एताम् ( २ ) एवाऽऽहुतिमायतनवतीं करोति यत्काम एनां जुहोति तदेवाव रुन्धे रुद्रो वा एष यदग्निस्तस्यैते तनुवौ घोराऽन्या शिवाऽन्या यच्छतरुद्रीयं जुहोति यैवास्य घोरा तनूस्तां तेन शमयति यद्वसोर्धारां जुहोति यैवास्य शिवा तनूस्तां तेन

प्रीणाति यो वै वसोर्धारायै ( ३ ) प्रतिष्ठां वेद प्रत्येव तिष्ठति यदाज्यमुच्छिष्येत तस्मिन्ब्रह्मौदनं पचेत्तं ब्राह्मणाश्चत्वारः प्राश्नीयुरेष वा अग्निर्वैश्वानरो यद्ब्राह्मण एषा खलु वा अग्नेः प्रिया तनूर्यद्वैश्वानरः प्रियायामेवैनां तनुवां प्रति ष्ठापयति चतस्रो धेनूर्दद्यात्ताभिरेव यजमानोऽमुष्मिँल्लोकेऽग्निं दुहे ( ४ ) ॥

( उपेतां धारायै षट्चत्वारिंशच्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां पञ्चमाष्टके सप्तमप्रपाठके तृतीयोऽनुवाकः ॥ ३ ॥

---

( अथ पञ्चमाष्टके सप्तमप्रपाठके तृतीयोऽनुवाकः । )

---

इन्द्रस्य । वज्रः । असि । वार्त्रघ्न इति वार्त्र—घ्नः । तनूपा इति तनू—पाः । नः । प्रतिस्पश इति प्रति—स्पशः । यः । नः । पुरस्तात् । दक्षिणतः । पश्चात् । उत्तरत इत्युत्—तरतः । अघायुरित्यघ—युः । अभिदासतीत्यभि—दासति । एतम् । सः । अश्मानम् । ऋच्छतु । देवासुरा इति देव—असुराः । संयत्ता इति सं—यत्ताः । आसन् । ते । असुराः । दिग्भ्य इति दिक्—भ्यः । एति । अबाधन्त । तान् । देवाः । इष्वा । च । वज्रेण । च । अपेति ।

अनुदन्त । यत् । वज्रिणीः । उपदधातीत्युप—द-धाति । इष्वा । च । एव । तत् । वज्रेण । च । यज-मानः । भ्रातृव्यान् । अपेति । नुदते । दिक्षु । उपेति ( १ ) । दधाति । देवपुरा इति देव—पुराः । एव । एताः । तनूपानीरिति तनू—पानीः । परीति । ऊहते । अग्नाविष्णू इत्यग्ना—विष्णू । सजोषसेति स—जोषसा । इमाः । वर्धन्तु । वाम् । गिरः । द्युम्नैः । वाजेभिः । एति । गतम् । ब्रह्मवादिन इति ब्रह्म—वादिनः । वदन्ति । यत् । न । देवतायै । जुह्वति । अथ । किंदेवत्येति किं—देवत्या । वसोः । धारा । इति । अग्निः । वसुः । तस्य । एषा । धारा । विष्णुः । वसुः । तस्य । एषा । धारा । आग्नावैष्णव्येत्याग्ना—वैष्णव्या । ऋचा । वसोः । धाराम् । जुहोति । भाग-धेयेनेति भाग—धेयेन । एव । एनौ । समिति । अर्धयति । अथो इति । एताम् ( २ ) । एव । आहु-तिमित्या—हुतिम् । आयतनवतीमित्यायतन—व-तीम् । करोति । यत्काम इति यत्—कामः । एनाम् । जुहोति । तत् । एव । अवेति । रुन्धे । रुद्रः । वै । एषः । यत् । अग्निः । तस्य । एते इति । तनुवौ । घोरा । अन्या । शिवा । अन्या । यत् । शतरुद्री-

यमिति शत—रुद्रीयम् । जुहोति । या । एव । अस्य । घोरा । तनूः । ताम् । तेन । शमयति । यत् । वसोः । धाराम् । जुहोति । या । एव । अस्य । शिवा । तनूः । ताम् । तेन । प्रीणाति । यः । वै । वसोः । धारायै ( ३ ) । प्रतिष्ठामिति प्रति—स्थाम् । वेद । प्रतीति । एव । तिष्ठति । यत् । आज्यम् । उच्छिष्येतेत्युत्—शिष्येत । तस्मिन् । ब्रह्मौदनमिति ब्रह्म—ओदनम् । पचेत् । तम् । ब्राह्मणाः । चत्वारः । प्रेति । अश्नीयुः । एषः । वै । अग्निः । वैश्वानरः । यत् । ब्राह्मणः । एषा । खलु । वै । अग्नेः । प्रिया । तनूः । यत् । वैश्वानरः । प्रियायाम् । एव । एनाम् । तनुवाम् । प्रतीति । स्थापयति । चतस्रः । धेनूः । दद्यात् । ताभिः । एव । यजमानः । अमुष्मिन् । लोके । अग्निम् । दुहे ( ४ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे पञ्चमाष्टके सप्तमप्रपाठके तृतीयोऽनुवाकः ॥ ३ ॥

---

( अथ सप्तमकाण्डे सप्तमप्रपाठके तृतीयोऽनुवाकः । )

---

द्वितीय ऋषभादीनामुपधानादिकं श्रुतम् ॥

अथ तृतीये वज्रिणीष्टकोपधानं विधातुं मन्त्रानुत्पादयति—

इन्द्रस्य वज्रोऽसि वार्त्रघ्नस्तनूपा नः प्रतिस्पशः।
यो नः पुरस्ताद्दक्षिणतः पश्चादुत्तरतोऽघायु-
रभिदासत्येतꣳ सोऽश्मानमृच्छतु ।, इति।

इष्टकास्थानीय हेऽश्मंस्त्वमिन्द्रस्य वज्रोऽसि वज्रसमानोऽसि । कीदृशस्त्वं, वार्त्रघ्नो वैरिघाती, नोऽस्माकं तनूपाः शरीरस्य पालकः, प्रतिस्पशो रोगाद्यनिष्टस्य विनाशयिता । किंच, यः शत्रुरघं पापमस्मदुपद्रवमिच्छतीत्यघायुस्तथाविधः सन्पुरस्तात्पूर्वस्यां दिशि नोऽस्मानभिदासति हिनस्ति स शत्रुरेतमश्मानमुपधीयमानं पाषाणमृच्छतु प्राप्नोतु, पाषाणं प्राप्य स्वयमेव व्याधितो भवत्वित्यर्थः। दक्षिणत इत्यादिभिस्त्रिभिः पदैस्त्रयो मन्त्रा भिद्यन्ते। तेषु त्रिष्वप्यवशिष्टमनुषञ्जनीयम् ॥

तैरेतैश्चतुर्भिर्मन्त्रैः साध्यमुपधानं विधत्ते—

देवासुराः संयत्ता आसन्तेऽसुरा दिग्भ्य आऽ-
बाधन्त तान्देवा इष्वा च वज्रेण चापा-
नुदन्त यद्वज्रिणीरुपदधातीष्वा चैव तद्वज्रेण
च यजमानो भ्रातृव्यानप नुदते , इति।

यदा देवासुरा युद्धोद्यतास्तदानीमसुराश्चतसृभ्यो दिग्भ्य आगत्य सर्वतो बाधितवन्तः। तानसुरान्देवा इष्वा वज्रसदृशेन पाषाणेन चापानुदन्त। ततो यजमानो भ्रातृव्यापनोदनाय वज्रिणीरुपदध्यात् ॥

तस्य चोपधानस्य चितेर्बहिर्देशं विधत्ते—

दिक्षूप दधाति देवपुरा एवैता-
स्तनुपानीः पर्यूहते , इति ।

या एता वज्रिण्यस्ता देवपुरा एव देवानामिन्द्रादीनां पुरस्थानीया एव । तनूपानीरस्मच्छरीरस्य पालयित्रीः। एतादृशीः परितः स्थापयति । एतदपि नक्षत्रेष्टकाब्राह्मणादूर्ध्वं द्रष्टव्यम् ॥

यत्पूर्वं विहितं वसोर्धारां जुहोतीति, तदेतदनूद्य विशेषं वक्तुमाम्नातमपि मन्त्रं पुनः पठति—

अग्नाविष्णू सजोषसेमा वर्धन्तु वां
गिरः। द्युम्नैर्वाजेभिरा गतम् ।, इति।

( वज्रिणीष्टकोपधानविधिः )

हेऽग्नाविष्णू इमा गिरोऽस्माभिः प्रयुक्ताः स्तुतिरूपा वाचः सजोषसा वां परस्परं समानप्रीतियुक्तौ युवां वर्धन्तु परितोषयन्तु । युवां च द्युम्नैर्धनैर्वाजेभिरन्नैश्च सहितावागतमिहाऽऽगच्छतम् ॥

तमिमं मन्त्रं विनियुङ्क्ते—

ब्रह्मवादिनो वदन्ति यन्न देवतायै जुह्वत्यथ किंदेवत्या वसोर्धारेत्यग्निर्वसुस्तस्यैषा धारा विष्णुर्वसुस्तस्यैषा धाराऽऽग्नावैष्णव्यर्चा वसोर्धारां जुहोति भागधेयेनैवैनौ समर्धयत्यथो एतामेवाऽऽहुतिमायतनवतीं करोति यत्काम एनां जुहोति तदेवाव रुन्धे, इति ।

अत्र ब्रह्मवादिन एवं विचारयन्ति—वसोर्धाराया मन्त्रे वाजश्च मे प्रसवश्च म इत्येवं फलप्रार्थनैव प्रतीयते, न तु काचिद्देवता प्रतिपाद्यते । विधिवाक्येऽप्याज्यधारारूपं द्रव्यमेव प्रतीयते, न तु काचिद्देवता । एवं सति होतारो देवतायै यस्मान्न जुह्वति तस्मात्किंदेवत्येयं वसोर्धारेत्येवं प्रश्नः । तत्राभिज्ञा उत्तरमेवमाहुः–विधिवाक्यगतेन वसुधा(सोर्धा)राशब्देनैव द्रव्यदेवतासंबन्धः प्रतीयते । वासयतीति व्युत्पत्त्या वसुरग्निस्तस्येयमाज्यधारा वसोर्धारा । एवं विष्णावपि योज्यम् । यद्यप्येतौ देवौ वाजश्च म इत्यादिना न प्रतीयेते तथाऽप्यनयर्चा प्रतीयेते । तस्मादेतया वसोर्धारां जुहुयात् । तथा सत्युचितेन भागेनैतौ तोषयति । अपि चैतामाहुतिं देवतारूपाधारवतीं करोति । किं च, यत्फलं कामयित्वा जुहोति तत्प्राप्नोति ॥

प्रकारान्तरेणैतां प्रशंसति—

रुद्रो वा एष यदग्निस्तस्यैते तनुवौ घोराऽन्या शिवाऽन्या यच्छतरुद्रीयं जुहोति यैवास्य घोरा तनूस्तां तेन शमयति यद्वसोर्धारां जुहोति यैवास्य शिवा तनूस्तां तेन प्रीणाति, इति ।

शतरुद्रीयहोमेनोग्रतनोः शान्तावपि शिवा(व)तनोः प्रीत्यर्थोऽयं वसोर्धाराहोम इत्यस्य प्रशंसा ।

यं विशेषं विधातुमयं प्रसङ्गः कृतस्तं विशेषं विधत्ते—

योवै वसोर्धारायै प्रतिष्ठां वेद प्रत्येव तिष्ठति यदाज्यमुच्छिष्येत तस्मिन्ब्रह्मौदनं पचेत्तं ब्राह्मणाश्चत्वारः प्राश्नीयुरेष वा अग्निर्वैश्वानरो यद्ब्राह्मण एषा खलु वा अग्नेः प्रिया तनूर्यद्वैश्वानरः प्रियायामेवैनां तनुवां प्रति ष्ठापयति, इति।

यो यजमानो वसोर्धारायाः प्रतिष्ठाप्रकारं वेद स प्रतितिष्ठत्येव । काऽसौ तस्याः प्रतिष्ठेत्युच्यते—होमावशिष्ट आज्ये ब्रह्मौदनं पक्त्वा ब्राह्मणानां प्राशनं यत्सैव प्रतिष्ठा। ब्राह्मणस्य सर्वपुरुषप्रियत्वेन वैश्वानररूपत्वाद्वैश्वानरस्य चाग्निप्रियशरीरत्वात्तस्मिन्नेव प्रियशरीरे तमग्निं प्रतिष्ठापयति ॥

यदुक्तं सूत्रकारेण—"यदाज्यमुच्छिष्येत तस्मिन्ब्रह्मौदनं पक्त्वा चतुरो ब्राह्मणान्भोजयेच्चतुःशरावं वौदनं पक्त्वा तम्ब्रञ्जनं भोजयेत्प्राशितवद्भ्यश्चतस्रो धेनूर्दद्यात्" इति, तच्च दानं विधत्ते—

चतस्रो धेनूर्दद्यात्ताभिरेव यजमानोऽमुष्मिँल्लोकेऽग्निं दुहे ॥, इति ॥

अत्र मीमांसा।

तृतीयाध्यायस्य षष्ठपादे द्वादशाधिकरणे चिन्तितम्—

अखण्डादीष्टकाधर्माश्चित्रिण्यादिषु नोचिताः ।
सन्ति वा वाक्यमप्यत्रानारभ्योक्तं ततो न ते ॥
प्रकृतापूर्वसंबन्धात्तादृशादपि वाक्यतः ।
अखण्डत्वादयोऽग्न्यर्थाश्चित्रिण्यादिषु सन्ति ते ॥

अनारभ्य श्रूयते—"चित्रिणीरुपदधाति" इति, "वज्रिणीरुपदधाति" इति च। अग्निप्रकरणे चेष्टकानां धर्माः श्रुताः-"अखण्डामकृष्णां कुर्यात्" इति। पूर्वत्रांश्वदाभ्ययोरुत्पत्तिवाक्यस्यानारभ्याधीतत्वेऽपि विनियोजकवाक्यं प्रकरणाधीतम् । चित्रिण्यादिनामकानामिष्टकाविशेषाणां विनियोजकं वाक्यमप्यनारभ्याधीतम्। तच्च चित्यन्तरे ताश्चित्रिणीर्विनियुङ्क्ते । अखण्डत्वादिधर्मास्तु षण्णां चितीनां मध्ये प्रथमचितावाम्नाताः । तस्मात्ते चित्रिण्यादिषु नोचिता इति प्राप्ते ब्रूमः—यद्यप्युत्पत्तिविनियोजकवाक्ययोरन्यतरस्यापि प्रकरणपाठो नास्ति तथाऽपि "य एवं विद्वानाग्निं चिनुते" इति प्रकृतं यदेतद-

१ ख. घ. ङ. च. °रावमोद° ।

ग्न्यपूर्वं तत्संबन्धित्वेनैव चित्रिण्यादयोऽप्यप्रकरणपठितेनापि वाक्येन विनियुज्यन्ते । अखण्डत्वादयश्चाग्निसाधनभूतेष्टकाधर्मा न तु प्रथमचितिधर्माः । तस्मादग्निसाधनभूतासु चित्रिण्यादीष्टकास्वपि ते सन्ति ॥

पञ्चमाध्यायस्य तृतीयपादे सप्तमाधिकरणे चिन्तितम्—

चित्रिण्यादेरुत्तमायामुपधानं पुराऽथवा ।
अव्यवायादुत्तमायां मध्यमायां तु वाक्यतः ॥

उत्तमायां पञ्चम्यां चितौ चित्रिण्यादेरनारभ्याधीताया इष्टकाया उपधानं युक्तम् । तथा सति प्रकरणाधीतानां क्लृप्तक्रमाणामिष्टकानां परस्परव्यवधानं न प्रसज्येतेति चेन्मैवम् । “ यां कांचिद्ब्राह्मणवतीमिष्टकामभिजानीयात्तां मध्यमायां चितौ ” इति वाक्येनानारभ्याधीतेन ब्राह्मणेन विहितानामिष्टकानां मध्यमचितौ निवेशः ॥

तत्रैवान्यच्चिन्तितम्—

लोकंपृणात ऊर्ध्वं स्याच्चित्रिण्युत ततः पुरा ।
बादरायणदृष्ट्योर्ध्वं पूरणोक्तेस्ततः पुरा ॥

“ चित्रिणीरुपदधाति ” “ वज्रिणीरुपदधाति ” “भूतेष्टका उपदधाति ” इति विहितं चित्रिण्यादिकं मध्यमायां चितौ लोकंपृणाभिधाया इष्टकाया ऊर्ध्वमुपधेयम् । कुतः । बादरायणेन तथा दृष्टत्वात् । “ अन्ते तु बादरायणः ” [ मी० ५-२-१९ ] इति सूत्रेण बादरायणस्य मतमुपन्यस्तम् । स ह्यागन्तूनामन्ते निवेशमाह । लोकंपृणा च प्रकरणपठितानामन्तिमेष्टका । ततस्तस्या ऊर्ध्वं चित्रिण्यादिकमिति प्राप्ते ब्रूमः—लोकं पृण छिद्रं पृणेत्यनेन मन्त्रेणोपधीयमानेष्टका लोकंपृणा । तस्याः कर्मण्यूनत्वादिदोषपरिहारेण संपूर्तिहेतुत्वं मन्त्रलिङ्गादवगम्यते । ब्राह्मणेऽप्येवमाम्नातम्—“ यदेवास्योनं यच्छिद्रं तदेतया परिपूरयति लोकं पृण छिद्रं पृण ” इति । यद्येतस्या इष्टकाया ऊर्ध्वं चित्रिण्यादय उपधीयेरंस्तदानीं चित्रिण्यादिगते उनत्वच्छिद्रत्वे न पूर्येयाताम् । तस्माल्लोकंपृणातः पूर्वं चित्रिण्याद्युपधानम् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये पञ्चमकाण्डे सप्तमप्रपाठके
तृतीयोऽनुवाकः ॥ ३ ॥

———

१ क. °र्मन्यून° ।

( अथ पञ्चमाष्टके सप्तमप्रपाठके चतुर्थोऽनुवाकः । )

---

चित्तिं जुहोमि मनसा घृतेनेत्याहादाभ्या वै नामैषाऽऽहुतिर्वैश्वकर्मणी नैनं चिक्याना भ्रातृव्यो दभ्नोत्यथो देवता एवाव रुन्धेऽग्ने तमद्येति पङ्क्त्या जुहोति पङ्क्त्याऽऽहुत्या यज्ञमुखमा रभते सप्त ते अग्ने समिधः सप्त जिह्वा इत्याह होत्रा एवाव रुन्धेऽग्निर्देवेभ्योऽपाक्रामद्भागधेयम् ( १ ) इच्छमानस्तस्मा एतद्भागधेयं प्रायच्छन्नेतद्वा अग्नेरग्निहोत्रमेतर्हि खलु वा एष जातो यर्हि सर्वश्चितो जातायैवास्मा अन्नमपि दधाति स एनं प्रीतः प्रीणाति वसीयान्भवति ब्रह्मवादिनो वदन्ति यदेष गार्हपत्यश्चीयतेऽथ क्वास्याऽऽहवनीय इत्यसावादित्य इति ब्रूयादेतस्मिन्हि सर्वाभ्यो देवताभ्यो जुह्वति ( २ ) य एवं विद्वानग्निं चिनुते साक्षादेव देवता ऋध्नोत्यग्ने यशस्विन्यशसेममर्पयेन्द्रावतीमपचितीमिहाऽऽवह । अयं मूर्धा परमेष्ठी सुवर्चाः समानानामुत्तमश्लोको अस्तु । भद्रं पश्यन्त उप सेदुरग्ने तपो दीक्षामृषयः सुवर्विदः । ततः क्षत्रं बलमोजश्च जातं तद-

स्मै देवा अभि सं नमन्तु । धाता विधाता परमा ( ३ ) उत संदृक्प्रजापतिः परमेष्ठी विराजा । स्तोमाश्छन्दाꣳसि निविदो म आहुरेतस्मै राष्ट्रमभि सं नमाम । अभ्यावर्तध्वमुप मेत साकमयꣳ शास्ताऽधिपतिर्वो अस्तु । अस्य विज्ञानमनु सꣳ रभध्वमिमं पश्चादनु जीवाथ सर्वे । राष्ट्रभृत एता उप दधात्येषा वा अग्नेश्चिती राष्ट्रभृत्तयैवास्मिन्राष्ट्रं दधाति राष्ट्रमेव भवति नास्माद्राष्ट्रं भ्रꣳशते ( ४ ) ।

( भागधेयं जुहोति परमा राष्ट्रं दधाति सप्त च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां पञ्चमाष्टके सप्तमप्रपाठके चतुर्थोऽनुवाकः ॥ ४ ॥

---

( अथ पञ्चमाष्टके सप्तमप्रपाठके चतुर्थोऽनुवाकः । )

---

चित्तिम् । जुहोमि । मनसा । घृतेन । इति । आह । अदाभ्या । वै । नाम । एषा । आहुतिरित्या—हुतिः । वैश्वकर्मणीति वैश्व—कर्मणी । न । एनम् । चिकयानम् । भ्रातृव्यः । दभ्नोति । अथो इति । देवताः । एव । अवेति । रुन्धे । अग्ने । तम् । अद्य । इति । पङ्क्त्या । जुहोति । पङ्क्त्या । आ-

हुत्येत्या—हुत्या । यज्ञमुखमिति यज्ञ—मुखम् । एति । रभते । सप्त । ते । अग्ने । समिध इति सम्—इधः । सप्त । जिह्वाः । इति । आह । होत्राः । एव । अवेति । रुन्धे । अग्निः । देवेभ्यः । अपेति । अक्रामत् । भागधेयमिति भाग—धेयम् ( १ ) । इच्छमानः । तस्मै । एतत् । भागधेयमिति भाग—धेयम् । प्रेति । अयच्छन् । एतत् । वै । अग्नेः । अग्निहोत्रमित्यग्नि—होत्रम् । एतर्हि । खलु । वै । एषः । जातः । यर्हि । सर्वः । चितः । जाताय । एव । अस्मै । अन्नम् । अपीति । दधाति । सः । एनम् । प्रीतः । प्रीणाति । वसीयान् । भवति । ब्रह्मवादिन इति ब्रह्म—वादिनः । वदन्ति । यत् । एषः । गार्हपत्य इति गार्ह—पत्यः । चीयते । अथ । क्व । अस्य । आहवनीय इत्या—हवनीयः । इति । असौ । आदित्यः । इति । ब्रूयात् । एतस्मिन् । हि । सर्वाभ्यः । देवताभ्यः । जुह्वति ( २ ) । यः । एवम् । विद्वान् । अग्निम् । चिनुते । साक्षादिति स—अक्षात् । एव । देवताः । ऋध्नोति । अग्ने । यशस्विन् । यशसा । इमम् । अर्पय । इन्द्रावतीमितीन्द्र—वतीम् । अपचितीमित्यप—चितीम् ।

इह। एति। वह। अयम्। मूर्धा। परमेष्ठी। सुवर्चा इति सु—वर्चाः। समानानाम्। उत्तमश्लोक इत्युत्तम—श्लोकः। अस्तु। भद्रम्। पश्यन्तः। उपेति। सेदुः। अग्रे। तपः। दीक्षाम्। ऋषयः। सुवर्विद इति सुवः—विदः। ततः। क्षत्रम्। बलम्। ओजः। च। जातम्। तत्। अस्मै। देवाः। अभि। समिति। नमन्तु। धाता। विधातेति वि—धाता। परमा (३)। उत। संदृगिति सं—दृक्। प्रजापतिरिति प्रजा—पतिः। परमेष्ठी। विराजेति वि—राजा। स्तोमाः। छन्दांसि। निविद इति नि—विदः। मे। आहुः। एतस्मै। राष्ट्रम्। अभि। समिति। नमाम। अभ्यावर्तध्वमित्यभि—आवर्तध्वम्। उपेति। मा। एति। इत। साकम्। अयम्। शास्ता। अधिपतिरित्यधि—पतिः। वः। अस्तु। अस्य। विज्ञानमिति वि—ज्ञानम्। अनु। समिति। रभध्वम्। इमम्। पश्चात्। अन्विति। जीवाथ। सर्वे। राष्ट्रभृत इति राष्ट्र—भृतः। एताः। उपेति। दधाति। एषा। वै। अग्नेः। चितिः। राष्ट्रभृदिति राष्ट्र—भृत्। तया। एव। अस्मिन्।

राष्ट्रम् । दधाति । राष्ट्रम् । एव । भवति । न । अस्मात् । राष्ट्रम् । भ्रंशते ( ४ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे पञ्चमाष्टके सप्तमप्रपाठके चतुर्थोऽनुवाकः ॥ ४ ॥

---

( अथ पञ्चमकाण्डे सप्तमप्रपाठके चतुर्थोऽनुवाकः । )

---

चित्रिण्यश्च वसोर्धारास्तृतीये समुदीरिताः ॥

अथ चतुर्थे होमविशेषा राष्ट्रभृदाख्या इष्टकाश्चाभिधीयन्ते ।

यदुक्तं सूत्रकारेण—" चित्तिं जुहोम्यग्ने तमद्याश्वमिति द्वे आहुती हुत्वा" इति, तत्र प्रथमाहुतेर्विधिं मन्त्रव्याख्यानेनोन्नयति—

चित्तिं जुहोमि मनसा घृतेनेत्याहादाभ्या वै नामैषाऽऽहुतिर्वैश्वकर्मणी नैनं चिक्यानं भ्रातृव्यो दभ्नोत्यथो देवता एवाव रुन्धे , इति।

अयं मन्त्रः पूर्वमापो वरुणस्य पत्नय इत्यनुवाके समाम्नातो व्याख्यातश्च । तमिमं होमसाधनत्वेन पठेत् । अस्या आहुतेरदाभ्येति नाम, रक्षोभिः कैरपि विनाशयितुमशक्यत्वात् । सा च विश्वकर्मदेवताका, तस्मिन्मन्त्रे विश्वकर्मण इत्याम्नानात् । अस्यामाहुतौ हुतायां चितवन्तमेनं यजमानं भ्रातृव्यो न हिनस्ति । तस्मादेतां जुहुयात् । अपि चैतां जुह्वत्पुरुषो देवताः प्राप्नोत्येव ॥

अथ द्वितीयामाहुतिं विधत्ते—

अग्ने तमद्येति पङ्क्त्या जुहोति पङ्क्त्याऽऽहुत्या यज्ञमुखमा रभते , इति।

अयं मन्त्रश्चतुर्थकाण्डेऽग्निर्मूर्धेत्यनुवाके पठितो व्याख्यातश्च। पङ्क्तिच्छन्दसा हूयमाना येयमाहुतिस्तया यज्ञमारम्भं प्राप्नोति ॥

प्राचीमनु प्रदिशमित्यस्मिन्ब्राह्मणानुवाके पूर्णया जुहोतीति यद्विहितं तदेवानूद्य प्रशंसति—

सप्त ते अग्ने समिधः सप्त जिह्वा इत्याह होत्रा एवाव रुन्धेऽग्निर्देवेभ्योऽपाक्रामद्भाग-

( होमविशेषाणां राष्ट्रभृदिष्टकानां चाभिधानम् )

धेयमिच्छमानस्तस्मा एतद्भागधेयं प्राय-
च्छन्नेतद्वा अग्नेरग्निहोत्रमेतर्हि खलु वा एष जातो
यर्हि सर्वश्चितो जातायैवास्मा अन्नमपि दधा-
ति स एनं प्रीतः प्रीणाति वसीयान्भवति ,इति।

अयं च मन्त्रश्चतुर्थकाण्डे प्राचीमित्यनुवाके समाम्नातो व्याख्यातश्च । तस्मिन्मन्त्रे सप्त होत्रा इत्यभिधानादनयाऽऽहुत्या होत्रकान्प्रशास्त्रादीनधीनान्करोति। किं च—देवैर्दत्तो योऽयमग्नेर्भागस्तद्रूपत्वादियमाहुतिरस्य चीयमानस्याग्नेरग्निहोत्रमित्युच्यते। यस्मिन्काले साकल्येनायमग्निश्चितस्तदैवायमुत्पन्नो भवति। उत्पन्नाय च तस्मै तदाहुतिरूपमन्नं संपादितं भवति। तेन च तृप्तोऽग्निर्यजमानं प्रीणयति। स च यजमानो धनपतिर्भवति। एतदुक्तं सर्वं प्राचीमित्यनुवाक एव द्रष्टव्यम् ॥

अथात्र चीयमानमग्निं प्रश्नोत्तराभ्यामादित्यरूपेण प्रशंसति—

ब्रह्मवादिनो वदन्ति यदेष गार्हपत्यश्चीयतेऽथ
क्वास्याऽऽहवनीय इत्यसावादित्य इति ब्रूया-
देतस्मिन्हि सर्वाभ्यो देवताभ्यो जुह्वति य एवं
विद्वानग्निं चिनुते साक्षादेव देवता ऋध्नोति,इति।

अन्यत्राग्निर्होता गृहपतिरित्यादिषु मन्त्रेष्वग्नेर्गृहपतित्वमुक्तम् । गृहपतिस्वामिकः कश्चित्प्रदेशो गार्हपत्यः। एवं सति पूर्वस्मिन्वाक्य एतद्वा अग्नेरग्निहोत्रमिति चितेऽग्नौ हूयमानायाः पूर्णाहुतेरग्निस्वामिकत्वाभिधानात्सर्वोऽप्ययं चीयमानो गार्हपत्यः संपन्नः। तस्मादाहवनीयो न लभ्यते । आ समन्तात्सर्वे देवा यत्र हूयन्ते सोऽयमाहवनीयः। सर्वस्यापि चितप्रदेशस्याग्न्यर्थहोमाधारत्वेन गार्हपत्यत्वे सति देवान्तरहोमार्थं आहवनीयोऽस्य यजमानस्य कुत्र संभवेदित्येवं ब्रह्मवादिनां प्रश्नः। तत्राभिज्ञः कश्चिदुत्तरमेवं ब्रूयात्—असावादित्य एव यजमानस्याऽऽहवनीय इति । आदित्ये हि सर्वदेवार्थो होमः क्रियते।

"अग्नौ प्रास्ताऽऽहुतिः सम्यगादित्यमुपतिष्ठते" इति स्मृतेः ॥

एवं सति यो यजमानश्चीयमानस्याग्नेरादित्यरूपत्वं ज्ञात्वा चयनं करोति सोऽयं साक्षादेवाव्यवधानेन देवतास्तोपयति ॥

यदुक्तं सूत्रकारेण—"अग्ने यशस्विन्निति चतस्रो राष्ट्रभृतः पुरस्तादुपधाय" इति, तदेतद्विधातुमुत्पादनीयेषु मन्त्रेषु प्रथमामृचमाह—

अग्ने यशस्विन्यशसेममर्पयेन्द्रावतीमपचितीमिहाऽऽवह । अयं मूर्धा परमेष्ठी सुवर्चाः समानानामुत्तमश्लोको अस्तु ।, इति ।

प्रभूतं यशो यस्यास्ति स यशस्वी । तादृश हेऽग्न इमं यजमानं यशसाऽर्पय संयोजय । इन्द्रावतीमिन्द्रस्य योग्यामपचितीं पूजामिह कर्मण्यावह संपादय । अयं यजमानस्त्वत्प्रसादात्समानानां यजमानानां मध्ये मूर्धा शिरस्थानीयः, परमेष्ठ्युत्तमस्थाननिवासी, सुवर्चाः शोभनकान्तिः, उत्तमश्लोकः सत्कीर्तियुक्तश्चास्तु ॥

अथ द्वितीयामाह—

भद्रं पश्यन्त उपसेदुरग्रे तपो दीक्षामृषयः सुवर्विदः । ततः क्षत्रं बलमोजश्च जातं तदस्मै देवा अभि सं नमन्तु ।, इति ।

अग्रे पूर्वस्मिन्काल ऋषयः केचिन्महात्मानो भद्रं कल्याणं कर्मफलं पश्यन्तः शास्त्रदृष्ट्या निश्चिन्वानाः सुवर्विदः स्वर्गं लब्धुकामास्तपः कर्माङ्गभूतमनशनादिकं दीक्षां मौण्ड्यादिनियमविशेषं चोपसेदुरनुष्ठितवन्तः । ततोऽनुष्ठानात्तेषां क्षत्रं क्षतादनिष्टात्त्राणं रक्षणं बलं शरीरसामर्थ्यमोजो धातुपुष्टिश्चेत्येतत्सर्वं जातं संपन्नम् । तत्फलं सर्वमस्मै यजमानाय देवा अभिसंनमन्तु सर्वतः संपादयन्तु ॥

अथ तृतीयामाह—

धाता विधाता परमोत संदृक्प्रजापतिः परमेष्ठी विराजा । स्तोमाश्छन्दाꣳसि निविदो म आहुरेतस्मै राष्ट्रमभि सं नमाम ।, इति ।

परमा परम उत्तमो धाता पोषको यो देवो यश्च विधाता स्रष्टा, उतापि च संदृक्सम्यगभिज्ञः प्रजापतिः प्रजानां पालकः परम उत्कृष्टे सत्यलोकादौ तिष्ठतीति परमेष्ठी विराजा ब्रह्माण्डरूपया विराण्मूर्त्या सहितः ।

( पुनःपरीन्धनाद्यभिधानम् )

तादृशो यो देवो ये च स्तोमास्त्रिवृदादयः, यानि च च्छन्दांसि गायत्र्यादीनि, याश्च निविदो देवेद्धो मन्विद्ध इत्यादीनि निवित्पदानि ते सर्वे मे मदर्थमाडुर्ब्रुवन्तु। तैर्वक्तव्यं प्रदर्श्यते—एतस्मै यजमानाय राष्ट्रमभिसंनमाम देशाधिपत्यं सर्वतः संपादयाम। तदिदं तैर्वक्तव्यम् ॥

अथ चतुर्थीमाह—

अभ्यावर्तध्वमुप मेत साकमयꣳ शास्ताऽधिपतिर्वो अस्तु। अस्य विज्ञानमनु सꣳरभध्वमिमं पश्चादनु जीवाथ सर्वे।, इति।

हे मनुष्याः सर्वे यूयमभ्यावर्तध्वं सर्वत आगच्छत। साकं परस्परं मिलित्वा मां मदीयं यजमानमुप समीपमेताऽऽगच्छत। अयं यजमानो वो युष्माकं शास्ताऽनुशासकोऽधिपतिराधिकं पालियता चास्तु। अस्य यजमानस्य विज्ञानं चित्तवृत्तिमनुसृत्य संरभध्वं सम्यक्प्रवर्तध्वम्। इमं यजमानमनुसृत्य पश्चाज्जीवाथ, एनं यजमानं संविश्य[ या ] नेन दत्तं जीवितं गृह्णीतेत्यर्थः ॥

एतैर्मन्त्रैः साध्यमुपधानं विधत्ते—

राष्ट्रभृत एता उप दधात्येषा वा अग्नेश्चिती राष्ट्रभृत्तयैवास्मिन्राष्ट्रं दधाति राष्ट्रमेव भवति नास्माद्राष्ट्रं भ्रꣳशते ॥, इति ॥

राष्ट्रशब्दोपेतान्मन्त्रान्बिभ्रति तैरुपधीयन्त इति राष्ट्रभृतः। एतदुपधानेन निष्पन्ना या चितिः सैषाऽग्नेः संबन्धिनी राष्ट्रभृदित्युच्यते। तयैवास्मिन्यजमाने राष्ट्रं स्थापयति। तच्च राष्ट्रमस्याधीनमेव भवति। अस्माद्यजमानात्तद्राष्ट्रं कदाचिदपि न भ्रष्टं भवति। एतच्च नक्षत्रेष्टकाब्राह्मणादूर्ध्वं द्रष्टव्यम् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये पञ्चमकाण्डे सप्तमप्रपाठके चतुर्थोऽनुवाकः ॥ ४ ॥

---

( अथ पञ्चमाष्टके सप्तमप्रपाठके पञ्चमोऽनुवाकः। )

---

यथा॒ वै पु॒त्रो जा॒तो म्रि॒यत॑ ए॒वं वा ए॒ष

---

१ ख. °वेद्ध मन्विद्ध" इ°। २ ख. च. °मि स°।

म्रियते यस्याग्निरुख्यं उद्वायति यन्निर्मन्थ्यं कुर्याद्वि च्छिन्द्याद्भ्रातृव्यमस्मै जनयेत्स एव पुनः परीध्यः स्वादेवैनं योनेर्जनयति नास्मै भ्रातृव्यं जनयति तमो वा एतं गृह्णाति यस्याग्निरुख्यं उद्वायति मृत्युस्तमः कृष्णं वासः कृष्णा धेनुर्दक्षिणा तमसा ( १ ) एव तमो मृत्युमप हते हिरण्यं ददाति ज्योतिर्वै हिरण्यं ज्योतिषैव तमोऽप हतेऽथो तेजो वै हिरण्यं तेज एवाऽऽत्मन्धत्ते सुवर्न घर्मः स्वाहा सुवर्नार्कः स्वाहा सुवर्न शुक्रः स्वाहा सुवर्न ज्योतिः स्वाहा सुवर्न सूर्यः स्वाहाऽर्को वा एष यदग्निरसावादित्यः ( २ ) अश्वमेधो यदेता आहुतीर्जुहोत्यर्काश्वमेधयोरेव ज्योतीꣳषि सं दधात्येष ह त्वा अर्काश्वमेधी यस्यैतदग्नौ क्रियत आपो वा इदमग्रे सलिलमासीत्स एतां प्रजापतिः प्रथमां चितिमपश्यत्तामुपाधत्त तदियमभवत्तं विश्वकर्माऽब्रवीदुप त्वाऽयानीति नेह लोकोऽस्तीति ( ३ ) अब्रवीत्स एतां द्वितीयां चितिमपश्यत्तामुपाधत्त तदन्तरिक्षमभवत्स यज्ञः प्रजापतिमब्रवीदुप त्वाऽयानीति

नेह लोकोऽस्तीत्यब्रवीत्स विश्वकर्माणमब्रवीदुप त्वाऽयानीति केन नोपैष्यसीति दिश्याभिरित्यब्रवीत्तं दिश्याभिरुपैत्ता उपाधत्त ता दिशः ( ४ ) अभवन्त्स परमेष्ठी प्रजापतिमब्रवीदुप त्वाऽयानीति नेह लोकोऽस्तीत्यब्रवीत्स विश्वकर्माणं च यज्ञं चाब्रवीदुप वामाऽयानीति नेह लोकोऽस्तीत्यब्रूताꣳ स एतां तृतीयां चितिमपश्यत्तामुपाधत्त तदसावभवत्स आदित्यः प्रजापतिमब्रवीदुप त्वा ( ५ ) आऽयानीति नेह लोकोऽस्तीत्यब्रवीत्स विश्वकर्माणं च यज्ञं चाब्रवीदुप वामाऽयानीति नेह लोकोऽस्तीत्यब्रूताꣳ स परमेष्ठिनमब्रवीदुप त्वाऽयानीति केन मोपैष्यसीति लोकंपृणयेत्यब्रवीत्तं लोकंपृणयोपैत्तस्मादयातयाम्नी लोकंपृणाऽयातयामा ह्यसौ ( ६ ) आदित्यस्तानृषयोऽब्रुवन्नुप व आऽयामेति केन न उपैष्यथेति भूम्नेत्यब्रुवन्तान्द्वाभ्यां चितीभ्यामुपायन्त्स पञ्चचितीकः समपद्यत य एवं विद्वानग्निं चिनुते भूयानेव भवत्यभीमाँल्लोका-

ञ्जयति विदुरेनं देवा अथो एतासामेव देव-
तानाꣳ सायुज्यं गच्छति ( ७ ) ॥

( तमसाऽऽदित्योऽस्तीति दिशं आदित्यः प्रजापतिमब्रवीदुपं त्वाऽसौ
पञ्चचत्वारिꣳशच्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां पञ्चमाष्टके
सप्तमप्रपाठके पञ्चमोऽनुवाकः ॥ ५ ॥

---

( अथ पञ्चमाष्टके सप्तमप्रपाठके षष्ठोऽनुवाकः । )

---

यथा । वै । पुत्रः । जातः । म्रियते । एवम् । वै । एषः । म्रियते । यस्य । अग्निः । उख्यः । उद्वायतीरित्युत्—वायति । यत् । निर्मन्थ्यमिति निः—मन्थ्यम् । कुर्यात् । वीति । छिन्द्यात् । भ्रातृव्यम् । अस्मै । जनयेत् । सः । एव । पुनः । परीध्य इति परि—इध्यः । स्वात् । एव । एनम् । योनेः । जनयति । न । अस्मै । भ्रातृव्यम् । जनयति । तमः । वै । एतम् । गृह्णाति । यस्य । अग्निः । उख्यः । उद्वायतीत्युत्—वायति । मृत्युः । तमः । कृष्णम् । वासः । कृष्णा । धेनुः । दक्षिणा । तमसा ( १ ) । एव । तमः । मृत्युम् । अपेति । हते । हिरण्यम् । ददाति । ज्योतिः । वै । हिरण्यम् । ज्योतिषा । एव । तमः । अपेति । हते । अथो इति । तेजः । वै ।

हिरण्यम् । तेजः । एव । आत्मन् । धत्ते । सुवः । न । घर्मः । स्वाहा । सुवः । न । अर्कः । स्वाहा । सुवः । न । शुक्रः । स्वाहा । सुवः । न । ज्योतिः । स्वाहा । सुवः । न । सूर्यः । स्वाहा । अर्कः । वै । एषः । यत् । अग्निः । असौ । आदित्यः ( २ ) । अश्वमेध इत्यश्व—मेधः । यत् । एताः । आहुतीरित्या—हुतीः । जुहोति । अर्काश्वमेधयोरित्यर्क—अश्वमेधयोः । एव । ज्योतींषि । समिति । दधाति । एषः । ह । तु । वै । अर्काश्वमेधीत्यर्क—अश्वमेधी । यस्य । एतत् । अग्नौ । क्रियते । आपः । वै । इदम् । अग्रे । सलिलम् । आसीत् । सः । एताम् । प्रजापतिरिति प्रजा—पतिः । प्रथमाम् । चितिम् । अपश्यत् । ताम् । उपेति । अधत्त । तत् । इयम् । अभवत् । तम् । विश्वकर्मेति विश्व—कर्मा । अब्रवीत् । उपेति । त्वा । एति । अयानि । इति । न । इह । लोकः । अस्ति । इति ( ३ ) । अब्रवीत् । सः । एताम् । द्वितीयाम् । चितिम् । अपश्यत् । ताम् । उपेति । अधत्त । तत् । अन्तरिक्षम् । अभवत् । सः । यज्ञः । प्रजापतिमिति प्रजा—पतिम् । अब्रवीत् । उपेति । त्वा । एति । अयानि । इति । न । इह । लोकः । अस्ति । इति ।

अब्रवीत् । सः । विश्वकर्माणमिति विश्व—कर्माणम् । अब्रवीत् । उपेति । त्वा । एति । अयानि । इति । केन । मा । उपैष्यसीत्युप—ऐष्यसि । इति । दिश्याभिः । इति । अब्रवीत् । तम् । दिश्याभिः । उपैदित्युप—ऐत् । ताः । उपेति । अधत्त । ताः । दिशः (४) । अभवन् । सः । परमेष्ठी । प्रजापतिमिति प्रजा—पतिम् । अब्रवीत् । उपेति । त्वा । एति । अयानि । इति । न । इह । लोकः । अस्ति । इति । अब्रवीत् । सः । विश्वकर्माणमिति विश्व—कर्माणम् । च । यज्ञम् । च । अब्रवीत् । उपेति । वाम् । एति । अयानि । इति । न । इह । लोकः । अस्ति । इति । अब्रूताम् । सः । एताम् । तृतीयाम् । चितिम् । अपश्यत् । ताम् । उपेति । अधत्त । तत् । असौ । अभवत् । सः । आदित्यः । प्रजापतिमिति प्रजा—पतिम् । अब्रवीत् । उपेति । त्वा (५) । एति । अयानि । इति । न । इह । लोकः । अस्ति । इति । अब्रवीत् । सः । विश्वकर्माणमिति विश्व—कर्माणम् । च । यज्ञम् । च । अब्रवीत् । उपेति । वाम् । एति । अयानि । इति । न । इह । लोकः । अस्ति । इति । अब्रूताम् । सः । परमेष्ठिनम् । अब्रवीत् । उपेति ।

(पुनःपरीन्धनाद्यभिधानम्)

त्वा । एति । अयानि । इति । केन । मा । उपैष्य॒सीत्युप—ऐष्यसि । इति । लोकंपृणयेति लोकम्—पृणया । इति । अब्रवीत् । तम् । लोकंपृणयेति लोकम्—पृणया । उपैदित्युप—ऐत् । तस्मात् । अयातयाम्नीत्ययात—याम्नी । लोकंपृणेति लोकम्—पृणा । अयातयामेत्ययात—यामा । हि । असौ (६) । आदित्यः । तान् । ऋषयः । अब्रुवन् । उपेति । वः । एति । अयाम । इति । केन । नः । उपैष्यथेत्युप—ऐष्यथ । इति । भूम्ना । इति । अब्रुवन् । तान् । द्वाभ्याम् । चितीभ्यामिति चिति—भ्याम् । उपायन्नित्युप—आयन् । सः । पञ्चचितीक इति पञ्च—चितीकः । समिति । अपद्यत । यः । एवम् । विद्वान् । अग्निम् । चिनुते । भूयान् । एव । भवति । अभीति । इमान् । लोकान् । जयति । विदुः । एनम् । देवाः । अथो इति । एतासाम् । एव । देवतानाम् । सायुज्यम् । गच्छति (७) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे पञ्चमाष्टके सप्तमप्रपाठके पञ्चमोऽनुवाकः ॥ ५ ॥

---

(अथ पञ्चमकाण्डे सप्तमप्रपाठके पञ्चमोऽनुवाकः ।)

---

तिस्र आहुतयो राष्ट्रभृतस्तुर्ये समीरिताः ॥

अथ पञ्चमे पुनःपरीन्धनादयो विधीयन्ते ।

यदुक्तं सूत्रकारेण—" यस्याग्निरुख्य उद्वायेद्गार्हपत्यादन्यं प्रणयेत्स एव पुनः परीध्यः " इति, तदिदं विधत्ते—

यथा वै पुत्रो जातो म्रियत एवं वा एष म्रियते यस्याग्निरुख्य उद्वायति यन्निर्मन्थ्यं कुर्याद्वि च्छिन्द्याद्भ्रातृव्यमस्मै जनयेत्स एव पुनः परीध्यः स्वादेवैनं योनेर्जनयति नास्मै भ्रातृव्यं जनयति , इति।

यस्य यजमानस्योख्याग्निः शाम्यति तस्य पुत्रमरणवदग्निनाशनिमित्तं दुःखं जायते । तस्य निर्मन्थ्येनाग्न्यन्तरोत्पादने सति पूर्वोऽ(र्वम)ग्निं विच्छिन्द्यात् । स च विच्छिन्नोऽस्य यजमानस्य वैरिणं जनयेत् । अतस्तत्परिहाराय गार्हपत्यनिष्ठः सोऽग्निरेव पुनरप्यानीय परितः काष्ठप्रक्षेपेणेन्धनीयः । तथा सति स्वकारणादेवोत्पन्नत्वाद्वैरिणं न जनयति ॥

अत्रैव प्रायश्चित्तरूपां दक्षिणां विधत्ते—

तमो वा एतं गृह्णाति यस्याग्निरुख्य उद्वायति मृत्युस्तमः कृष्णं वासः कृष्णा धेनुर्दक्षिणा तमसैव तमो मृत्युमप हते , इति।

यस्य यजमानस्योख्याग्निर्नश्येदेतं यजमानं तमो गृह्णाति, तच्च मृत्युरूपम् । अतस्तत्परिहाराय कृष्णवर्णमेकं वस्त्रं कृष्णवर्णा च धेनुर्दक्षिणाऽनेन दातव्या । एवं सति तमोरूपत्वाद्दक्षिणायास्तया मृत्युरूपं तमो विनाशयति ॥

अथ तत्रैव दानान्तरं विधत्ते—

हिरण्यं ददाति ज्योतिर्वै हिरण्यं ज्योतिषैव तमोऽप हतेऽथो तेजो वै हिरण्यं तेज एवाऽऽत्मन्धत्ते , इति।

हिरण्यरूपेण ज्योतिषा मृत्युरूपस्य तमसो विनाशनं युक्तम् । अपि च हिरण्यस्य तेजस्त्वादात्मनि तेजः संपादयति । तदेतद्ब्राह्मणं सर्वान्ते द्रष्टव्यम् ॥

यदुक्तं सूत्रकारेण—" सुवर्ण घर्मः स्वाहेति पञ्चार्काहुतीर्हुत्वा " इति, तदिदं विधातुं मन्त्रानुत्पादयति—

१ ख. च. °णा तेन ।

( पुनःपरीन्धनाद्यभिधानम् )

सुवर्न घर्मः स्वाहा सुवर्नार्कः स्वाहा सुवर्न शुक्रः स्वाहा सुवर्न ज्योतिः स्वाहा सुवर्न सूर्यः स्वाहा, इति।

सुवर्न स्वर्ग इव, यथा स्वर्गेऽवस्थिता देवा दीप्यमाना एवं घर्मो दीप्यमानो योऽग्निस्तस्मै स्वाहा हुतमस्तु। एवमुत्तरत्रापि योज्यम्। अर्कोऽर्चनीयः। शुक्रोऽतिनिर्मलः। ज्योतिः प्रकाशरूपः। सूर्यः सूर्यवर्ण आदित्यरूपः॥

एतैर्मन्त्रैर्होमं विधत्ते—

अर्को वा एष यदग्निरसावादित्योऽश्वमेधो यदेता आहुतीर्जुहोत्यर्काश्वमेधयोरेव ज्योतींषि सं दधात्येष ह त्वा अर्काश्वमेधीयस्यैतदग्नौ क्रियते, इति।

योऽयं चीयमानोऽग्निः क्रतुसाधनभूत एषोऽर्चनीयत्वादर्क इत्युच्यते। योऽयमादित्यः स एष क्रतुफलरूपत्वादश्वमेध इत्युच्यते। सुवर्न इत्येतन्मन्त्रहोमेनार्काश्वमेधयोरग्न्यादित्ययोर्यानि ज्योतींषि तानि संपादयति। यस्य यजमानस्याग्निचयने तदेतदाहुतिहवनं क्रियते स एष एव यजमानोऽर्काश्वमेधी क्रतुसाधनतत्फलाभ्यामुपेतः। एतच्च ब्राह्मणमग्निर्देवेभ्य इत्यनुवाकान्ते द्रष्टव्यम्॥

अथ चितीनां पञ्चानां प्रशंसा। तत्र प्रथमां चितिं प्रशंसति—

आपो वा इदमग्रे सलिलमासीत्स एतां प्रजापतिः प्रथमां चितिमपश्यत्तामुपाधत्त तदियमभवत्, इति।

यदिदं भूम्यन्तरिक्षादिरूपं जगत्तदिदं सृष्टेः प्रागनेन रूपेण विभूतं नाऽऽसीत्, किं त्वाप एवाऽऽसीत्। तास्वप्सु भूतान्तरं न मिलितं, किं तु नैरन्तर्येण सलिलमेवाऽऽसीत्। तदानीं प्रजापतिरवस्थातुमाधारः को वा भविष्यतीति विचार्यैतां प्रथमां चितिं दृष्ट्वोपाधत्त। तदानीं सा चितिरियं भूमिरूपाऽभवत्। तत्राय प्रजापतिरवस्थितः॥

अथ द्वितीयां चितिं प्रशंसति—

तं विश्वकर्माऽब्रवीदुप त्वाऽयानीति नेह लो-

कोऽस्तीत्यब्रवीत्स एतां द्वितीयां चितिमपश्यत्तामुपाधत्त तदन्तरिक्षमभवत् , इति ।

विश्वकर्माख्यः कश्चिदन्योऽवस्थातुमाधारमलभमानस्तं भूमाववस्थितं प्रजापतिमिदमब्रवीत्—अहमपि त्वामुपागच्छानि त्वत्समीप उपविशानीति । स च प्रजापतिरिह भूमौ तवावकाशो नास्तीत्यब्रवीत् । ततः स विश्वकर्मा स्वस्याऽऽधारः को भविष्यतीति विचार्यैतां द्वितीयां चितिं दृष्ट्वा तामुपाधत्त । तदानीं सा द्वितीया चितिरन्तरिक्षमभवत् । तत्रायं विश्वकर्माऽवस्थितः ॥

अथ दिश्याख्या इष्टकाः प्रशंसति—

स यज्ञः प्रजापतिमब्रवीदुप त्वाऽयानीति नेह लोकोऽस्तीत्यब्रवीत्स विश्वकर्माणमब्रवीदुप त्वाऽयानीति केन मोपैष्यसीति दिश्याभिरित्यब्रवीत्तं दिश्याभिरुपैत्ता उपाधत्त ता दिशोऽभवन् , इति ।

यज्ञाख्येन पुरुषेण स्थाने पृष्टे सति प्रजापतिः परिजहार । विश्वकर्मा तु केनोत्कोचरूपेण साधनेन सह मां प्रत्यागमिष्यसीति पप्रच्छ । स च यज्ञो दिश्याभिरिष्टकाभिः सहाऽऽगमिष्यामीत्युक्त्वा तथैव गतवान् । राज्ञ्यसि प्राची दिगित्यादिभिर्मन्त्रैर्दिक्षूपधेया दिश्याः । ताश्चोपहिताः सत्यो दिग्रूपा अभवन् । ततो यज्ञस्यावकाशोऽभूत् ॥

अथ तृतीयां चितिं प्रशंसति—

स परमेष्ठी प्रजापतिमब्रवीदुप त्वाऽयानीति नेह लोकोऽस्तीत्यब्रवीत्स विश्वकर्माणं च यज्ञं चाब्रवीदुप वामाऽयानीति नेह लोकोऽस्तीत्यब्रूताᳪ स एतां तृतीयां चितिमपश्यत्तामुपाधत्त तदसावभवत् ,इति ।

प्रजापतिर्विश्वकर्मा परमेष्ठीत्येते त्रयोऽप्येत(क)स्यैव मूर्तिभेदाः । तत्र परमेष्ठिना प्रार्थितः प्रजापतिर्भूमाववकाशमदत्त्वा परिजहार । विश्वकर्मा यज्ञश्चेत्येतावप्यन्तरिक्षे दिक्षु चावकाशमदत्त्वा परिजहतुः । ततः परमेष्ठी विचार्य तृतीयां चितिं दृष्ट्वोपाधत्त । साऽपि चितिर्द्यौरभवत् । तत्रायं परमेष्ठी स्वयमवस्थितः ॥

( पुनःपरीन्धनाद्यभिधानम् )

अथ लोकंपृणेष्टकां प्रशंसति—

स आदित्यः प्रजापतिमब्रवीदुप त्वाऽया-
नीति नेह लोकोऽस्तीत्यब्रवीत्स विश्वकर्माणं च
यज्ञं चाब्रवीदुप वामाऽयानीति नेह लोकोऽ-
स्तीत्यब्रूताꣳ स परमेष्ठिनमब्रवीदुप त्वाऽया-
नीति केन मोपैष्यसीति लोकंपृणयेत्यब्रवीत्तं
लोकंपृणयोपैत्तस्मादयातयाम्नी लोकंपृणाऽ-
यातयामा ह्यसावादित्यः , इति।

स आदित्यो लोकंपृणामानीतवान्। तस्यामुपहितायामादित्यस्यावकाशोऽभूत्। यस्मादियमादित्येनाऽऽनीता तस्मादगतसारा लोकंपृणा। आदित्योऽप्यगतसारः, पुनः पुनरावर्तमानोऽपि तस्मिञ्जगदुपकारकस्य प्रकाशरूपस्य सारस्याक्षीयमाणत्वात्। आदित्यवल्लोकंपृणा पुनः पुनः प्रयुज्यमानाऽप्यक्षीयमाणसारा। यत्र[1] यत्र चितौ छिद्रमस्ति तत्र तत्र लोकंपृणा प्रयुज्यते॥

अथ चतुर्थपञ्चमचिती प्रशंसति—

तानृषयोऽब्रुवन्नुप व आऽयामेति केन न
उपैष्यथेति भूम्नेत्यब्रुवन्तान्द्वाभ्यां चिती-
भ्यामुपायन्त्स पञ्चचितीकः समपद्यत , इति।

तान्प्रजापतिविश्वकर्मयज्ञपरमेष्ठ्यादित्यानन्ये केचिदृषयः स्थानं प्रार्थितवन्तः। ततः प्रजापत्यादिभिरुत्कोचे याचिते सति उत्कोचबाहुल्यं प्रतिज्ञाय चितिद्वयमानीतवन्तः। अतस्तेषामवकाशोऽभूत्। तदेवं प्रशस्ताभिश्चितिभिरयमग्निः पञ्चचितीकोऽभूत्॥

एतद्वेदनपूर्वकमनुष्ठानं प्रशंसति—

य एवं विद्वानग्निं चिनुते भूयानेव भवत्यभी-
माँल्लोकाञ्जयति विदुरेनं देवा अथो एतासा-
मेव देवतानाꣳ सायुज्यं गच्छति॥, इति॥

---

१ क. घ. ङ. च. °त्र कुत्र।

विद्यादिगुणसमृद्धिर्भूयस्त्वं, लोकत्रयस्य स्वाधीनत्वं जयः, देवैर्वेदनं नामैतदीया कीर्तिः । अपि चैतासां देवतानां सहभावं प्राप्नोति ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये पञ्चमकाण्डे सप्तमप्रपाठके पञ्चमोऽनुवाकः ॥ ५ ॥

---

( अथ पञ्चमाष्टके सप्तमप्रपाठके षष्ठोऽनुवाकः । )

---

वयो वा अग्निर्यद॒ग्निचित्प॒क्षिणो॑ऽश्नीयात्तमे॒वाग्निम॑द्या॒दार्ति॒माछे॑त्संवत्स॒रं व्र॒तं च॑रेत्संवत्स॒रꣳ हि व्र॒तं नाति॑ प॒शुर्वा ए॒ष यद॒ग्निर्हि॒नस्ति॒ खलु॒ वै तं प॒शुर्य ए॑नं पु॒रस्ता॑त्प्र॒त्यञ्च॑मुप॒चर॑ति॒ तस्मा॑त्प॒श्चात्प्राङु॑प॒चर्य॑ आ॒त्मनो॑ऽहिꣳसायै॒ तेजो॑ऽसि॒ तेजो॑ मे यच्छ पृथि॒वीं य॑च्छ ( १ ) पृ॒थि॒व्यै मा॑ पाहि॒ ज्योति॑रसि॒ ज्योति॑र्मे यच्छा॒न्तरि॑क्षं यच्छा॒न्तरि॑क्षान्मा पाहि॒ सुव॑रसि॒ सुव॑र्मे यच्छ॒ दिवं॑ यच्छ दि॒वो मा॑ पाही॒त्याहै॒ताभि॒र्वा इ॒मे लो॒का विधृ॑ता॒ यदे॒ता उ॑प॒दधा॑त्ये॒षां लो॒काना॒ं विधृ॑त्यै स्वयमातृ॒ण्णा उ॑प॒धाय॑ हिरण्येष्ट॒का उप॑ दधाती॒मे वै लो॒काः स्व॑यमातृ॒ण्णा ज्योति॒र्हिर॑ण्यं॒ यत्स्व॑यमातृ॒ण्णा उ॑प॒धाय॑ ( २ ) हि॒र॒ण्ये॒ष्ट॒का उ॑प॒दधा॑ती॒माने॒वैता॒भि॑र्लो॒काञ्ज्योति॑ष्मतः कु॒रु॒ते॒ऽथो॑ ए॒ताभि॑रे॒वास्मा॑ इ॒मे लो॒काः प्र भा॑न्ति॒

यास्ते अग्ने सूर्ये रुचं उद्यतो दिवंमातन्वन्ति रश्मिभिः। ताभिः सर्वाभी रुचे जनाय नस्कृधि। या वो देवाः सूर्ये रुचो गोष्वश्वेषु या रुचः। इन्द्राग्नी ताभिः सर्वाभी रुचं नो धत्त बृहस्पते। रुचं नो धेहि ( ३ ) ब्राह्मणेषु रुचꣳ राजसु नस्कृधि। रुचं विश्येषु शूद्रेषु मयि धेहि रुचा रुचम्। द्वेधा वा अग्निं चिक्यानस्य यश इन्द्रियं गच्छत्यग्निं वा चितमीजानं वा यदेता आहुतीर्जुहोत्यात्मन्नेव यश इन्द्रियं धत्त ईश्वरो वा एष आर्तिमार्तोर्योऽग्निं चिन्वन्नधिक्रामति तत्त्वा यामि ब्रह्मणा वन्दमान इति वारुण्यर्चा ( ४ ) जुहुयाच्छान्तिरेवैषाऽग्नेर्गुप्तिरात्मनो हविष्कृतो वा एष योऽग्निं चिनुते यथा वै हविः स्कन्दत्येवं वा एष स्कन्दति योऽग्निं चित्वा स्त्रियमुपैति मैत्रावरुण्याऽऽमिक्षया यजेत मैत्रावरुणतामेवोपैत्यात्मनोऽस्कन्दाय यो वा अग्निमृतुस्थां वेदर्तुर्ऋतुरस्मै कल्पमान एति प्रत्येव तिष्ठति संवत्सरो वा अग्निः ( ५ ) ऋतुस्थास्तस्य वसन्तः शिरो ग्रीष्मो दक्षिणः पक्षो वर्षाः पुच्छꣳ शरदुत्तरः पक्षो हेमन्तो मध्यं

पूर्वपक्षाश्चितयोऽपरपक्षाः पुरीषमहोरात्राणी-
ष्टका एष वा अग्निर्ऋतुस्था य एवं वेदर्तुर्ऋतुरस्मै
कल्पमान एति प्रत्येव तिष्ठति प्रजापतिर्वा
एतं ज्यैष्ठ्यकामो न्यधत्त ततो वै स ज्यैष्ठ्यमग-
च्छद्य एवं विद्वानग्निं चिनुते ज्यैष्ठ्यमेव
गच्छति ( ६ ) ॥

( पृथिवीं यच्छ यत्स्वयमातृण्णा उपधाय
धेह्यृचाऽग्निश्चिनुते त्रीणि च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां पञ्चमाष्टके
सप्तमप्रपाठके षष्ठोऽनुवाकः ॥ ६ ॥

---

( अथ पञ्चमाष्टके सप्तमप्रपाठके षष्ठोऽनुवाकः । )

---

वयः । वै । अग्निः । यत् । अग्निचिदित्यग्नि—चित् ।
पक्षिणः । अश्नीयात् । तम् । एव । अग्निम् । अद्यात् ।
आर्तिम् । एति । ऋच्छेत् । संवत्सरमिति सं—व-
त्सरम् । व्रतम् । चरेत् । संवत्सरमिति सं—वत्स-
रम् । हि । व्रतम् । न । अतीति । पशुः । वै । एषः ।
यत् । अग्निः । हिनस्ति । खलु । वै । तम् । पशुः ।
यः । एनम् । । पुरस्तात् । प्रत्यञ्चम् । उपचरतीत्यु-
प—चरति । तस्मात् । पश्चात् । प्राङ् । उपचर्य
इत्युप—चर्यः । आत्मनः । अहिंसायै । तेजः ।

असि। तेजः। मे। यच्छ। पृथिवीम्। यच्छ (१)। पृथिव्यै। मा। पाहि। ज्योतिः। असि। ज्योतिः। मे। यच्छ। अन्तरिक्षम्। यच्छ। अन्तरिक्षात्। मा। पाहि। सुवः। असि। सुवः। मे। यच्छ। दिवम्। यच्छ। दिवः। मा। पाहि। इति। आह। एताभिः। वै। इमे। लोकाः। विधृता इति वि—धृताः। यत्। एताः। उपदधातीत्युप—दधाति। एषाम्। लोकानाम्। विधृत्या इति वि—धृत्यै। स्वयमातृण्णा इति स्वयम्—आतृण्णाः। उपधायेत्युप—धाय। हिरण्येष्टका इति हिरण्य—इष्टकाः। उपेति। दधाति। इमे। वै। लोकाः। स्वयमातृण्णा इति स्वयम्—आतृण्णाः। ज्योतिः। हिरण्यम्। यत्। स्वयमातृण्णा इति स्वयम्—आतृण्णाः। उपधायेत्युप—धाय (२)। हिरण्येष्टका इति हिरण्य—इष्टकाः। उपदधातीत्युप—दधाति। इमान्। एव। एताभिः। लोकान्। ज्योतिष्मतः। कुरुते। अथो इति। एताभिः। एव। अस्मै। इमे। लोकाः। प्रेति। भान्ति। याः। ते। अग्ने। सूर्ये। रुचः। उद्यत इत्युत्—यतः। दिवम्। आतन्वन्तीत्या—तन्वन्ति। रश्मिभिरिति रश्मि—भिः। ताभिः। सर्वाभिः। रुचे। जनाय। नः।

कृधि । याः । वः । देवाः । सूर्ये । रुचः । गोषु । अश्वेषु । याः । रुचः । इन्द्राग्नी इतीन्द्र—अग्नी । ताभिः । सर्वाभिः । रुचम् । नः । धत्त । बृहस्पते । रुचम् । नः । धेहि ( ३ ) । ब्राह्मणेषु । रुचम् । राजस्विति राज—सु । नः । कृधि । रुचम् । विश्येषु । शूद्रेषु । मयि । धेहि । रुचा । रुचम् । द्वेधा । वै । अग्निम् । चिक्यानस्य । यशः । इन्द्रियम् । गच्छति । अग्निम् । वा । चितम् । ईजानम् । वा । यत् । एताः । आहुतीरित्या—हुतीः । जुहोति । आत्मन् । एव । यशः । इन्द्रियम् । धत्ते । ईश्वरः । वै । एषः । आर्तिम् । आर्तोरित्या—अर्तोः । यः । अग्निम् । चिन्वन् । अधिक्रामतीत्यधि—क्रामति । तत् । त्वा । यामि । ब्रह्मणा । वन्दमानः । इति । वारुण्या । ऋचा ( ४ ) । जुहुयात् । शान्तिः । एव । एषा । अग्नेः । गुप्तिः । आत्मनः । हविष्कृत इति हविः—कृतः । वै । एषः । यः । अग्निम् । चिनुते । यथा । वै । हविः । स्कन्दति । एवम् । वै । एषः । स्कन्दति । यः । अग्निम् । चित्वा । स्त्रियम् । उपैतीत्युप—एति । मैत्रावरुण्येति मैत्रा—वरुण्या । आमिक्षया । यजेत । मैत्रावरुणतामिति मैत्रा—

वरुणताम्। एव। उपेति। एति। आत्मनः। अस्क-न्दाय। यः। वै। अग्निम्। ऋतुस्थामित्यृतु—स्थाम्। वेद। ऋतुर्ऋतुरित्यृतुः—ऋतुः। अस्मै। कल्पमानः। एति। प्र-तीति। एव। तिष्ठति। संवत्सर इति सं—वत्सरः। वै। अग्निः ( ५ )। ऋतुस्था इत्यृतु—स्थाः। तस्य। वसन्तः। शिरः। ग्रीष्मः। दक्षिणः। पक्षः। वर्षाः। पुच्छम्। शरत्। उत्तर इत्युत्—तरः। पक्षः। हेम-न्तः। मध्यम्। पूर्वपक्षा इति पूर्व—पक्षाः। चितयः। अपरपक्षा इत्यपर—पक्षाः। पुरीषम्। अहोरात्राणीत्यहः—रात्राणि। इष्टकाः। एषः। वै। अग्निः। ऋतुस्था इत्यृतु—स्थाः। यः। एवम्। वेद। ऋतुर्ऋतुरित्यृतुः—ऋतुः। अस्मै। कल्पमानः। एति। प्रतीति। एव। तिष्ठति। प्रजापतिरिति प्रजा—पतिः। वै। एतम्। ज्यैष्ठ्यकाम इति ज्यैष्ठ्य—कामः। नीति। अधत्त। ततः। वै। सः। ज्यै-ष्ठ्यम्। अगच्छत्। यः। एवम्। विद्वान्। अग्निम्। चिनुते। ज्यैष्ठ्यम्। एव। गच्छति ( ६ )॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे पञ्चमाष्टके सप्तमप्रपाठके षष्ठोऽनुवाकः ॥ ६ ॥

———

( अथ पञ्चमकाण्डे सप्तमप्रपाठके षष्ठोऽनुवाकः । )

---

पुनःपरीन्धनाद्यत्र पञ्चमे समुदीरितम् ॥

अथ षष्ठे व्रतचरणादिकमभिधीयते ।

यदुक्तं सूत्रकारेण—" संवत्सरं न कंचन[1] प्रत्यवरोहेन्न च रामामुपेयान्न पक्षिणोऽश्नीयात् " इत्यादि, तत्र पक्ष्यशननिषेधरूपं संवत्सरव्रतं विधत्ते—

वयो वा अग्निर्यदग्निचित्पक्षिणोऽश्नीयात्तमेवाग्निमद्यादार्तिमार्छेत्संवत्सरं व्रतं चरेत्संवत्सरꣳ हि व्रतं नाति, इति ।

योऽयं चीयमानोऽग्निः स पक्षिस्वरूप एव । ' वयसां वा एष प्रतिमया चीयते ' इति पूर्वमुक्तम् । एवं सत्ययमग्निचिद्यदि पक्षिणो भक्षयेत्तर्ह्यग्निमेव भक्षितवान्भवति । ततो म्रियेत । अतस्तत्परिहाराय संवत्सरमात्रं पक्षिभक्षणवर्जनरूपं व्रतं चरेत् । त(य)स्मात्संवत्सरमतीत्य व्रतचरणं न क्वापि दृष्टं तस्मात्तद्व्रत(तं) पर्याप्तम् । एतद्ब्राह्मणं पूर्वोक्तं च चितिप्रशंसारूपं ब्राह्मणं सर्वान्ते द्रष्टव्यम् ॥

अथ चित्यारोहणस्य पश्चिमदिङ्नियमं विधत्ते—

पशुर्वा एष यदग्निर्हिनस्ति खलु वै तं पशुर्य एनं पुरस्तात्प्रत्यञ्चमुपचरति तस्मात्पश्चात्प्राङुपचर्य आत्मनोऽहिꣳसायै, इति ।

अग्नेः पशुरूपत्वात्पुरस्तादारोहणे यथा पशुः शृङ्गाभ्यां हिनस्ति तद्वदयमपि हिंस्यात् । तस्मात्पश्चिमायां दिशि प्राङ्मुखेनोपचर्य आरोहणीयः । तच्चाऽऽत्मन आरोढुरहिंसार्थं भवति । एतच्चाग्रे तत्र श्रवो वय इत्यनुवाके द्रष्टव्यम् ॥

यदुक्तं सूत्रकारेण "तेजोऽसि तेजो मे यच्छेति हिरण्येष्टकाम्" इति, "ज्योतिरसि ज्योतिर्मे यच्छेति हिरण्येष्टकाम्" इति च, "सुवरसि सुवर्मे यच्छेति हिरण्येष्टकाम्" इति च, तदेतद्विधातुं मन्त्रानुत्पादयति—

तेजोऽसि तेजो मे यच्छ पृथिवीं यच्छ पृथिव्यै मा पाहि ज्योतिरसि ज्योतिर्मे यच्छा-

---

१ ख. घ. ङ. च. किंचन ।

( व्रतचरणाद्यभिधानम् )

न्तरिक्षं यच्छान्तरिक्षान्मा पाहि सुवरसि सुवर्मे यच्छ दिवं यच्छ दिवो मा पाहि , इति ।

प्रथमचितावुपधातव्ये हे हिरण्येष्टके त्वं तेजोरूपाऽसि, मे मदर्थं तेजो देहि । तथा पृथिवीं देहि । यद्वा मदुपकारित्वेन नियमय । तस्याः पृथिव्याः सकाशान्मां पाहि । यथा पृथिवी नोपद्रवं करोति तथा कुरु । एवं तृतीयपञ्चमचितिविषययोरुत्तरयोर्मन्त्रयोर्योज्यम् । सुवः स्वर्गसुखम् । दिवं द्युलोकम् ॥

एतैर्मन्त्रैः साध्यमुपधानं विधत्ते—

इत्याहैताभिर्वा इमे लोका विधृता यदेता उपदधात्येषां लोकानां विधृत्यै , इति ।

इत्युक्तान्मन्त्रानुपधानकाले पठेत् । एताभिर्हिरण्येष्टकाभिरिमे त्रयो लोका विधृताः । अत एतदुपधानं लोकधृत्यै भवति ॥

अस्योपधानस्य तत्तच्चितिगतस्वयमातृण्णाभ्य ऊर्ध्वं[1] कालं विधत्ते—

स्वयमातृण्णा उपधाय हिरण्येष्टका उप दधातीमे वै लोकाः स्वयमातृण्णा ज्योतिर्हिरण्यं यत्स्वयमातृण्णा उपधाय हिरण्येष्टका उपदधातीमानेवैताभिर्लोकाञ्ज्योतिष्मतः कुरुतेऽथो एताभिरेवास्मा इमे लोकाः प्र भान्ति, इति ।

एतच्च स्वयमातृण्णामित्यनुवाके द्रष्टव्यम् ॥

यदुक्तं सूत्रकारेण—"यास्ते अग्ने सूर्ये रुच इति तिस्रो रुचः" इति, रुगाख्या आहुतीर्जुहुयादित्यर्थः । तत्र प्रथमामाह—

यास्ते अग्ने सूर्ये रुच उद्यतो दिवमातन्वन्ति रश्मिभिः। ताभिः सर्वाभी रुचे जनाय नस्कृधि ।, इति ।

हेऽग्ने सूर्ये सूर्यमण्डले स्थितस्य ते तत्रोद्यत उदयं गच्छतो या रुचो दीप्तयो दिवं द्युलोकमातन्वन्ति सर्वतो व्याप्नुवन्ति ताभिः सर्वाभी रश्मिभिर्नो जनायास्मदीय[2]जनार्थं रुचे कृधि रुचं दीप्तं(प्तिं) कुरु ॥

अथ द्वितीयामाह—

---

१ ख. ङ. च. ऊर्ध्वंका । २ क. °ययजमाना° ।

या वो देवाः सूर्ये रुचो गोष्वश्वेषु या रुचः ।
इन्द्राग्नी ताभिः सर्वाभी रुचं नो धत्त बृहस्पते, इति ।

हे देवा वो युष्माकं संबन्धिन्यः सूर्यमण्डले या रुचो दीप्तयो वर्तन्ते, तथा गोष्वश्वेषु च या रुचो वर्तन्ते, हे इन्द्राग्नी ताभिः सर्वाभिर्दीप्तिभिर्नोऽस्मदर्थं रुचं धत्त दीप्तं(प्तिं) कुरुत ॥

अथ तृतीयामाह—

रुचं नो धेहि ब्राह्मणेषु रुचः
राजसु नस्कृधि । रुचं विश्येषु
शूद्रेषु मयि धेहि रुचा रुचम् । , इति ।

हेऽग्ने नोऽस्मदीयेषु ब्राह्मणेषु रुचं धेहि प्रकाशं कुरु । नोऽस्मदीयेषु राजसु रुचं कृधि प्रकाशं कुरु । तथा विश्येषु वैश्येषु शूद्रेषु च रुचं प्रकाशं कुरु । तथा रुचा त्वदीयया दीप्त्या मयि रुचं धेहि प्रकाशं कुरु ॥

एतैर्मन्त्रैः साध्यं होमं विधत्ते—

द्वेधा वा अग्निं चिक्यानस्य यश इन्द्रियं ग-
च्छत्यग्निं वा चितमीजानं वा यदेता आहुती-
र्जुहोत्यात्मन्नेव यश इन्द्रियं धत्ते , इति ।

यो यजमानोऽग्निं चितवांस्तस्य यशः कीर्तिरिन्द्रियं सामर्थ्यं वाऽन्यत्र गच्छति । कुत्रेति चेच्छ्रूयतां, योऽयमिदानीं चितोऽग्निस्तं वा प्राप्नोति । यस्त्वीजानः पूर्वं चितेऽग्नौ यागं कृतवांस्तं वा प्राप्नोति । सर्वथाऽप्यस्माद्यजमानादपगच्छति । एतैर्मन्त्रैर्होमे तु तद्यश इन्द्रियं च स्वात्मन्येव धारयति । एतच्चाग्निर्देवेभ्य इत्यनुवाकादूर्ध्वं द्रष्टव्यम् ॥

यदुक्तं सूत्रकारेण "तत्त्वा यामि ब्रह्मणा वन्दमान इति शालामुखीये हुत्वा" इति, तदिदं विधत्ते—

ईश्वरो वा एष आर्तिमार्तोर्योऽग्निं चिन्वन्नधिक्रा-
मति तत्त्वा यामि ब्रह्मणा वन्दमान इति वारुण्य-
र्चा जुहुयाच्छान्तिरेवैषाऽग्नेर्गुप्तिरात्मनः , इति ।

यो यजमानश्चयनकालेऽग्निमधिरुह्य पादेनाऽऽक्रामति एष यजमानो वि-

---

१ ख च. 'प्यस्माद्य' ।

नाशं प्राप्तुं समर्थः। तत्परिहाराय तत्त्वा यामीत्यृचा जुहुयात्। सेयमृगिन्द्रं वो विश्वतस्परीन्द्रं नर इत्यनुवाके व्याख्याता। एषाऽऽहुतिरग्नेः शमनहेतुरात्मनो यजमानस्य च रक्षणहेतुः। तच्चाग्ने तव श्रवो वय इत्यनुवाके द्रष्टव्यम्॥

यथाऽग्निचयनादूर्ध्वं तदङ्गत्वेन सौत्रामणी पूर्वं विहितैवमत्र मैत्रावरुणीं विधत्ते—

हविष्कृतो वा एष योऽग्निं चिनुते यथा वै हविः स्कन्दत्येवं वा एष स्कन्दति योऽग्निं चित्वा स्त्रियमुपैति मैत्रावरुण्याऽऽमिक्षया यजेत मैत्रावरुणतामेवोपैत्यात्मनोऽस्कन्दाय, इति।

यो यजमानोऽग्निं चिनुत एष हविःस्वरूपं प्राप्तः। तथा सति स्त्रीगमन(नेऽ)स्य स्वरूपनाशो हविर्नाशसमानः। अतस्तत्परिहारार्थं यजेत। तेन यागेन स्वयं मित्रावरुणसंबन्धितां प्राप्य यागादूर्ध्वं हविष उपयुक्तत्वाद्धविःस्थानीयस्य स्वस्य गमनेऽपि नास्ति नाशः॥

अथाग्निं संवत्सररूपकल्पनया प्रशंसति—

यो वा अग्निमृतुस्थां वेदर्तुर्ऋतुरस्मै कल्पमान एति प्रत्येव तिष्ठति संवत्सरो वा अग्निर्ऋतुस्थास्तस्य वसन्तः शिरो ग्रीष्मो दक्षिणः पक्षो वर्षाः पुच्छꣳ शरदुत्तरः पक्षो हेमन्तो मध्यं पूर्वपक्षाश्चितयोऽपरपक्षाः पुरीषमहोरात्राणीष्टका एष वा अग्निर्ऋतुस्था य एवं वेदर्तुर्ऋतुरस्मै कल्पमान एति प्रत्येव तिष्ठति, इति।

ऋतुषु तिष्ठतीत्यृतुस्थाः संवत्सरस्तद्रूपमग्निं यो वेद मनसा भावयेत्, अस्मै यजमानाय स स ऋतुः स्वस्वोचितभोगप्रदानसमर्थः सन्नेनं प्राप्नोति। तद्भोगेन चायं प्रतितिष्ठति। संवत्सरो वा अग्निरित्यादि भावनाप्रकारः। य एवं वेदेत्यादि पूर्वोक्तफलोपसंहारः॥

अथ फलान्तरेण प्रशंसति—

प्रजापतिर्वा एतं ज्यैष्ठ्यकामो न्यधत्त ततो

वै स ज्यैष्ठ्यमगच्छद्य एवं विद्वानग्निं चिनुते ज्यैष्ठ्यमेव गच्छति ॥ , इति।

न्यधत्त चितवानित्यर्थः। ज्यैष्ठ्यं वयोगुणाभ्यामाधिक्यम् । एतच्च सर्व-मन्ते द्रष्टव्यम् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये पञ्चमकाण्डे सप्तमप्रपाठके षष्ठोऽनुवाकः ॥ ६ ॥

---

( अथ पञ्चमाष्टके सप्तमप्रपाठके सप्तमोऽनुवाकः । )

---

यदाकूतात्समसुस्रोद्धृदो वा मनसो वा संभृतं चक्षुषो वा । तमनु प्रेहि सुकृतस्य लोकं यत्रर्षयः प्रथमजा ये पुराणाः । एतꣳ सधस्थ परि ते ददामि यमावहाच्छेवधिं जातवेदाः । अन्वागन्ता यज्ञपतिर्वो अत्र तꣳ स्म जानीत परमे व्योमन् । जानीतादेनं परमे व्योमन्देवाः सधस्था विद रूपमस्य । यदागच्छात् ( १ ) पथिभिर्देवयानैरिष्टापूर्ते कृणुतादाविरस्मै । सं प्र च्यवध्वमनु सं प्र यातामग्ने पथो देवयानान्कृणुध्वम् । अस्मिन्त्सधस्थे अध्युत्तरस्मिन्विश्वे देवा यजमानश्च सीदत । प्रस्तरेण परिधिना स्रुचा वेद्या च बर्हिषा । ऋचेमं यज्ञं नो वह सुवर्देवेषु गन्तवे । यदिष्टं यत्परादानं यद्दत्तं

(आकूतिमन्त्राभिधानम्)

या च दक्षिणा। तव (२) अग्निर्वैश्वकर्मणः सुवर्देवेषु नो दधत्। येना सहस्रं वहसि येनाग्ने सर्ववेदसम्। तेनेमं यज्ञं नो वह सुवर्देवेषु गन्तवे। येनाग्ने दक्षिणा युक्ता यज्ञं वहन्त्यृत्विजः। तेनेमं यज्ञं नो वह सुवर्देवेषु गन्तवे। येनाग्ने सुकृतः पथा मधोर्धारा व्यानशुः। तेनेमं यज्ञं नो वह सुवर्देवेषु गन्तवे। यत्र धारा अनपेता मधोर्घृतस्य च याः। तदग्निर्वैश्वकर्मणः सुवर्देवेषु नो दधत् (३)॥

(आगच्छात्तव्यानशुस्तेनेमं यज्ञं नो वह सुवर्देवेषु गन्तवे चतुर्दश च।)

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां पञ्चमाष्टके सप्तमप्रपाठके सप्तमोऽनुवाकः॥ ७॥

---

(अथ पञ्चमाष्टके सप्तमप्रपाठके सप्तमोऽनुवाकः।)

---

यत्। आकूतादित्या—कूतात्। समसुंस्रोदिति सम्—असुंस्रोत्। हृदः। वा। मनसः। वा। संभृतमिति सं—भृतम्। चक्षुषः। वा। तम्। अनु। प्रेति। इहि। सुकृतस्येति सु—कृतस्य। लोकम्। यत्र। ऋषयः। प्रथमजा इति प्रथम—जाः। ये। पुराणाः। एतम्। सधस्थेति सध—स्थ। परीति।

ते । ददामि । यम् । आवहादित्या—वहात् । शेवधिमिति शेव—धिम् । जातवेदा इति जात—वेदाः । अन्वागन्तेत्यनु—आगन्ता । यज्ञपतिरिति यज्ञ—पतिः । वः । अत्र । तम् । स्म । जानीत । परमे । व्योमन्निति वि—ओमन् । जानीतात् । एनम् । परमे । व्योमन्निति वि—ओमन् । देवाः । सधस्था इति सध—स्थाः । विद । रूपम् । अस्य । यत् । आगच्छादित्या—गच्छात् ( १ ) । पथिभिरिति पथि—भिः । देवयानैरिति देव—यानैः । इष्टापूर्ते इतीष्टा—पूर्ते । कृणुतात् । आविः । अस्मै । सम् । प्रेति । च्यवध्वम् । अन्विति । सम् । प्रेति । यात । अग्ने । पथः । देवयानानिति देव—यानान् । कृणुध्वम् । अस्मिन् । सधस्थ इति सध—स्थे । अधीति । उत्तरस्मिन्नित्युत्—तरस्मिन् । विश्वे । देवाः । यजमानः । च । सीदत । प्रस्तरेणेति प्र—स्तरेण । परिधिनेति परि—धिना । स्रुचा । वेद्या । च । बर्हिषा । ऋचा । इमम् । यज्ञम् । नः । वह । सुवः । देवेषु । गन्तवे । यत् । इष्टम् । यत् । परादानमिति परा—दानम् । यत् । दत्तम् । या । च । दक्षिणा । तत् ( २ ) । अग्निः । वैश्वकर्मण इति वैश्व—कर्मणः । सुवः ।

(आकूतिमन्त्राभिधानम्)

देवेषु। नः। दधत्। येन। सहस्रम्। वहसि। येन। अग्ने। सर्ववेदसमिति सर्व—वेदसम्। तेन। इमम्। यज्ञम्। नः। वह। सुवः। देवेषु। गन्तवे। येन। अग्ने। दक्षिणाः। युक्ताः। यज्ञम्। वहन्ति। ऋत्विजः। तेन। इमम्। यज्ञम्। नः। वह। सुवः। देवेषु। गन्तवे। येन। अग्ने। सुकृत इति सु—कृतः। पथा। मधोः। धाराः। व्यानशुरिति वि—आनशुः। तेन। इमम्। यज्ञम्। नः। वह। सुवः। देवेषु। गन्तवे। यत्र। धाराः। अनपेता इत्यनप—इताः। मधोः। घृतस्य। च। याः। तत्र। अग्निः। वैश्वकर्मण इति वैश्व—कर्मणः। सुवः। देवेषु। नः। दधत् (३)॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे पञ्चमाष्टके सप्तमप्रपाठके सप्तमोऽनुवाकः॥ ७॥

---

(अथ पञ्चमकाण्डे सप्तमप्रपाठके सप्तमोऽनुवाकः।)

---

व्रतेष्टकाप्रशंसा हि सर्वाः षष्ठे समीरिताः॥

अथ सप्तम आकूतिमन्त्रा उच्यन्ते।

यदुक्तं सूत्रकारेण—"यदाकूतादिति दशाऽऽकूतीर्हुत्वा" इति, तत्र प्रथमामाह—

यदाकूतात्समसुस्रोध्दृदो वा मनसो वा संभृतं

चक्षुषो वा। तमनु प्रेहि सुकृतस्य लोकं यत्रर्षयः प्रथमजा ये पुराणाः।, इति।

आकूतादिभिः संभृतं संपादितं यत्फलं पूर्वो यजमानसंघः समगुस्तो-त्सम्यक्प्राप्तवान्, हे यजमान त्वं सुकृतस्य लोकं त्वदीयस्य कर्मणः फलभूतं तं भोगमनुप्रेहि अनुक्रमेण प्राप्नुहि। आकूतं संकल्पोऽक्षयं सुखं प्राप्नोमीत्येवं-रूपः। त्वदयं चित्तं श्रुतिस्मृत्युदितसाधनोपायचिन्तनम्। मनोऽन्तःकरणं तदनुकूलप्रतिकूलप्रवृत्तिनिवृत्त्यात्मकम्। चक्षुःशब्देन दशेन्द्रियाणि लक्ष्यन्ते। यानि सम्यगनुष्ठानेनाभिमतं फलं साधयन्ति। एतैः सर्वैः संपादितं प्राप्नुही-त्यन्वयः। यत्र यस्मिन्सुकृतस्य लोके प्रथमजाः स्वयंभूप्रभृतय ऋषयः सर्वज्ञा आसते। ये च पुराणाः पूर्वे यजमानाः सन्ति तेऽपि यत्राऽऽसते तमनुप्रेहि॥

अथ द्वितीयामाह—

एतꣳ सधस्थ परि ते ददामि यमावहाच्छेवधिं जातवेदाः। अन्वागन्ता यज्ञपतिर्वो अत्र तꣳ स्म जानीत परमे व्योमन्।, इति।

हे सधस्थ ऋत्विग्यजमानैरस्माभिः सहास्यां यज्ञभूमाववस्थित हेऽग्ने ते तुभ्यमेतं यजमानं परिददामि रक्षार्थं त्वद्धस्ते ददामीत्यर्थः। जातवेदा उत्प-न्नानां प्राणिनां योगक्षेमाभिज्ञस्त्वं शेवधिं निधिवद्रक्षणीयं यं यजमानमावहा-दावहसि मदीयोऽयमिति स्वीकरोषि, तं यजमानं परिददामीति पूर्वत्रान्वयः। हे देवा यज्ञपतिरयं यजमानो वो युष्मानन्वागन्ता युष्माकं पृष्ठ आगमिष्यति। अत्रास्मिन्परमे व्योमन्नुत्कृष्टविशिष्टरक्षणयोग्ये स्थाने भवदीये लोके तं यजमानं जानीत स्म सर्वथा रक्षणीयोऽयमिति स्मरत॥

अथ तृतीयामाह—

जानीतादेनं परमे व्योमन्देवाः सधस्था विद रूपमस्य। यदागच्छात्पथिभिर्दे-वयानैरिष्टापूर्ते कृणुतादाविरस्मै।, इति।

हे देवाः परमे स्थाने भवदीये लोक एनं जानीताद्यजमानमविस्मृत्य सर्वदा रक्षार्थं स्मरत। हे सधस्था यजमानेन सह तस्मिन्पुण्यलोके स्थिता देवा अस्य यजमानस्य रूपमग्निचयनाद्यनुष्ठानयुक्तं स्वरूपं विद जानीत तस्मिँल्लोके पुनः

---

१ क. घ. ङ. च. 'यंभुप्र'।

( आकूतिमन्त्राभिधानम् )

पुनः स्मरत। देवयानैर्भवदीयगमनयोग्यैः पथिभिर्मार्गैर्यदागच्छाद्यो यजमान आगच्छति अस्मा एतद्यजमानार्थमिष्टापूर्ते श्रौतस्मार्तकर्मफले आविष्कृणुता-त्मकटी कुरुत, हे यजमान तवेदं श्रौतकर्मफलमिदं च स्मार्तकर्मफलमित्येवं सावधाना अनुगृह्णीतेत्यर्थः ॥

अथ चतुर्थीमाह—

संं प्र च्यवध्वमनु सं प्र यातायग्ने पथो देवया-
नान्कृणुध्वम् । अस्मिन्त्सधस्थे अध्युत्तर-
स्मिन्विश्वे देवा यजमानश्च सीदत।, इति।

हेऽग्ने त्वं विश्वे देवाः सर्वेऽपि देवा यजमानश्चेत्येते यूयं सर्वेऽपि संप्रच्यव-ध्वमस्माद्भूलोकस्थानात्सम्यक्प्रच[लत, च]लित्वा चानुसंप्रयातानन्तरं यजमा-नेन संगता एव गच्छत। गमनकाले च देवयानान्पथः कृणुध्वं, न तु नरकलो-कमनुष्यलोकमार्गः कर्तव्यः। सधस्थे यजमानेन सहावस्थानयोग्येऽस्मिन्यज्ञ-भूमिरूपे भूलोकेऽध्युत्तरस्मिन्फलभोगस्थाने स्वर्गलोके च सीदत यजमानो यूयं च सह तिष्ठत ॥

अथ पञ्चमीमाह—

प्रस्तरेण परिधिना स्रुचा वेद्या च बर्हिषा।
ऋचेमं यज्ञं नो वह सुवर्देवेषु गन्तवे।, इति।

हेऽग्ने •प्रस्तरादिभिः सर्वैर्यज्ञसाधनैः सहितं नोऽस्मदीयमिमं यज्ञं सुवः स्वर्गलोके वह प्रापय। किमर्थम्, देवेषु गन्तवे देवानां मध्ये गन्तुं, तेषां प्रदर्शना-र्थमित्यर्थः ॥

अथ षष्ठीमाह—

यदिष्टं यत्परादानं यद्दत्तं या च दक्षिणा। तद-
ग्निर्वैश्वकर्मणः सुवर्देवेषु नो दधत्।, इति।

दर्शपूर्णमासादिरूपं यत्कर्मेष्टमनुष्ठितं, यच्च परादानं दीनान्धकृपणादिभ्यः स्वल्पदानं, यदपि दत्तं बहिर्वेदि पात्रभूतेभ्योऽनूचानेभ्यो बहु द्रव्यं समर्पितं, या चान्या दक्षिणा यज्ञमध्ये गवादिरूपा दत्ता, नोऽस्मदीयं तत्सर्वं वैश्वकर्मणः कृत्स्नकर्मस्वामिभूतोऽयमग्निः सुवर्देवेषु स्वर्गलोकनिवासिषु देवेषु मध्ये दधत्स्थापयतु ॥

अथ सप्तमीमाह—

येना सहस्रं वहसि येनाग्ने सर्ववेदसम् । तेनेमं यज्ञं नो वह सुवर्देवेषु गन्तवे ।, इति ।

हेऽग्ने त्वं येन मार्गेण सहस्रं वहासि सहस्रदक्षिणाकं यज्ञं नयसि, येन च सर्ववेदसं सर्वस्वदक्षिणाकं यज्ञं नयसि, तेन मार्गेण नोऽस्मदीयमिमं यज्ञं वह नय । सुवरित्यादि पूर्ववत् ॥

अथाष्टमीमाह—

येनाग्ने दक्षिणा युक्ता यज्ञं वहन्त्यृत्विजः ।
तेनेमं यज्ञं नो वह सुवर्देवेषु गन्तवे ।, इति ।

[हेऽग्ने] ऋत्विजः सर्वे युक्ता योग्याः शास्त्रीया दक्षिणा यज्ञं चेमं येन शास्त्रीयेण मार्गेण वहन्ति निर्वहन्त्यनुतिष्ठन्तीत्यर्थः । तेनैव शास्त्रीयेण मार्गेणेमं यज्ञमित्यादि पूर्ववत् ॥

अथ नवमीमाह—

येनाग्ने सुकृतः पथा मधोर्धारा व्यानशुः ।
तेनेमं यज्ञं नो वह सुवर्देवेषु गन्तवे ।, इति ।

हेऽग्ने सुकृतः पूर्वे पुण्यकृतो यजमाना येन [पथा] मार्गेण गत्वा मधोर्मधुरस्य पीयूषस्य धारा व्यानशुर्व्याप्तवन्तस्तेनेत्यादि पूर्ववत् ॥

अथ दशमीमाह—

यत्र धारा अनपेता मधोर्घृतस्य च याः । तदग्निर्वैश्वकर्मणः सुवर्देवेषु नो दधत् ॥, इति ॥

यत्र यस्मिल्लोके मधोर्माक्षिकस्य घृतस्य च [या] धारा अनपेता अविच्छिन्ना- [स्ता]स्तत्र लोकेऽग्निरित्यादि पूर्ववत् । एते च दश मन्त्राः पूर्वस्मिन्मन्त्रकाण्डे ममाग्न इत्यनुवाकादूर्ध्वं द्रष्टव्याः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये पञ्चमकाण्डे सप्तमप्रपाठके सप्तमोऽनुवाकः ॥ ७ ॥

---

( अथ पञ्चमाष्टके सप्तमप्रपाठकेऽष्टमोऽनुवाकः । )

---

यास्ते अग्ने समिधो यानि धाम या जिह्वा जातवेदो यो अर्चिः । ये ते अग्ने मेडयो य इन्दवस्तेभिरात्मानं चिनुहि प्रजानन् । उत्सन्नयज्ञो वा एष यदग्निः किं वाऽहैतस्य क्रियते किं वा न यद्वा अध्वर्युरग्नेश्चिन्वन्नन्तरेत्यात्मनो वै तदन्तरेति यास्ते अग्ने समिधो यानि ( १ ) धामेत्याहैषा वा अग्नेः स्वयंचितिरग्निरेव तदग्निं चिनोति नाध्वर्युरात्मनोऽन्तरेति चतस्र आशाः प्र चरन्त्वग्नय इमं नो यज्ञं नयतु प्रजानन् । घृतं पिन्वन्नजरꣳ सुवीरं ब्रह्म समिद्भवत्याहुतीनाम् । सुवर्गाय वा एष लोकायोप धीयते यत्कूर्मश्चतस्र आशाः प्र चरन्त्वग्नय इत्याह ( २ ) दिश एवैतेन प्र जानातीमं नो यज्ञं नयतु प्रजानन्नित्याह सुवर्गस्य लोकस्याभिनीत्यै ब्रह्म समिद्भवत्याहुतीनामित्याह ब्रह्मणा वै देवाः सुवर्गं लोकमायन्यद्ब्रह्मण्वत्योपदधाति ब्रह्मणैव तद्यजमानः सुवर्गं लोकमेति प्रजापतिर्वा एष यदग्निस्तस्य प्रजाः पशवश्छन्दाꣳसि रूपꣳ सर्वान्वर्णानिष्ट-

कानां कुर्याद्रूपेणैव प्रजां पशूञ्छन्दाꣳस्यव॑ रुन्धेऽथो॑ प्रजाभ्य॑ एवैनं॑ पशुभ्यश्छन्दो॑भ्योऽवरुध्यं॑ चिनुते ( ३ ) ॥

( एति यास्ते॑ अग्ने समिधो यान्यग्नय इत्याहेष्टकानाꣳ षोडश च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां पञ्चमाष्टके सप्तमप्रपाठकेऽष्टमोऽनुवाकः ॥ ८ ॥

---

( अथ पञ्चमाष्टके सप्तमप्रपाठकेऽष्टमोऽनुवाकः । )

---

याः । ते । अग्ने । समिध इति॑ सम्—इधः॑ । यानि॑ । धाम॑ । या । जिह्वा । जातवेद इति॑ जात—वेदः । यः । अर्चिः । ये । ते । अग्ने । मेडय॑ः । ये । इन्द॑वः । तेभिः॑ । आत्मान॑म् । चिनुहि । प्रजानन्निति॑ प्र—जानन् । उत्सन्नयज्ञ इत्यु॑त्सन्न—यज्ञः । वै । एषः । यत् । अग्निः । किम् । वा । अह॑ । एतस्य॑ । क्रियते॑ । किम् । वा । न । यत् । वै । अध्वर्युः । अग्नेः । चिन्वन् । अन्तरेतीत्य॑न्तः—एति॑ । आत्मन॑ः । वै । तत् । अन्तः । एति । याः । ते । अग्ने । समिध इति॑ सम्—इधः॑ । यानि॑ ( १ ) । धाम॑ । इति॑ । आह । एषा । वै । अग्नेः । स्वयंचितिरिति॑ स्वयं—चितिः । अग्निः । एव । तत् । अग्निम् । चिनोति । न । अध्वर्युः । आत्मन॑ः ।

अन्तः। एति। चतस्रः। आशाः। प्रेति। चरन्तु। अग्नयः। इमम्। नः। यज्ञम्। नयतु। प्रजानन्निति प्र—जानन्। घृतम्। पिन्वन्। अजरम्। सुवीरमिति सु—वीरम्। ब्रह्म। समिदिति सम्—इत्। भवति। आहुतीनामित्या—हुतीनाम्। सुवर्गायेति सुवः—गाय। वै। एषः। लोकाय। उपेति। धीयते। यत्। कूर्मः। चतस्रः। आशाः। प्रेति। चरन्तु। अग्नयः। इति। आह ( २ )। दिशः। एव। एतेन। प्रेति। जानाति। इमम्। नः। यज्ञम्। नयतु। प्रजानन्निति प्र—जानन्। इति। आह। सुवर्गस्येति सुवः—गस्य। लोकस्य। अभिनीत्या इत्यभि—नीत्यै। ब्रह्म। समिदिति सम्—इत्। भवति। आहुतीनामित्या—हुतीनाम्। इति। आह। ब्रह्मणा। वै। देवाः। सुवर्गमिति सुवः—गम्। लोकम्। आयन्। यत्। ब्रह्मण्वत्येति ब्रह्मण्—वत्या। उपदधातीत्युप—दधाति। ब्रह्मणा। एव। तत्। यजमानः। सुवर्गमिति सुवः—गम्। लोकम्। एति। प्रजापतिरिति प्रजा—पतिः। वै। एषः। यत्। अग्निः। तस्य। प्रजा इति प्र—जाः। पशवः। छन्दांसि। रूपम्। सर्वान्। वर्णान्। इष्ट-

कानाम् । कुर्यात् । रूपेण । एव । प्रजामिति प्र—जाम् । पशून् । छन्दांसि । अवेति । रुन्धे । अथो इति । प्रजाभ्य इति प्र—जाभ्यः । एव । एनम् । पशुभ्य इति पशु—भ्यः । छन्दोभ्य इति छन्दः—भ्यः । अवरुध्येत्यव—रुध्य । चिनुते ( ३ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे पञ्चमाष्टके सप्तमप्रपाठकेऽष्टमोऽनुवाकः ॥ ८ ॥

---

( अथ पञ्चमकाण्डे सप्तमप्रपाठकेऽष्टमोऽनुवाकः । )

---

आकूत्याहुतिमन्त्रा ये ते सप्तम उदीरिताः ॥
अथाष्टमे स्वयंचित्यादिकमभिधीयते ।

यदुक्तं सूत्रकारेण—“यास्ते अग्ने समिध इति स्वयंचित्याऽभिमृशति” इति, तदेतद्विधातुं मन्त्रमुत्पादयति—

यास्ते अग्ने समिधो यानि धाम या जिह्वा जातवेदो यो अर्चिः । ये ते अग्ने मेडयो य इन्दवस्तेभिरात्मानं चिनुहि प्रजानन् । , इति ।

हे जातवेदोऽग्ने ते त्वदीयाः समिधः समिन्धनक्रिया याः सन्ति, यानि च धाम त्वदीयानि स्थानानि गार्हपत्यादीनि, या च जिह्वा त्वदीया काली करालीत्यादिका, योऽप्यर्चिः प्रकाशनसामर्थ्यं, हेऽग्ने ते त्वदीया ये मेडयः शब्दविशेषा ये चेन्दव इन्दुसदृशा विस्फुलिङ्गास्तेभिस्तैः सर्वैः प्रजानंश्चयनप्रकाराभिज्ञस्त्वमात्मानं चिनुहि स्वकीयस्वरूपमुपचितं कुरु ॥

अनेन मन्त्रेण साध्यस्य क्षेत्राभिमर्शनस्य विधिमुन्नयति—

उत्सन्नयज्ञो वा एष यदग्निः किं वाऽहैतस्य क्रियते किं वा न यद्वा अध्वर्युरग्नेश्चिन्वन्नन्तरेत्यात्मनो वै तदन्तरेति यास्ते अग्ने समिधो यानि

( स्वयंचित्याद्यभिधानम् )

धामेत्याहैषा वा अग्नेः स्वयंचितिरग्निरेव तदग्निं चिनोति नाध्वर्युरात्मनोऽन्तरेति , इति।

योऽयं चीयमानोऽग्निः सोऽयमुत्सन्नयज्ञः। बहुष्वङ्गेषु यस्य कस्यचिद्विस्मृतिसंभवेन विनष्टयज्ञत्वम्। अतोऽस्य यज्ञस्य किमङ्गमनुष्ठितं किं वा नेति ज्ञातुमशक्यम्। एवं च सति चिन्वानोऽयमध्वर्युरग्नेः संबन्धि यदङ्गमन्तरितं करोति तदात्मन एवाङ्गमन्तरितं कुर्यात्। अतस्तत्परिहाय क्षेत्राभिमर्शनकाले यास्ते अग्न इत्येतामृचं ब्रूयात्। येयं यास्ते अग्न इत्यृक्सैषा स्वयंचितिरित्यभिधीयते। आत्मानं चिनुहीत्येवं स्वेन स्वस्यैव चीयमानत्वाभिधानात्। तत्तेन मन्त्रपाठेनाग्निरेव स्वयमग्निं स्वात्मानं चिनोति। ततोऽध्वर्युः स्वसंबन्धि किंचिदप्यङ्गं नान्तरेति। एतदप्यग्ने तव श्रवो वय इत्यनुवाके द्रष्टव्यम्॥

यदुक्तं सूत्रकारेण—"मधु वाता ऋतायत इति तिसृभिर्दध्ना मधुमिश्रेण कूर्ममभ्यज्य मही द्यौः पृथिवी च न इति पुरस्तात्स्वयमातृण्णायाः प्रत्यञ्चं जीवन्तं प्राङ्मुखं उपदधाति चतस्र आशाः प्रचरन्त्वग्नय इति वोपधाय" इति,

तत्र कूर्मोपधाने विकल्पितं मन्त्रमुत्पादयति—

चतस्र आशाः प्र चरन्त्वग्नय इमं नो यज्ञं नयतु प्रजानन्। घृतं पिन्वन्नजरꣳ सुवीरं ब्रह्म समिद्भवत्याहुतीनाम् । , इति।

येऽग्नय आहवनीयादयः सन्ति ते चतस्रश्चतुःसंख्याका दिशः पूर्वाद्याः प्रचरन्तु, कूर्मस्य स्वर्गमार्गाभिज्ञानाय सर्वासु दिक्षु प्रकाशं कुर्वन्तु। अयं च कूर्मः प्रजानन्नस्मदीयं कर्म प्रकर्षेणावगच्छन्नोऽस्मदीयमिमं यज्ञं नयतु स्वर्गं प्रापयतु। किं कुर्वन्, अजरं विनाशरहितं सुवीरं शोभनवीर्यप्रदं घृतं मधुमिश्रमाज्यं पिन्वन्पिबन्। आहुतिप्रदानां यजमानानां ब्रह्म समिद्भवति मन्त्र एव स्वर्गमार्गप्रकाशको भवति॥

अनेन मन्त्रेण साध्यं कूर्मोपधानं पूर्वमेव विहितं "यज्जीवन्तं कूर्ममुपदधाति" इति। अत्र तु मन्त्रमेतं विनियोगक्रमादौ तदर्थः प्रकाश्यते। तत्र प्रथमपादस्य तात्पर्यं दर्शयति—

सुवर्गाय वा एष लोकायोपधीयते

---

१ क. °नोऽभय°। २ ख. च. °न्तं कूर्मं प्रा°। ३ ख. च. °समुप°। ४ क ख. घ. ङ. च. °धातीति।

यत्कूर्मश्चतस्र आशाः प्र चरन्त्वग्नय
इत्याह दिश एवैतेन प्र जानाति, इति ।

स्वर्गलोके नेतुमयं कूर्म उपधीयते । अतो मार्गाभिज्ञानायैतेन पादेन दिक्प्रकाशनं प्रार्थ्यते ॥

द्वितीयपादस्य तात्पर्यं दर्शयति—

इमं नो यज्ञं नयतु प्रजानन्नित्याह
सुवर्गस्य लोकस्याभिनीत्यै , इति ।

नयत्विति सामान्येनोक्तेऽपि स्वर्गं प्रत्येव गमनमत्र विवक्षितम् ॥

चतुर्थपादस्य तात्पर्यं दर्शयति—

ब्रह्म समिद्धवत्याहुतीनामित्याह ब्रह्मणा
वै देवाः सुवर्गं लोकमायन् , इति ।

आहुतिप्रदाः पूर्वे देवा मन्त्रसामर्थ्येनैव स्वर्गं प्राप्ताः । अतो मन्त्र एव प्रकाशसाधनम् ॥

व्याख्यातमेतं मन्त्रं विनियुङ्क्ते—

यद्ब्रह्मण्वत्योपदधाति ब्रह्मणैव तद्य-
जमानः सुवर्गं लोकमेति , इति ।

ब्रह्मशब्दो यस्यामृच्यस्ति सेयं ब्रह्मण्वती । तदिदं ब्राह्मणं स्वयमातृण्णामुपदधातीत्यनुवाके द्रष्टव्यम् ॥

यदुक्तं सूत्रकारेण "सर्वान्वर्णानिष्टकानां कुर्याल्लेखाधिकारो भवतीति विज्ञायते च या दक्षिणावृतस्ता दक्षिणत उपदध्यात्सव्यावृत उत्तरत ऋजुलेखाः पश्चात्पुरस्ताच्च व्यालिखिता मध्ये" इति, तदेतत्सर्वं विधत्ते—

प्रजापतिर्वा एष यदग्निस्तस्य प्रजाः पशवश्छ-
न्दाꣳसि रूपꣳ सर्वान्वर्णानिष्टकानां कुर्याद्रूपे-
णैव प्रजां पशूञ्छन्दाꣳस्यव रुन्धे , इति ।

चीयमानोऽग्निः प्रजापतिजन्यत्वात्प्रजापतिरेव । तस्य च प्रजापतेः प्रजा-

---

१ क. ख. ग. °वति ।

( अग्निग्रहणाद्यभिधानम् )

पशुच्छन्दांसि परस्परविलक्षणानि स्वरूपम् । अतस्तद्रूपप्रत्यभिज्ञानायेष्टकानां सर्वान्वर्णान्बहुविधरेखाविशेषान्कुर्यात् । एवं सति प्रजापतिरूपेणैव *प्रजापतिं प्राप्नोति ॥

+अथो प्रजाभ्य एवैनं पशुभ्यश्छन्दोभ्योऽवरुध्य चिनुते ॥ , इति ॥

अपि च प्रजादिभिरेवैनमग्निं स्वाधीनं कृत्वा चितवान्भवति । एतदपि स्वयमातृण्णामुपदधातीत्यनुवाके द्रष्टव्यम् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये पञ्चमकाण्डे सप्तमप्रपाठकेऽष्टमोऽनुवाकः ॥ ८ ॥

---

( अथ पञ्चमाष्टके सप्तमप्रपाठके नवमोऽनुवाकः । )

---

मयि गृह्णाम्यग्रे अग्निꣳ रायस्पोषाय सुप्रजास्त्वाय सुवीर्याय । मयि प्रजां मयि वर्चो दधाम्यरिष्टाः स्याम तनुवा सुवीराः । यो नो अग्निः पितरो हृत्स्वन्तरमर्त्यो मर्त्याꣳ आविवेश । तमात्मन्परि गृह्णीमहे वयं मा सो अस्माꣳ अवहाय परा गात् । यदध्वर्युरात्मन्नग्निमगृहीत्वाऽग्निं चिनुयाद्योऽस्य स्वोऽग्निस्तमपि (१) यजमानाय चिनुयादग्निं खलु वै पशवोऽनूप तिष्ठन्तेऽपक्रामुका अस्मात्पशवः

---

* अत्र 'प्रजादीन्' इति भवितुं युक्तम् । + अस्यावतरणिका त्रुटितेति प्रतिभाति ।

स्युर्मयि गृह्णाम्यग्रे अग्निमित्याहाऽऽत्मन्नेव स्वमग्निं दाधार नास्मात्पशवोऽप क्रामन्ति ब्रह्मवादिनो वदन्ति यन्मृच्चाऽऽपश्चाग्नेरनाद्यमथ कस्मान्मृदा चाद्भिश्चाग्निश्चीयत इति यदद्भिः संयौति ( २ ) आपो वै सर्वा देवता देवताभिरेवैनꣳ सꣳ सृजति यन्मृदा चिनोतीयं वा अग्निर्वैश्वानरोऽग्निनैव तदग्निं चिनोति ब्रह्मवादिनो वदन्ति यन्मृदा चाद्भिश्चाग्निश्चीयतेऽथ कस्मादग्निरुच्यत इति यच्छन्दोभिश्चिनोत्यग्नयो वै छन्दाꣳसि तस्मादग्निरुच्यतेऽथो इयं वा अग्निर्वैश्वानरो यत् ( ३ ) मृदा चिनोति तस्मादग्निरुच्यते हिरण्येष्टका उप दधाति ज्योतिर्वै हिरण्यं ज्योतिरेवास्मिन्दधात्यथो तेजो वै हिरण्यं तेज एवाऽऽत्मन्धत्ते यो वा अग्निꣳ सर्वतोमुखं चिनुते सर्वासु प्रजास्वन्नमत्ति सर्वा दिशोऽभि जयति गायत्रीं पुरस्तादुप दधाति त्रिष्टुभं दक्षिणतो जगतीं पश्चादनुष्टुभमुत्तरतः पङ्क्तिं मध्य एष वा अग्निः सर्वतोमुखस्तं य एवं विद्वाꣳश्चिनुते सर्वासु प्रजा-

( अग्निग्रहणायाभिधानम् )

स्वन्नमत्ति सर्वा दिशोऽभि जयत्यथो दिश्येव
दिशं प्र वयति तस्माद्दिशि दिक्प्रोता (४)॥

( अपि संयैति वैश्वानरो यदेष वै पञ्चविंशतिश्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां पञ्चमाष्टके
सप्तमप्रपाठके नवमोऽनुवाकः ॥ ९ ॥

---

( अथ पञ्चमाष्टके सप्तमप्रपाठके नवमोऽनुवाकः । )

---

मयि । गृह्णामि । अग्रे । अग्निम् । रायः । पोषाय । सुप्रजास्त्वायेति सुप्रजाः—त्वाय । सुवीर्यायेति सु—वीर्याय । मयि । प्रजामिति प्र—जाम् । मयि । वर्चः । दधामि । अरिष्टाः । स्याम । तनुवा । सुवीरा इति सु—वीराः । यः । नः । अग्निः । पितरः । हृत्स्वितिं हृत्—सु । अन्तः । अमर्त्यः । मर्त्यान् । आविवेशेत्या—विवेश । तम् । आत्मन् । परीति । गृह्णीमहे । वयम् । मा । सः । अस्मान् । अवहायेत्यव—हाय । परेति । गात् । यत् । अध्वर्युः । आत्मन् । अग्निम् । अगृहीत्वा । अग्निम् । चिनुयात् । यः । अस्य । स्वः । अग्निः । तम् । अपीति (१)। यजमानाय । चिनुयात् । अग्निम् । खलु । वै । पशवः । अनु । उपेति । तिष्ठन्ते ।

अपक्रामुका इत्यप—क्रामुकाः । अस्मात् । पशवः । स्युः । मयि । गृह्णामि । अग्रे । अग्निम् । इति । आह । आत्मन् । एव । स्वम् । अग्निम् । दाधार । न । अस्मात् । पशवः । अपेति । क्रामन्ति । ब्रह्मवादिन इति ब्रह्म—वादिनः । वदन्ति । यत् । मृत् । च । आपः । च । अग्नेः । अनाद्यम् । अथ । कस्मात् । मृदा । च । अद्भिरित्यत्—भिः । च । अग्निः । चीयते । इति । यत् । अद्भिरित्यत्—भिः । संयौतीति सं—यौति ( २ ) । आपः । वै । सर्वाः । देवताः । देवताभिः । एव । एनम् । समिति । सृजति । यत् । मृदा । चिनोति । इयम् । वै । अग्निः । वैश्वानरः । अग्निना । एव । तत् । अग्निम् । चिनोति । ब्रह्मवादिन इति ब्रह्म—वादिनः । वदन्ति । यत् । मृदा । च । अद्भिरित्यत्—भिः । च । अग्निः । चीयते । अथ । कस्मात् । अग्निः । उच्यते । इति । यत् । छन्दोभिरिति छन्दः—भिः । चिनोति । अग्नयः । वै । छन्दांसि । तस्मात् । अग्निः । उच्यते । अथो इति । इयम् । वै । अग्निः । वैश्वानरः । यत् ( ३ ) । मृदा । चिनोति । तस्मात् । अग्निः । उच्यते । हिरण्येष्टका इति हिरण्य—इष्टकाः ।

उपेति । दधाति । ज्योतिः । वै । हिरण्यम् । ज्योतिः । एव । अस्मिन् । दधाति । अथो इति । तेजः । वै । हिरण्यम् । तेजः । एव । आत्मन् । धत्ते । यः । वै । अग्निम् । सर्वतोमुखमिति सर्वतः—मुखम् । चिनुते । सर्वासु । प्रजास्विति प्र—जासु । अन्नम् । अत्ति । सर्वाः । दिशः । अभीति । जयति । गायत्रीम् । पुरस्तात् । उपेति । दधाति । त्रिष्टुभम् । दक्षिणतः । जगतीम् । पश्चात् । अनुष्टुभमित्यनु—स्तुभम् । उत्तरत इत्युत्—तरतः । पङ्क्तिम् । मध्ये । एषः । वै । अग्निः । सर्वतोमुख इति सर्वतः—मुखः । तम् । यः । एवम् । विद्वान् । चिनुते । सर्वासु । प्रजास्विति प्र—जासु । अन्नम् । अत्ति । सर्वाः । दिशः । अभीति । जयति । अथो इति । दिशि । एव । दिशम् । प्रेति । वयति । तस्मात् । दिशि । दिक् । प्रोतेति प्र—उता ( ४ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे पञ्चमाष्टके सप्तमप्रपाठके नवमोऽनुवाकः ॥ ९ ॥

---

( अथ पञ्चमकाण्डे सप्तमप्रपाठके नवमोऽनुवाकः । )

---

स्वयंचितिश्च कूर्मादिरष्टमे समुदीरितः ॥

अथ नवमेऽग्निग्रहणादिकमभिधीयते ।

यदुक्तं सूत्रकारेण " मयि गृह्णाम्यग्रे अग्निं यो नो अग्निः पितर इति द्वाभ्या-मात्मन्नग्निं गृहीत्वा " इति, तत्र प्रथमामाह—

मयि गृह्णाम्यग्रे अग्निꣳ रायस्पोषाय सुप्र-
जास्त्वाय सुवीर्याय । मयि प्रजां मयि वर्चो
दधाम्यरिष्टाः स्याम तनुवा सुवीराः ।, इति ।

अग्रे परकीयस्याग्नेश्चयनात्पूर्वमग्निं स्वकीयं पूर्वसिद्धं वह्निं मयि गृह्णामि स्वात्मन्येव यथा स्थिरो भवति तथा स्वी करोमि । किमर्थं, धनपुष्टिशोभनापत्य-शोभनभृत्या (वीर्या) र्थमस्य गृहीतस्याग्नेः प्रसादात्प्रजामुत्पत्स्यमानां पुत्रादिकां मयि स्थापयामि । वर्चः शारीरं बलं च मयि स्थापयामि । सुवीराः शोभन-पुत्रभृत्योपेता वयं तनुवा मदीयेन शरीरेण सहारिष्टा हिंसारहिताः स्याम ॥

अथ द्वितीयामाह—

यो नो अग्निः पितरो हृत्स्वन्तरमर्त्यो मर्त्याꣳ
आविवेश । तमात्मन्परि गृह्णीमहे वयं मा
सो अस्माꣳ अवहाय परा गात् ।, इति ।

हे पितरः पालका अस्मच्छरीरगता भूतेन्द्रियविशेषा अमर्त्यो मरणरहितो योऽग्निर्हृत्स्वन्तर्हृदयाद्यवयवेषु मध्ये मर्त्यान्मरणयोग्यानस्मानाविवेश सर्वतः प्रविष्टस्तमग्निं वयमात्मन्परिगृह्णीमहे स्वशरीर एव स्थिरं धारयामः । सोऽग्नि-रस्मानवहाय परित्यज्य मा परागादन्यत्र मा गच्छतु ॥

एतन्मन्त्रद्वयसाध्यमग्निग्रहणं विधत्ते—

यदध्वर्युरात्मन्नग्निमगृहीत्वाऽग्निं चिनुया-
द्योऽस्य स्वोऽग्निस्तमपि यजमानाय चिनु-
यादग्निं खलु वै पशवोऽनूप तिष्ठन्तेऽप-
क्रामुका अस्मात्पशवः स्युर्मयि गृह्णा-
म्यग्रे अग्निमित्याहाऽऽत्मन्नेव स्वमग्निं
दाधार नास्मात्पशवोऽप क्रामन्ति, इति ।

यद्ययमध्वर्युर्मयि गृह्णामीतिमन्त्राभ्यां स्वकीयमग्निं स्वस्मिन्नगृहीत्वा परार्थ-मग्निं चिनुयात्तदानीमस्याध्वर्योर्यः स्वकीयः पूर्वचितोऽग्निस्तमपि यजमानार्थ-

---

१ ग. घ. ङ. च. 'वैमेव चि' ।

मेव चित्तवान्भवति। पशवश्च सर्वेऽप्यऽग्निमनुसेवन्ते। अतोऽपक्रामन्तमग्निमनु पशवोऽप्यस्माद्ध्वर्योरपक्रामन्ति। अतस्तत्परिहर्तु ।ग्निग्रहणाय मयि गृह्णामीति मन्त्रद्वयं ब्रूयात्। तेन स्वकीयमग्निं स्वस्मिन्नेव धारयति। पशवोऽप्यस्मान्नापक्रामन्ति। एतदपि पूर्वब्राह्मणेन सह द्रष्टव्यम् ॥

अथ प्रश्नोत्तराभ्यां चयनं प्रशंसति—

ब्रह्मवादिनो वदन्ति यन्मृच्चाऽऽपश्चाग्नेरनाद्यमथ कस्मान्मृदा चाद्भिश्चाग्निश्चीयत इति यदद्भिः संयौत्यापो वै सर्वा देवता देवताभिरेवैनꣳ सꣳ सृजति यन्मृदा चिनोतीयं वा अग्निर्वैश्वानरोऽग्निनैव तदग्निं चिनोति, इति।

मृत्तिका चाऽऽपश्चेति यदस्ति तदुभयमग्नेर्भक्ष्यं न भवति। अतो भक्ष्यमाज्यपुरोडाशादिकं विहाय कस्मादेताभ्यां मृज्जलाभ्यामिष्टकारूपाभ्यामग्निश्चीयत इति ब्रह्मवादिनां प्रश्नः। तत्राभिज्ञा एवमुत्तरमाहुः—यद्यप्यापो न भक्ष्यास्तथाऽप्यद्भिर्मृत्तिकां मिश्रयतीति यत्तेन देवताभिरेवाग्निं संयोजयति। अपां सर्वदेवतात्मकत्वात्। वृत्रवधादाविन्द्रस्य सहकारित्वेनापां सर्वदेवोपकारित्वात्सर्वदेवतात्मकत्वम्। अतः सर्वदेवतासंयोजनायाद्भिश्चयनं युक्तम्। तथा मृदा चयनं यदस्ति तदपि युक्तम्। भूमेर्वैश्वानराग्निरूपत्वात्तद्रूपत्वं च "तस्मादिमां वयाꣳसि नक्तं नाध्यासते" इत्यत्रोपपादितम्। अतो मृद्रूपेणाग्निनैव तमग्निं चिनुत इत्येतदुपपन्नम् ॥

इदानीं मृज्जलाभ्यां चयनमङ्गीकृत्य तस्याश्चितेरग्नित्वं प्रश्नोत्तराभ्यां प्रतिपादयति—

ब्रह्मवादिनो वदन्ति यन्मृदा चाद्भिश्चाग्निश्चीयतेऽथ कस्मादग्निरुच्यत इति यच्छन्दोभिश्चिनोत्यग्नयो वै छन्दाꣳसि तस्मादग्निरुच्यतेऽथो इयं वा अग्निर्वैश्वानरो यन्मृदा चिनोति तस्मादग्निरुच्यते, इति।

इयमग्न्याख्या चितिर्मृज्जलाभ्यामेव निष्पाद्यते न त्वङ्गारैर्ज्वालाभिर्वा। तथा सति कस्मात्कारणादग्निनाम संपन्नमिति ब्रह्मवादिनां प्रश्नः। तत्राभिज्ञा उत्तरमाहुः—न केवलं मृज्जलाभ्यामेव चयनं किंतु च्छन्दोयुक्तैर्मन्त्रैरपि। छन्दांसि चाग्निस्वरूपाणि, " अभि त्वा देव सवितः " इत्यादिभिर्मन्त्रगतैश्छन्दोभिर्मन्थनहेतुभिरग्नेरुत्पाद्यत्वात्। अतश्छन्दोद्वारा चितेरग्नित्वम्। अपि च भूमेर्वैश्वानरत्वमिदानीमेवोदाहृतम्। अतो मृत्कार्यत्वादग्नित्वं युक्तम्। एतद्ब्राह्मणमन्ते द्रष्टव्यम् ॥

यदुक्तं सूत्रकारेण—" हिरण्येष्टकाभिः सर्वतोमुखमुपदधाति गायत्रीं पुरस्तादुपदधातीत्युक्तम् " इति, तदिदं विधत्ते—

हिरण्येष्टका उप दधाति ज्योतिर्वै हिरण्यं ज्योतिरेवास्मिन्दधात्यथो तेजो वै हिरण्यं तेज एवाऽऽत्मन्धत्ते , इति।

ज्योतिष्ट्वमितरप्रकाशकत्वम्। तेजः प्रसिद्धं, कान्तिः ॥

प्रपाठकादावाग्नेय्या गायत्र्येत्यादिना नाचिकेतचयनप्रकरणाम्नाता गायत्र्यादय उदाहृतास्तांश्च मन्त्रानत्र हिरण्येष्टकोपधाने विनियुङ्क्ते—

यो वा अग्निꣳ सर्वतोमुखं चिनुते सर्वासु प्रजास्वन्नमत्ति सर्वा दिशोऽभि जयति गायत्रीं पुरस्तादुप दधाति त्रिष्टुभं दक्षिणतो जगतीं पश्चादनुष्टुभमुत्तरतः पङ्क्तिं मध्य एष वा अग्निः सर्वतोमुखस्तं य एवं विद्वाꣳश्चिनुते सर्वासु प्रजास्वन्नमत्ति सर्वा दिशोऽभि जयत्यथो दिश्येव दिशं प्र वयति तस्माद्दिशि दिक्प्रोता ॥ , इति ॥

या हिरण्येष्टका तदेवाग्नेर्मुखं, ताश्चेष्टकाः सर्वा दिशोऽभिजयेतः सर्वासु दिक्षु विद्यन्त इत्ययमग्निः सर्वतोमुखः। एतस्य चयने सति स्वगृहवर्तिप्रजास्विव सर्वदिग्वर्तिप्रजासु स्निग्धो भूत्वाऽन्नमत्ति। अत एव सर्वा दिशोऽनेन जिता भवन्ति। पुनरप्यन्ते फलाभिधानमुपसंहाराय। अपि च सर्वासु दिक्षु

१ ख. °ता मन्त्राद°। २ ख. °यन्तः स°।

( पशुशीर्षाभिधानम् )

प्र(प्रा)धाने(न्ये)नैकस्यां दिश्यन्यां दिशं प्रवयति सूच्या वस्त्रमिव श्लिष्टां करोति। अत एव लोकेऽप्येकस्यां दिश्यन्या दिक्प्रोता वर्तते । आग्नेयादिविदिक्षु द्वयोर्दिगन्तयोः संश्लेषात्। इदं च ब्राह्मणं नक्षत्रेष्टकाभ्य ऊर्ध्वं द्रष्टव्यम् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये पञ्चमकाण्डे सप्तमप्रपाठके नवमोऽनुवाकः ॥ ९ ॥

---

( अथ पञ्चमाष्टके सप्तमप्रपाठके दशमोऽनुवाकः । )

---

प्रजापतिरग्निमसृजत सोऽस्मात्सृष्टः प्राङ्-
प्राद्रवत्तस्मा अश्वं प्रत्यास्यत्स दक्षिणाऽव-
र्तत तस्मै वृष्णिं प्रत्यास्यत्स प्रत्यङ्ङाऽवर्तत
तस्मा ऋषभं प्रत्यास्यत्स उदङ्ङाऽवर्तत
तस्मै बस्तं प्रत्यास्यत्स ऊर्ध्वोऽद्रवत्तस्मै पुरुषं
प्रत्यास्यद्यत्पशुशीर्षाण्युपदधाति सर्वत एवै-
नम् ( १ ) अवरुध्य चिनुत एता वै प्राणभृ-
तश्चक्षुष्मतीरिष्टका यत्पशुशीर्षाणि यत्पशु-
शीर्षाण्युपदधाति ताभिरेव यजमानोऽमुष्मि-
ल्ँलोके प्राणित्यथो ताभिरेवास्मा इमे लोकाः
प्र भान्ति मृदाऽभिलिप्योप दधाति मेध्य-
त्वाय पशुर्वा एष यदग्निरन्नं पशव एष खलु
वा अग्निर्यत्पशुशीर्षाणि यं कामयेत कनी-
योऽस्यान्नम् ( २ ) स्यादिति संतरां तस्य

पशुशीर्षाण्युपं दध्यात्कनीय एवास्यान्नं भवति यं कामयेत समावंदस्यान्नं स्यादिति मध्यतस्तस्योपं दध्यात्समावंदेवास्यान्नं भवति यं कामयेत भूयोऽस्यान्नं स्यादित्यन्तेषु तस्य व्युदूह्योपं दध्यादन्तत एवास्मा अन्नमवं रुन्धे भूयोऽस्यान्नं भवति ( ३ ) ॥

( एनमस्यान्नं भूयोऽस्यान्नं भवति । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां पञ्चमाष्टके सप्तमप्रपाठके दशमोऽनुवाकः ॥ १० ॥

---

( अथ पञ्चमाष्टके सप्तमप्रपाठके दशमोऽनुवाकः । )

---

प्रजापतिरिति प्रजा—पतिः । अग्निम् । असृजत । सः । अस्मात् । सृष्टः । प्राङ् । प्रेति । अद्रवत् । तस्मै । अश्वम् । प्रतीति । आस्यत् । सः । दक्षिणा । एति । अवर्तत । तस्मै । वृष्णिम् । प्रतीति । आस्यत् । सः । प्रत्यङ् । एति । अवर्तत । तस्मै । ऋषभम् । प्रतीति । आस्यत् । सः । उदङ् । एति । अवर्तत । तस्मै । बस्तम् । प्रतीति । आस्यत् । सः । ऊर्ध्वः । अद्रवत् । तस्मै । पुरुषम् । प्रतीति । आस्यत् । यत् । पशुशीर्षाणीति पशु—शीर्षाणि । उपदधातीत्युप—दधाति । सर्वतः । एव । एनम्

( १ )। अवरुध्येत्यव—रुध्यं। चिनुते। एताः। वै। प्राणभृत इति प्राण—भृतः। चक्षुष्मतीः। इष्टकाः। यत्। पशुशीर्षाणीति पशु—शीर्षाणि। यत्। पशुशीर्षाणीति पशु—शीर्षाणि। उपदधातीत्युप—दधाति। ताभिः। एव। यजमानः। अमुष्मिन्। लोके। प्रेति। अनिति। अथो इति। ताभिः। एव। अस्मै। इमे। लोकाः। प्रेति। भान्ति। मृदा। अभिलिप्येत्यभि—लिप्य। उपेति। दधाति। मेध्यत्वायेति मेध्य—त्वाय। पशुः। वै। एषः। यत्। अग्निः। अन्नम्। पशवः। एषः। खलु। वै। अग्निः। यत्। पशुशीर्षाणीति पशु—शीर्षाणि। यम्। कामयेत। कनीयः। अस्य। अन्नम् (२)। स्यात्। इति। संतरामिति सं—तराम्। तस्य। पशुशीर्षाणीति पशु—शीर्षाणि। उपेति। दध्यात्। कनीयः। एव। अस्य। अन्नम्। भवति। यम्। कामयेत। समावत्। अस्य। अन्नम्। स्यात्। इति। मध्यतः। तस्य। उपेति। दध्यात्। समावत्। एव। अस्य। अन्नम्। भवति। यम्। कामयेत। भूयः। अस्य। अन्नम्। स्यात्। इति। अन्तेषु। तस्य। व्युदूह्येति वि—उदूह्य। उपेति। दध्यात्। अन्ततः। एव।

अस्मै । अन्नम् । अवेति । रुन्धे । भूयः । अस्य । अन्नम् । भवति ( ३ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे पञ्चमाष्टके सप्तमप्रपाठके दशमोऽनुवाकः ॥ १० ॥

---

( अथ पञ्चमकाण्डे सप्तमप्रपाठके दशमोऽनुवाकः । )

---

अग्निग्रहः सर्वमुखं सप्रोतं नवमे श्रुतम्(?) ॥

अथ दशमे पशुशीर्षाण्युच्यन्ते ।

यत्पूर्वं द्वितीयप्रपाठके विहितं पशुशीर्षाण्युपदधातीति तदत्रानूद्य प्रशंसति—

प्रजापतिरग्निमसृजत सोऽस्मात्सृष्टः प्राङ्प्राद्रवत्तस्मा अश्वं प्रत्यास्यत्स दक्षिणाऽवर्तत तस्मै वृष्णिं प्रत्यास्यत्स प्रत्यङ्ङाऽवर्तत तस्मा ऋषभं प्रत्यास्यत्स उदङ्ङाऽवर्तत तस्मै बस्तं प्रत्यास्यत्स ऊर्ध्वोऽद्रवत्तस्मै पुरुषं प्रत्यास्यद्यत्पशुशीर्षाण्युपदधाति सर्वत एवैनमवरुध्य चिनुते , इति ।

प्रजापतिना सृष्टोऽग्निर्यदा पूर्वस्यां दिशि पलायते तदा तन्निवारणायाश्वं तत्प्रातिकूल्येन स्थापितवान्। एवं दिगन्तरेष्वपि योज्यम् । अतः पशुशीर्षाणामुपधाने सत्यग्नेः पूर्वतः पलायनं निवार्य तमग्निं चिनोति ॥

प्रकारान्तरेण पशुशीर्षाणि प्रशंसति—

एता वै प्राणभृतश्चक्षुष्मतीरिष्टका यत्पशुशीर्षाणि यत्पशुशीर्षाण्युपदधाति ताभिरेव यजमानोऽमुष्मिँल्लोके प्राणित्यथो ताभिरेवास्मा इमे लोकाः प्र भान्ति , इति ।

( पशुशीर्षाभिधानम् )

पशुशीर्षाणां प्राणभृत्त्वं चक्षुष्मत्त्वं च भूतपूर्वगत्या द्रष्टव्यम्। तदुपधानेन यजमानः स्वर्गे प्राणिति चिरं जीवति। अपि च यजमानार्थमिमे सर्वे लोकाः पशुशीर्षेष्टकाभिः प्रकर्षेण भासन्ते ॥

तदुपधाने कंचिद्विशेषं विधत्ते—

मृदाऽभिलिप्योप दधाति मेध्यत्वाय, इति।

मृतानां पशुशीर्षाणां मृल्लेपेन मृन्मयत्वे सति यज्ञयोग्यं(ग्यत्वं)भवति ॥

अथान्वयव्यतिरेकाभ्यामपरं विशेषं विधत्ते—

पशुर्वा एष यदग्निरन्नं पशव एष खलु वा अग्निर्यत्पशुशीर्षाणि यं कामयेत कनीयोऽस्यान्नꣳ स्यादिति संतरां तस्य पशुशीर्षाण्युप दध्यात्कनीय एवास्यान्नं भवति यं कामयेत समावदस्यान्नꣳ स्यादिति मध्यतस्तस्योप दध्यात्समावदेवास्यान्नं भवति यं कामयेत भूयोऽस्यान्नꣳ स्यादित्यन्तेषु तस्य व्युदूह्योप दध्यादन्तत एवास्मा अन्नमव रुन्धे भूयोऽस्यान्नं भवति ॥, इति ॥

अयमग्निः पशुसाधनत्वात्पशुरूपः। पशवश्चान्नसाधनत्वादन्नरूपाः। पशुशीर्षाणि चाग्निनिष्पादकत्वादग्निरूपाणि। एवं सत्यन्नाल्पत्वकामनायां संतरां संनिकृष्टतराणि यथा भवन्ति तथोपदध्यात्। ततोऽन्नमल्पमेव भवति। अथ नात्यल्पं नापि बहुलं किंतु समावत्समं जीवनमात्रपर्याप्तमन्नं स्यादिति कामनायां मध्यत उपदध्यात्। नात्यन्तं संनिकर्षो नाप्यतिविप्रकर्षः। तथा सति जीवनमात्रपर्याप्तमेवान्नं भवति। अथान्नभूयस्त्वकामनायां चितेरन्तेषु परस्परं व्युदूह्य [ व्युदूहनं ] यथा भवति तथा पशुशीर्षाण्यपसार्योपदध्यात्। तथा सति सर्वस्मादपि दिगन्ततोऽस्यान्नमधीनं भवति। ततोऽतिबहुलं संपद्यते। एतच्च सर्वमेषां वा एतल्लोकानामित्यनुवाके द्रष्टव्यम् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये पञ्चमकाण्डे सप्तमप्रपाठके दशमोऽनुवाकः ॥ १० ॥

---

( अथ पञ्चमाष्टके सप्तमप्रपाठक एकादशोऽनुवाकः । )

---

स्तेगान्दꣳष्ट्राभ्यां मण्डूकाञ्जम्भ्येभिरादकां खादेनोर्जꣳ सꣳसूदेनारण्यं जाम्बीलेन मृदं बर्स्वेभिः शर्कराभिरवकामवकाभिः शर्करामुत्सादेन जिह्वामवक्रन्देन तालुꣳ सरस्वतीं जिह्वाग्रेण ( १ ) ॥

( स्तेगान्द्वाविꣳशतिः । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां पञ्चमाष्टके सप्तमप्रपाठक एकादशोऽनुवाकः ॥ ११ ॥

---

( अथ पञ्चमाष्टके सप्तमप्रपाठक एकादशोऽनुवाकः । )

---

स्तेगान् । दꣳष्ट्राभ्याम् । मण्डूकान् । जम्भ्येभिः । आदकाम् । खादेन । ऊर्जम् । सꣳसूदेनेति सं—सूदेन । अरण्यम् । जाम्बीलेन । मृदम् । बर्स्वेभिः । शर्कराभिः । अवकाम् । अवकाभिः । शर्कराम् । उत्सादेनेत्युत्—सादेन । जिह्वाम् । अवक्रन्देनेत्यव—क्रन्देन । तालुम् । सरस्वतीम् । जिह्वाग्रेणेति जिह्वा—अग्रेण ( १ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे पञ्चमाष्टके सप्तमप्रपाठक एकादशोऽनुवाकः ॥ ११ ॥

---

(अथ पञ्चमकाण्डे सप्तमप्रपाठक एकादशोऽनुवाकः।)

---

विशेषः पश्चिमेषु दशमे समुदीरितः॥

समाप्तं चैतावताऽग्निब्राह्मणम्। अथाश्वमेधाङ्गमन्त्राः केचिदत्रोच्यन्ते। यदुक्तं सूत्रकारेण—"हविषा प्रचर्याऽऽज्यमवदानं कृत्वा स्तेगान्दꣳष्ट्राभ्यां मण्डूकाञ्जम्भ्येभिरित्येतैश्चतुर्दशभिरनुवाकैः प्रतिमन्त्रं शरीरहोमाञ्जुहोति" इति, तत्र प्रथमानुवाकगतान्मन्त्रानाह—

स्तेगान्दꣳष्ट्राभ्यां मण्डूकाञ्जम्भ्येभिरादकां खादेनोर्जꣳ सꣳसूदेनारण्यं जाम्बीलेन मृदं बर्स्वेभिः शर्कराभिरवकामवकाभिः शर्करामुत्सादेन जिह्वामवक्रन्देन तालुꣳ सरस्वतीं जिह्वाग्रेण॥१॥ इति॥

अत्र द्वितीयान्तनिर्दिष्टा देवताः। तृतीयान्तनिर्दिष्टान्यश्वस्याङ्गानि। इमां देवतामनेनाङ्गेन प्रीणयामीति होमकाल उभयं स्मर्तव्यमिति मन्त्राभिप्रायः। स्तेगाः क्षुद्रजन्तुविशेषा गोकर्णगा इति लोके प्रसिद्धाः। तदधिष्ठात्री काचिद्देवतेह लक्ष्यते। दंष्ट्रे उन्नते(तौ)[दन्तौ]। स्तेगाभिमानिनीं देवतां दंष्ट्राभ्यां यजामि। स एको मन्त्रः। एवमुत्तरत्रापि द्रष्टव्यम्। मण्डूकाः प्रसिद्धाः। दन्तमूलं जम्भस्तत्र भवा जम्भ्याः पार्श्वदन्ताः। आदका भक्षयित्री प्राणाभिमानिनी देवता। खादो भक्षणहेतुर्दन्तविशेषः। ऊर्ग्रसाभिमानिनी देवता। संसूदं(दः) संततक्षरणो नासिकादिः। अरण्यं प्रसिद्धम्। जाम्बीलमामाशयः, यत्र भक्षितं तृणं निधीयते तत्। मृत्प्रसिद्धा। बर्स्वा दन्तमूलमांसादीनि। शर्करास्तत्सदृशानि कठिनास्थीनि। अवकाः शैवालसदृशानि मांसानि। शर्करा प्रसिद्धा। उत्साद उच्चप्रदेशः। जिह्वा प्रसिद्धा। अवक्रन्द आन्तरं का(धि)(दि)कशब्दाभिव्यक्तिस्थानम्। तालु जिह्वामूलम्। सरस्वतीं जिह्वाग्रं चेत्युभयं प्रसिद्धम्॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये पञ्चमकाण्डे सप्तमप्रपाठक एकादशोऽनुवाकः॥११॥

---

(अथ पञ्चमाष्टके सप्तमप्रपाठके द्वादशोऽनुवाकः।)

---

वाजꣳ हनूभ्यामप आस्येनाऽऽदित्याञ्छ्म-

( पूर्वोक्तद्वितीयानुवाकगतमन्त्राभिधानम् )

श्म॒श्रुभि॑रुपया॒मम॑ध॒रेणो॒ष्ठेन॒ सदु॑त्त॒रेणा॒न्तरे॑णानू॒काशं॑ प्र॒का॒शेन॒ बाह्य॑ꣳ स्तन॒यि॒त्नुं नि॑र्बा॒धेन॑ सूर्या॒ग्नी चक्षु॑र्भ्यां वि॒द्युतौ॑ क॒नीन॑काभ्याम॒शनिं॑ म॒स्तिष्के॑ण॒ बलं॑ म॒ज्जभिः॑ ( १ ) ॥

( वा॒जं पञ्च॑विꣳशतिः । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां पञ्चमाष्टके सप्तमप्रपाठके द्वादशोऽनुवाकः ॥ १२ ॥

---

( अथ पञ्चमाष्टके सप्तमप्रपाठके द्वादशोऽनुवाकः । )

---

वाज॑म् । हनू॒भ्या॒मिति॒ हनु॑—भ्या॒म् । अ॒पः । आ॒स्ये॑न । आ॒दि॒त्यान् । श्मश्रु॑भि॒रिति॒ श्मश्रु॑—भिः॒ । उ॒प॒या॒ममित्यु॑प—या॒मम् । अध॑रेण । ओष्ठे॑न । सत् । उत्त॒॑रेणेत्युत्—त॒रे॒ण । अन्त॑रेण । अ॒नू॒का॒शमित्य॑नु—काशम् । प्र॒का॒शेनेति॑ प्र—का॒शेन॑ । बाह्य॑म् । स्त॒न॒यि॒त्नुम् । नि॒र्बा॒धेनेति॑ निः—बा॒धेन॑ । सू॒र्या॒ग्नी इति॑ सूर्य॑—अ॒ग्नी । चक्षु॑र्भ्या॒मिति॒ चक्षुः॑—भ्या॒म् । वि॒द्यु॒तावि॒ति॑ वि—द्युतौ॑ । क॒नीन॑काभ्याम् । अ॒शनि॑म् । म॒स्तिष्के॑ण । बल॑म् । म॒ज्ज॒भि॒रिति॑ म॒ज्ज—भि॒ः ( १ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे पञ्चमाष्टके सप्तमप्रपाठके द्वादशोऽनुवाकः ॥ १२ ॥

---

( पूर्वोक्ततृतीयानुवाकोक्तमन्त्राभिधानम् )

( अथ पञ्चमकाण्डे सप्तमप्रपाठके द्वादशोऽनुवाकः । )

विहितेषु चतुर्दशसु द्वितीयानुवाकगतान्मन्त्रानाह—

वाजꣳ हनूभ्यामप आस्येनाऽऽदित्याञ्छ्मश्रुभिरुपयाममधरेणोष्ठेन सदुत्तरेणान्तरेणानूकाशं प्रकाशेन बाह्यꣳ स्तनयित्नुं निर्बाधेन सूर्याग्नी चक्षुर्भ्यां विद्युतौ कनानकाभ्यामशनिं मस्तिष्केण बलं मज्जभिः ॥, इति ॥

वाजोऽन्नम्। हन्वादीनां पञ्चानां पदानामर्थाः प्रसिद्धाः। उपयामः पृथिवी, इयं वा उपयाम इति श्रुत्यन्तरात्। अधरोष्ठः प्रसिद्धः। सच्छब्देन द्यौरुच्यते। सीदन्त्यस्यां पुण्यकृत इति व्युत्पत्तेः। उत्तरेणेत्यत्रोष्ठेनेत्यनुवर्तते। अन्तरमोष्ठयोर्मध्यम्। अनूकाशो द्यावापृथिव्योर्मध्यम्। अनुक्रमेण काशन्ते भासन्ते ज्योतींष्यस्मिन्निति व्युत्पत्तेः। प्रकाशोऽभ्यन्तरं प्रकाशस्थानम्। बाह्यं ब्रह्माण्डाद्बहिःस्थानम्। स्तनयित्नुः प्रसिद्धः। निर्बाधो गमनकालीनः शब्दः। सूर्याग्नी चक्षुषी चेत्युभयं प्रसिद्धम्। विद्युतौ वृष्टिकालीनेतरकालीने। कनानके अक्षिस्थे कृष्णमण्डले। अशनिः प्रसिद्धः। मस्तिष्कः शिरोमांसम्। बलं मज्जेत्युभयं प्रसिद्धम् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये पञ्चमकाण्डे सप्तमप्रपाठके द्वादशोऽनुवाकः ॥ १२ ॥

( अथ पञ्चमाष्टके सप्तमप्रपाठके त्रयोदशोऽनुवाकः । )

कूर्माञ्छफैरच्छलाभिः कपिञ्जलान्त्साम कुष्ठिकाभिर्जवं जङ्घाभिरगदं जानुभ्यां वीर्यं कुहाभ्यां भयं प्रचालाभ्यां गुहोपपक्षाभ्यामश्विनावꣳसाभ्यामदितिꣳ शीर्ष्णा निर्ऋतिं निर्जाल्मकेन शीर्ष्णा ( १ ) ॥

( कूर्मान्त्रयोविꣳशतिः । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां पञ्चमाष्टके सप्तमप्रपाठके त्रयोदशोऽनुवाकः ॥ १३ ॥

( अथ पञ्चमाष्टके सप्तमप्रपाठके त्रयोदशोऽनुवाकः । )

---

कूर्मान् । शफैः । अच्छलाभिः । कपिञ्जलान् । साम । कुष्ठिकाभिः । जवम् । जङ्घाभिः । अगदम् । जानुभ्यामिति जानु—भ्याम् । वीर्यम् । कुहाभ्याम् । भयम् । प्रचालाभ्यामिति प्र—चालाभ्याम् । गुहा । उपपक्षाभ्यामित्युप—पक्षाभ्याम् । अश्विनौ । अंसाभ्याम् । अदितिम् । शीर्ष्णा । निर्ऋतिमिति निः—ऋतिम् । निर्जाल्मकेनेति निः—जाल्मकेन । शीर्ष्णा ( १ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे पञ्चमाष्टके सप्तमप्रपाठके त्रयोदशोऽनुवाकः ॥ १३ ॥

---

( अथ पञ्चमकाण्डे सप्तमप्रपाठके त्रयोदशोऽनुवाकः । )

---

अथ तृतीयानुवाकगतान्मन्त्रानाह—

कूर्माञ्छफैरच्छलाभिः कपिञ्जलान्साम
कुष्ठिकाभिर्जवं जङ्घाभिरगदं जानुभ्यां
वीर्यं कुहाभ्यां भयं प्रचालाभ्यां गुहोप-
पक्षाभ्यामश्विनावंसाभ्यामदितिं शीर्ष्णा
निर्ऋतिं निर्जाल्मकेन शीर्ष्णा ॥ , इति ॥

कूर्माः शफाश्च प्रसिद्धाः । अच्छलाः शफस्थानानि । कपिञ्जलाः प्रसिद्धाः । साम गीतिः । कुष्ठिका जङ्घाभ्यामधःप्रदेशाः । जवो वेगः । जङ्घाः [illegible] । वीर्यं बलम् । कुहा (हौ) हस्तयोरन्यपल्लवौ । भयं भीतिः । प्रचालौ पादयोरुपरिप्रदेशौ ।

( पूर्वोक्तचतुर्थानुवाकगतमन्त्राभिधानम् )

गुहा गुहनी । उपपक्षौ पार्श्वे । अश्रव्यंसशब्दौ प्रसिद्धौ । अदितिर्भूमिः । शीर्ष्णा शिरसा । निर्ऋतिः प्रसिद्धा । निर्जाल्मकेन केशरहितेन शीर्ष्णा शिरसा ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये पञ्चमकाण्डे सप्तमप्रपाठके त्रयोदशोऽनुवाकः ॥ १३ ॥

( अथ पञ्चमाष्टके सप्तमप्रपाठके चतुर्दशोऽनुवाकः । )

योक्त्रं गृध्राभिर्युगमानतेन चित्तं मन्याभिः संक्रोशान्प्राणैः प्रकाशेन त्वचं पराकाशेनान्तरां मशकान्केशैरिन्द्रꣳ स्वपसा वहेन बृहस्पतिꣳ शकुनिसादेन रथमुष्णिहाभिः ( १ ) ॥

( योक्त्रमेकविꣳशतिः । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां पञ्चमाष्टके सप्तमप्रपाठके चतुर्दशोऽनुवाकः ॥ १४ ॥

( अथ पञ्चमाष्टके सप्तमप्रपाठके चतुर्दशोऽनुवाकः । )

योक्त्रम् । गृध्राभिः । युगम् । आनतेनेत्या—नतेन । चित्तम् । मन्याभिः । संक्रोशानिति सं—क्रोशान् । प्राणैरिति प्र—अनैः । प्रकाशेनेति प्र—काशेन । त्वचम् । पराकाशेनेति परा—काशेन । अन्तराम् । मशकान् । केशैः । इन्द्रम् । स्वपसेति सु—अपसा । वहेन । बृहस्पतिम् । शकुनिसादेनेति शकुनि—सादेन । रथम् । उष्णिहाभिः ( १ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे पञ्चमाष्टके सप्तमप्रपाठके चतुर्दशोऽनुवाकः ॥ १४ ॥

( अथ पञ्चमकाण्डे सप्तमप्रपाठके चतुर्दशोऽनुवाकः । )

अथ चतुर्थानुवाकगतान्मन्त्रानाह—

योक्त्रं गृध्राभिर्युगमानतेन चित्तं मन्याभिः संक्रोशान्प्राणैः प्रकाशेन त्वचं पराकाशेनान्तरां मशकान्केशैरिन्द्रꣳ स्वपसा वहेन बृहस्पतिꣳ शकुनिसादेन रथमुष्णिहाभिः ॥ , इति ॥

योक्त्रं दर्भमयं बन्धनसाधनम् । गृध्राः कक्षाः । युगं कृतत्रेतादि । आनतं ग्रीवाप्रदेशः । चित्तं प्रसिद्धम् । मन्या ग्रीवारेखाः । संक्रोशा घोषाः । प्राणाश्चक्षुरादयः । प्रकाशो बाह्यं रूपम् । त्वक्त्वगिन्द्रियाभिमानिनी । पराकाशोऽभ्यन्तरं रूपम् । अन्तराऽभ्यन्तरप्रदेशाभिमानिनी । मशककेशेन्द्रशब्दाः प्रसिद्धाः । स्वपसा वहेन शोभनव्यापारेणाङ्गबलेन । बृहस्पतिः प्रसिद्धः । शकुनिसादः पृष्ठं, यत्र शकुनयः शक्ता वीराः सीदन्ति । रथः प्रसिद्धः । उष्णिहा रथवाहनदेशः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये पञ्चमकाण्डे सप्तमप्रपाठके चतुर्दशोऽनुवाकः ॥ १४ ॥

( अथ पञ्चमाष्टके सप्तमप्रपाठके पञ्चदशोऽनुवाकः । )

मित्रावरुणौ श्रोणीभ्यामिन्द्राग्नी शिखण्डाभ्यामिन्द्राबृहस्पती ऊरुभ्यामिन्द्राविष्णू अष्ठीवभ्याꣳ सवितारं पुच्छेन गन्धर्वाञ्छेपेनाप्सरसो मुष्काभ्यां पवमानं पायुना पवित्रं पोत्राभ्यामाक्रमणꣳ स्थूराभ्यां प्रतिक्रमणं कुष्ठाभ्याम् ( १ ) ॥

( मित्रावरुणौ द्वाविꣳशतिः । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां पञ्चमाष्टके सप्तमप्रपाठके पञ्चदशोऽनुवाकः ॥ १५ ॥

( अथ पञ्चमाष्टके सप्तमप्रपाठके पञ्चदशोऽनुवाकः । )

मित्रावरुणाविति मित्रा—वरुणौ । श्रोणीभ्यामिति श्रोणि—भ्याम् । इन्द्राग्नी इतीन्द्र—अग्नी । शिखण्डाभ्याम् । इन्द्राबृहस्पती इतीन्द्रा—बृहस्पती । ऊरुभ्यामित्यूरु—भ्याम् । इन्द्राविष्णू इतीन्द्रा—विष्णू । अष्ठीवद्भ्यामित्यष्ठीवत्—भ्याम् । सवितारम् । पुच्छेन । गन्धर्वान् । शेपेन । अप्सरसः । मुष्काभ्याम् । पवमानम् । पायुना । पवित्रम् । पोत्राभ्याम् । आक्रमणमित्या—क्रमणम् । स्थूराभ्याम् । प्रतिक्रमणमिति प्रति—क्रमणम् । कुष्ठाभ्याम् ( १ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे पञ्चमाष्टके सप्तमप्रपाठके पञ्चदशोऽनुवाकः ॥ १५ ॥

( अथ पञ्चमकाण्डे सप्तमप्रपाठके पञ्चदशोऽनुवाकः । )

अथ पञ्चमानुवाकगतान्मन्त्रानाह—

मित्रावरुणौ श्रोणीभ्यामिन्द्राग्नी शिखण्डाभ्यामिन्द्राबृहस्पती ऊरुभ्यामिन्द्राविष्णू अष्ठीवद्भ्याᳪं सवितारं पुच्छेन गन्धर्वाञ्छेपेनाप्सरसो मुष्काभ्यां पवमानं पायुना पवित्रं पोत्राभ्यामाक्रमणᳪं स्थूराभ्यां प्रतिक्रमणं कुष्ठाभ्याम्॥,इति॥

श्रोणी जघनगते मांसे। शिखण्डे ततोऽप्यधस्तने। ऊरू ततोऽप्यधस्तने। अष्ठीवती जङ्घयोः पृष्ठभागगते मांसे। पोत्रा( त्र )स्थूरकुष्ठशब्दैः पायुसमीपवर्तिन एव मांसविशेषा उच्यन्ते। देवतानामानि तु स्पष्टानि ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये पञ्चमकाण्डे सप्तमप्रपाठके पञ्चदशोऽनुवाकः ॥ १५ ॥

---

( अथ पञ्चमाष्टके सप्तमप्रपाठके षोडशोऽनुवाकः । )

---

इन्द्रस्य क्रोडोऽदित्यै पाजस्यं दिशां जत्रवो जीमूतान्हृदयौपशाभ्यामन्तरिक्षं पुरितता नभ उदर्येणेन्द्राणीं प्लीह्ना वल्मीकान्क्लोम्ना गिरीन्प्लाशिभिः समुद्रमुदरेण वैश्वानरं भस्मना(१)॥

( इन्द्रस्य द्वाविंशतिः । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां पञ्चमाष्टके सप्तमप्रपाठके षोडशोऽनुवाकः ॥ १६ ॥

---

( अथ पञ्चमाष्टके सप्तमप्रपाठके षोडशोऽनुवाकः । )

---

इन्द्रस्य । क्रोडः । अदित्यै । पाजस्यम् । दिशाम् । जत्रवः । जीमूतान् । हृदयौपशाभ्यामिति हृदय—औपशाभ्याम् । अन्तरिक्षम् । पुरितता । नभः । उदर्येण । इन्द्राणीम् । प्लीह्ना । वल्मीकान् । क्लोम्ना । गिरीन् । प्लाशिभिरिति

(पूर्वोक्तसप्तमानुवाकगतमन्त्राभिधानम्)

प्लाशि—भिः । समुद्रम् । उदरेण । वैश्वानरम् । भस्मना (१) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे पञ्चमाष्टके सप्तमप्रपाठके षोडशोऽनुवाकः ॥ १६ ॥

---

(अथ पञ्चमकाण्डे सप्तमप्रपाठके षोडशोऽनुवाकः ।)

---

अथ षष्ठानुवाकगतान्मन्त्रानाह—

इन्द्रस्य क्रोडोऽदित्यै पाजस्यं दिशां जत्रवो जीमूतान्हृदयौपशाभ्यामन्तरिक्षं पुरितता नभ उदर्येणेन्द्राणीं प्लीह्ना वल्मीकान्क्लोम्ना गिरीन्प्लाशिभिः समुद्रमुदरेण वैश्वानरं भस्मना॥, इति ॥

क्रोडो गलभागः । पाजस्यं पादतलम् । जत्रवोंऽससमीपवर्तीन्यस्थीनि । हृदयं हृदयमध्यमष्टदलं मांसपद्मम् । औपशं तद्वेष्टनं मांसम् । पुरितदन्त्राणि । उदर्यमुदरगतं मांसम् । प्लीहक्लोमशब्दाभ्यामुदरपार्श्ववर्तिनी मांसखण्डे उच्येते । तत्समीपवर्तीनि मांसानि प्लाशीनि । उदरं प्रसिद्धम् । भस्म जीर्णतृणादि । यथा पूर्वानुवाके द्वितीयया देवतानिर्देश एवमिन्द्रस्येत्यादौ षष्ठीचतुर्थीभ्यामपि देवतानिर्देशो द्रष्टव्यः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये पञ्चमकाण्डे सप्तमप्रपाठके षोडशोऽनुवाकः ॥ १६ ॥

---

(अथ पञ्चमाष्टके सप्तमप्रपाठके सप्तदशोऽनुवाकः ।)

---

पूष्णो वनिष्ठुरन्धाहे स्थूरगुदा सर्पान्गुदाभिर्ऋतून्पृष्टीभिर्दिवं पृष्ठेन वसूनां प्रथमा कीकसा रुद्राणां द्वितीयाऽऽदित्यानां तृतीयाऽङ्गि-

रसां चतुर्थी साध्यानां पञ्चमी विश्वेषां देवानांꣳ षष्ठी ( १ ) ॥

( पूष्णश्चतुर्विꣳशतिः । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां पञ्चमाष्टके सप्तमप्रपाठके सप्तदशोऽनुवाकः ॥ १७ ॥

---

( अथ पञ्चमाष्टके सप्तमप्रपाठके सप्तदशोऽनुवाकः । )

---

पूष्णः । वनिष्ठुः । अन्धाहेरित्यन्ध—अहेः । स्थूरगुदेति स्थूर—गुदा । सर्पान् । गुदाभिः । ऋतून् । पृष्टीभिरिति पृष्टि—भिः । दिवम् । पृष्ठेन । वसूनाम् । प्रथमा । कीकसा । रुद्राणाम् । द्वितीया । आदित्यानाम् । तृतीया । अङ्गिरसाम् । चतुर्थी । साध्यानाम् । पञ्चमी । विश्वेषाम् । देवानाम् । षष्ठी ( १ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे पञ्चमाष्टके सप्तमप्रपाठके सप्तदशोऽनुवाकः ॥ १७ ॥

---

( अथ पञ्चमकाण्डे सप्तमप्रपाठके सप्तदशोऽनुवाकः । )

---

अथ सप्तमानुवाकगतान्मन्त्रानाह—

पूष्णो वनिष्ठुरन्धाहे स्थूरगुदा सर्पान्गुदाभिर्ऋतून्पृष्टीभिर्दिवं पृष्ठेन वसूनां प्रथमा कीकसा

( पूर्वोक्ताष्टमानुवाकोक्तमन्त्राभिधानम् )

रुद्राणां द्वितीयाऽऽदित्यानां तृतीयाऽङ्गिरसां चतुर्थी साध्यानां पञ्चमी विश्वेषां देवानाꣳ षष्ठी ॥ , इति॥

वनिष्ठुः प्रौढमत्रम्। स्थूरगुदा गुदकाण्डे स्थूलो भागः। गुदा गुदकाण्डस्य सूक्ष्मभागः। पृष्ठ्यो गुदसमीपवर्तिन्यः शिराः। पृष्ठमुपरिभागः। तत्समीपवर्तिनोऽस्थिविशेषाः कीकसाः। ताश्च षट्संख्याकाः क्रमेण वस्वादीनां भागाः॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये पञ्चमकाण्डे सप्तमप्रपाठके सप्तदशोऽनुवाकः ॥ १७ ॥

---

( अथ पञ्चमाष्टके सप्तमप्रपाठकेऽष्टादशोऽनुवाकः । )

---

ओजो ग्रीवाभिर्निर्ऋतिमस्थभिरिन्द्रꣳ स्वपसा वहेन रुद्रस्य विचलः स्कन्धोऽहोरात्रयोर्द्वितीयोऽर्धमासानां तृतीयो मासां चतुर्थ ऋतूनां पञ्चमः संवत्सरस्य षष्ठः ( १ ) ॥

( ओजो विꣳशतिः । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां पञ्चमाष्टके सप्तमप्रपाठकेऽष्टादशोऽनुवाकः ॥ १८ ॥

---

( अथ पञ्चमाष्टके सप्तमप्रपाठकेऽष्टादशोऽनुवाकः । )

---

ओजः। ग्रीवाभिः। निर्ऋतिमिति निः—ऋतिम्। अस्थभिरित्यस्थ—भिः। इन्द्रम्। स्वपसेति सु—अपसा। वहेन। रुद्रस्य। विचल इति वि—चलः। स्कन्धः। अहोरात्रयोरित्यहः—रात्रयोः। द्वितीयः।

अर्धमासानामित्यर्ध—मासानाम् । तृतीयः । मासाम् । चतुर्थः । ऋतूनाम् । पञ्चमः । संवत्सरस्येति सं—व-त्सरस्य । षष्ठः ( १ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे पञ्चमाष्टके सप्तमप्रपाठकेऽष्टादशोऽनुवाकः ॥ १८ ॥

---

( अथ पञ्चमकाण्डे सप्तमप्रपाठकेऽष्टादशोऽनुवाकः । )

---

**अथाष्टमानुवाकगतान्मन्त्रानाह—**

ओजो ग्रीवाभिर्निर्ऋतिमस्थभिरिन्द्रꣳ स्वपसा वहेन रुद्रस्य विचलः स्कन्धोऽहोरात्रयोर्द्वितीयोऽर्धमासानां तृतीयो मासां चतुर्थ ऋतूनां पञ्चमः संवत्सरस्य षष्ठः ॥, इति ॥

**ग्रीवास्तदवयवाः** । अस्थीनि तत्रत्यानि । योऽयं वहो वहनयोग्यः प्रदेशः स्वपाः शोभनकर्मा वहनेऽत्यन्तस्वपाः सोऽयमिन्द्रस्य भागः । स्कन्धोऽवयवभेदेन षोढा भिन्नस्तत्रात्यन्तचञ्चलोऽवयवो रुद्रस्य । तत्तदनन्तरभाविनोऽहोरात्रादीनाम् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये पञ्चमकाण्डे सप्तमप्रपाठकेऽष्टादशोऽनुवाकः ॥ १८ ॥

---

( अथ पञ्चमाष्टके सप्तमप्रपाठक एकोनविंशोऽनुवाकः । )

---

आनन्दं नन्दथुना कामं प्रत्यासाभ्यां भयꣳ शितीमभ्यां प्रशिषं प्रशासाभ्याꣳ सूर्याच-

( पूर्वोक्तनवमानुवाकगतमन्त्राभिधानम् )

न्द्रमसौ वृक्याभ्याꣳ श्यामशबलौ मतस्नाभ्यां व्युष्टिꣳ रूपेण निर्मुक्तिमरूपेण ( १ ) ॥

( आनन्दꣳ षोडश । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां पञ्चमाष्टके सप्तमप्रपाठक एकोनविंशोऽनुवाकः ॥ १९ ॥

---

( अथ पञ्चमाष्टके सप्तमप्रपाठक एकोनविंशोऽनुवाकः । )

---

आनन्दमित्या—नन्दम् । नन्दथुना । कामम् । प्रत्यासाभ्यामिति प्रति—आसाभ्याम् । भयम् । शितीमभ्यामिति शितीम—भ्याम् । प्रशिषमिति प्र—शिषम् । प्रशासाभ्यामिति प्र—शासाभ्याम् । सूर्याचन्द्रमसाविति सूर्या—चन्द्रमसौ । वृक्याभ्याम् । श्यामशबलाविति श्याम—शबलौ । मतस्नाभ्याम् । व्युष्टिमिति वि—उष्टिम् । रूपेण । निर्मुक्तिमिति निः—मुक्तिम् । अरूपेण ( १ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे पञ्चमाष्टके सप्तमप्रपाठक एकोनविंशोऽनुवाकः ॥ १९ ॥

---

( अथ पञ्चमकाण्डे सप्तमप्रपाठक एकोनविंशोऽनुवाकः । )

---

अथ नवमानुवाकगतान्मन्त्रानाह—

आनन्दं नन्दथुना कामं प्रत्यासाभ्यां भयꣳ शितीमभ्यां प्रशिषं प्रशासाभ्याꣳ सूर्या-

( पूर्वोक्तदशमानुवाकगतमन्त्राभिधानम् )

चन्द्रमसौ वृक्याभ्याꣳ श्यामशबलौ मतस्नाभ्यां व्युष्टिꣳ रूपेण निम्रुक्तिमरूपेण॥, इति ॥

नन्दथुर्गुह्येन्द्रियम् । प्रत्यासशितीमप्रशासशब्दैर्गुह्यसमीपवर्तीन्यवयवयुगलान्यभिधीयन्ते । वृक्यौ पार्श्वद्वयवर्तिन्यौ मांसग्रन्थी । तत्समीपवर्तिनी मतस्ने । रूपं समीचीन आकारस्तद्विपरीतमरूपम् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये पञ्चमकाण्डे सप्तमप्रपाठक एकोनविंशोऽनुवाकः ॥ १९ ॥

---

( अथ पञ्चमाष्टके सप्तमप्रपाठके विंशोऽनुवाकः । )

---

अहर्माꣳसेन रात्रिं पीवसाऽपो यूषेण घृतꣳ रसेन श्यां वसया दूषीकाभिर्ह्रादुनिमश्रुभिः पृष्वां दिवꣳ रूपेण नक्षत्राणि प्रतिरूपेण पृथिवीं चर्मणा छवीं छव्योपाकृताय स्वाहाऽऽलब्धाय स्वाहा हुताय स्वाहा ( १ ) ॥

( अहरष्टाविꣳशतिः । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां पञ्चमाष्टके सप्तमप्रपाठके विंशोऽनुवाकः ॥ २० ॥

---

( अथ पञ्चमाष्टके सप्तमप्रपाठके विंशोऽनुवाकः । )

---

अहः । माꣳसेन । रात्रिम् । पीवसा । अपः । यूषेण । घृतम् । रसेन । श्याम् । वसया । दूषीकाभिः । ह्रादुनिम् । अश्रुभिरित्यश्रु—भिः । पृष्वाम् । दिवम् । रूपेण । नक्षत्राणि । प्रतिरूपे-

(पूर्वोक्तैकादशानुवाकगतमन्त्राभिधानम्)

णेति प्रति—रूपेण। पृथिवीम्। चर्मणा। छवीम्। छव्या। उपाकृतायेत्युप—आकृताय। स्वाहा। आलब्धायेत्या—लब्धाय। स्वाहा। हुताय। स्वाहा (१)॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे पञ्चमाष्टके सप्तमप्रपाठके विंशोऽनुवाकः॥ २०॥

---

(अथ पञ्चमकाण्डे सप्तमप्रपाठके विंशोऽनुवाकः।)

---

अथ दशमानुवाकगतान्मन्त्रानाह—

अहर्मा॑ꣳसेन रात्रिं पीवसाऽपो यूषेण घृतꣳ रसेन श्यां वसया दूषीकाभिर्ह्रादुनिमश्रुभिः पृष्वां दिवꣳ रूपेण नक्षत्राणि प्रतिरूपेण पृथिवीं चर्मणा छवीं छव्योपाकृताय स्वाहाऽऽलब्धाय स्वाहा हुताय स्वाहा॥, इति॥

पीवोयूषरसवसाशब्दास्तत्रत्यद्रवाणां विशेषाः। दूषीका नेत्रयोर्मलम्। अश्रूणि नेत्रजलानि। रूपं नेत्रगोलकम्। प्रतिरूपं तत्रत्यं प्रतिबिम्बम्। चर्म पक्ष्मपटलम्। छवी नेत्रगता कान्तिः। योऽयमुपाकृतमश्वमभिमन्यमानो देवस्तस्मा इदं स्वाहा हुतमस्तु। तथैवाऽऽलब्धमभिमन्यमानाय हुतमभिमन्यमानाय च देवाय तत्तदवस्थापन्नमिदं हुतमस्तु॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये पञ्चमकाण्डे सप्तमप्रपाठके विंशोऽनुवाकः॥ २०॥

---

(अथ पञ्चमाष्टके सप्तमप्रपाठक एकविंशोऽनुवाकः।)

---

अग्नेः पक्षतिः सरस्वत्यै निपक्षतिः

सोमस्य तृतीयाऽपां चतुर्थ्योषधीनां पञ्चमी संवत्सरस्य षष्ठी मरुतांꣳ सप्तमी बृहस्पतेरष्टमी मित्रस्य नवमी वरुणस्य दशमीन्द्रस्यैकादशी विश्वेषां देवानां द्वादशी द्यावापृथिव्योः पार्श्वं यमस्य पाटूरः ( १ ) ॥

( अग्नेरेकान्नत्रिꣳशत् । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां पञ्चमाष्टके सप्तमप्रपाठक एकविंशोऽनुवाकः ॥ २१ ॥

---

( अथ पञ्चमाष्टके सप्तमप्रपाठक एकविंशोऽनुवाकः । )

---

अग्नेः । पक्षतिः । सरस्वत्यै । निपक्षतिरिति नि—पक्षतिः । सोमस्य । तृतीया । अपाम् । चतुर्थी । ओषधीनाम् । पञ्चमी । संवत्सरस्येति सं—वत्सरस्य । षष्ठी । मरुताम् । सप्तमी । बृहस्पतेः । अष्टमी । मित्रस्य । नवमी । वरुणस्य । दशमी । इन्द्रस्य । एकादशी । विश्वेषाम् । देवानाम् । द्वादशी । द्यावापृथिव्योरिति द्यावा—पृथिव्योः । पार्श्वम् । यमस्य । पाटूरः ( १ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे पञ्चमाष्टके सप्तमप्रपाठक एकविंशोऽनुवाकः ॥ २१ ॥

---

( पूर्वोक्तद्वादशानुवाकगतमन्त्राभिधानम् )

( अथ पञ्चमकाण्डे सप्तमप्रपाठक एकविंशोऽनुवाकः । )

---

अथैकादशानुवाकगतान्मन्त्रानाह—

अग्नेः पक्षतिः सरस्वत्यै निपक्षतिः सोमस्य तृतीयाऽपां चतुर्थ्योषधीनां पञ्चमी संवत्सरस्य षष्ठी मरुतां सप्तमी बृहस्पतेरष्टमी मित्रस्य नवमी वरुणस्य दशमीन्द्रस्यैकादशी विश्वेषां देवानां द्वादशी द्यावापृथिव्योः पार्श्वं यमस्य पाटूरः ॥, इति ॥

दक्षिणस्य पार्श्वस्य मूले वर्तमाना येयं वङ्क्रिः सा पक्षतिः । तदनन्तरभाविनी वङ्क्रिर्निपक्षतिः । एवं तत्तदनन्तरभाविन्यो वङ्क्रयो द्वितीयादिशब्दैरुच्यन्ते । एता वङ्क्रयो यस्मिन्पृष्ठभागगतेऽस्थिपार्श्वविशेषे संबध्यन्ते सोऽयं पाटूरः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये पञ्चमकाण्डे सप्तमप्रपाठक एकविंशोऽनुवाकः ॥ २१ ॥

---

( अथ पञ्चमाष्टके सप्तमप्रपाठके द्वाविंशोऽनुवाकः । )

---

वायोः पक्षतिः सरस्वतो निपक्षतिश्चन्द्रमसस्तृतीया नक्षत्राणां चतुर्थी सवितुः पञ्चमी रुद्रस्य षष्ठी सर्पाणां सप्तम्यर्यम्णोऽष्टमी त्वष्टुर्नवमी धातुर्दशमीन्द्राण्या एकादश्यदित्यै द्वादशी द्यावापृथिव्योः पार्श्वं यम्यै पाटूरः ( १ ) ॥

( वायोरष्टाविंशतिः । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां पञ्चमाष्टके सप्तमप्रपाठके द्वाविंशोऽनुवाकः ॥ २२ ॥

---

( अथ पञ्चमाष्टके सप्तमप्रपाठके द्वाविंशोऽनुवाकः । )

---

वायोः । पक्षतिः । सरस्वतः । निपक्षतिरिति नि—पक्षतिः । चन्द्रमसः । तृतीया । नक्षत्राणाम् । चतुर्थी । सवितुः । पञ्चमी । रुद्रस्य । षष्ठी । सर्पाणाम् । सप्तमी । अर्यम्णः । अष्टमी । त्वष्टुः । नवमी । धातुः । दशमी । इन्द्राण्याः । एकादशी । अदित्यै । द्वादशी । द्यावापृथिव्योरिति द्यावा—पृथिव्योः । पार्श्वम् । यम्यै । पाटूरः ( १ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे पञ्चमाष्टके सप्तमप्रपाठके द्वाविंशोऽनुवाकः ॥ २२ ॥

---

( अथ पञ्चमकाण्डे सप्तमप्रपाठके द्वाविंशोऽनुवाकः । )

---

अथ द्वादशानुवाकगतान्मन्त्रानाह—

वायोः पक्षतिः सरस्वतो निपक्षतिश्चन्द्रमसस्तृतीया नक्षत्राणां चतुर्थी सवितुः पञ्चमी रुद्रस्य षष्ठी सर्पाणाꣳ सप्तम्यर्यम्णोऽष्टमी त्वष्टुर्नवमी धातुर्दशमीन्द्राण्या एकादश्यदित्यै द्वादशी द्यावापृथिव्योः पार्श्वं यम्यै पाटूरः ॥ , इति ॥

पूर्वोक्तदक्षिणपार्श्ववदुत्तरपार्श्वपरत्वेनेदं सर्वं व्याख्येयम् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये पञ्चमकाण्डे सप्तमप्रपाठके द्वाविंशोऽनुवाकः ॥ २२ ॥

---

( पूर्वोक्तत्रयोदशानुवाकगतमन्त्राभिधानम् )

( अथ पञ्चमाष्टके सप्तमप्रपठके त्रयोविंशोऽनुवाकः । )

पन्थामनूवृग्भ्याꣳ संततिꣳ स्नावन्याभ्याꣳ शुकान्पित्तेन हरिमाणं यक्ना हलीक्ष्णान्पापवातेन कूश्मान्छकंभिः शवर्तानूवंध्येन शुनो विशसंनेन सर्पाँल्लोहितगन्धेन वयाꣳसि पक्वगन्धेन पिपीलिकाः प्रशादेन ( १ ) ॥

( पन्थां द्वाविꣳशतिः । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां पञ्चमाष्टके सप्तमप्रपाठके त्रयोविंशोऽनुवाकः ॥ २३ ॥

( अथ पञ्चमाष्टके सप्तमप्रपाठके त्रयोविंशोऽनुवाकः । )

पन्थाम् । अनूवृग्भ्यामित्यनूवृक्—भ्याम् । संततिमिति सं—ततिम् । स्नावन्याभ्याम् । शुकान् । पित्तेन । हरिमाणम् । यक्ना । हलीक्ष्णान् । पापवातेनेति पाप—वातेन । कूश्मान् । शकंभिरिति शकं—भिः । शवर्तान् । ऊवध्येन । शुनः । विशसंनेनेति वि—शसंनेन । सर्पान् । लोहितगन्धेनेति लोहित—गन्धेन । वयाꣳसि । पक्वगन्धेनेति पक्व—गन्धेन । पिपीलिकाः । प्रशादेनेति प्र—शादेन ( १ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे पञ्चमाष्टके सप्तमप्रपाठके त्रयोविंशोऽनुवाकः ॥ २३ ॥

( अथ पञ्चमकाण्डे सप्तमप्रपाठके त्रयोविंशोऽनुवाकः । )

अथ त्रयोदशानुवाकगतान्मन्त्रानाह—

पन्थामनूवृग्भ्यां संततिं स्नावन्याभ्यां शुकान्पित्तेन हरिमाणं यक्ना हलीक्ष्णान्पापवातेन कूश्मान्छकभिः शवर्तानूवध्येन शुनो विशसनेन सर्पाँल्लोहितगन्धेन वयांसि पक्वगन्धेन पिपीलिकाः प्रशादेन ॥ , इति ॥

अनूवृक्शब्देन पूर्वोक्तयोर्वृक्ययोः समीपवर्तिनी मांसखण्डे उच्येते । स्नावन्यशब्देन सूक्ष्माणां स्नायुविशेषाणां मूले, ते पार्श्वद्वयवर्तिन्यौ द्वे शिरे उच्येते । पित्तं प्रसिद्धम् । यक्ना यकृच्छब्देन पित्तगतो वर्णविशेषः । पापवातोऽपानवायुः । शकानि शकृत्पिण्डान् । ऊवध्यमपक्वं शकृत् । विशसनं छिन्नस्थानम् । लोहितगन्धपक्वगन्धौ प्रसिद्धौ । प्रशादो विशसनकालपतितो मांसलेशविशेषः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये पञ्चमकाण्डे सप्तमप्रपाठके त्रयोविंशोऽनुवाकः ॥ २३ ॥

( अथ पञ्चमाष्टके सप्तमप्रपाठके चतुर्विंशोऽनुवाकः । )

क्रमैरत्यंक्रमीद्वाजी विश्वैर्देवैर्यज्ञियैः संविदानः । स नो नय सुकृतस्य लोकं तस्य ते वयं स्वधया मदेम ( १ ) ॥

( क्रमैरष्टादश । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां पञ्चमाष्टके सप्तमप्रपाठके चतुर्विंशोऽनुवाकः ॥ २४ ॥

( अथ पञ्चमाष्टके सप्तमप्रपाठके चतुर्विंशोऽनुवाकः । )

क्रमैः । अतीति । अक्रमीत् । वाजी । विश्वैः । देवैः । यज्ञियैः । संविदान इति सं-विदानः । सः । नः । नय । सुकृतस्येति सु-कृतस्य । लोकम् । तस्य । ते । वयम् । स्वधयेति स्व-धया । मदेम (१) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे पञ्चमाष्टके सप्तमप्रपाठके चतुर्विंशोऽनुवाकः ॥ २४ ॥

( अथ पञ्चमकाण्डे सप्तमप्रपाठके चतुर्विंशोऽनुवाकः । )

अथ चतुर्दशानुवाकोक्तं मन्त्रमाह—

क्रमैरत्यक्रमीद्वाजी विश्वैर्देवैर्यज्ञियैः संविदानः । स नो नय सुकृतस्य लोकं तस्य ते वयꣳ स्वधया मदेम ॥, इति ॥

अयं वाजी पूर्वोक्तावयवसंपन्नोऽश्वो यज्ञियैर्यज्ञार्हैर्विश्वैर्देवैः पूर्वोक्तैः स्तेगादिभिः पिपीलिकान्तैः सर्वैर्देवैरैकमत्यं गतः क्रमैः पादविन्यासैरत्यक्रमीद्भूलोकमतिक्रम्य स्वर्गं गतवान् । हे वाजिन्स त्वं नोऽस्मान्सुकृतस्य फलभूतं लोकं नय प्रापय । तस्य ते तृप्त्यर्थं वयं स्वधाशब्दोपलक्षितेनाऽऽज्येन हविषा हर्षं जनयाम ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये पञ्चमकाण्डे सप्तमप्रपाठके चतुर्विंशोऽनुवाकः ॥ २४ ॥

( अश्वमेधब्राह्मणोक्तद्यौस्त इतिमन्त्राभिधानम् )

( अथ पञ्चमाष्टके सप्तमप्रपाठके पञ्चविंशोऽनुवाकः । )

---

द्यौस्ते पृष्ठं पृथिवी सधस्थमात्माऽन्तरिक्षꣳ समुद्रो योनिः सूर्यस्ते चक्षुर्वातः प्राणश्चन्द्रमाः श्रोत्रं मासाश्चार्धमासाश्च पर्वाण्यृतवोऽङ्गानि संवत्सरो महिमा ( १ ) ॥

( द्यौस्ते पञ्चविꣳशतिः । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां पञ्चमाष्टके सप्तमप्रपाठके पञ्चविंशोऽनुवाकः ॥ २५ ॥

---

( अथ पञ्चमाष्टके सप्तमप्रपाठके पञ्चविंशोऽनुवाकः । )

---

द्यौः । ते । पृष्ठम् । पृथिवी । सधस्थमिति सध—स्थम् । आत्मा । अन्तरिक्षम् । समुद्रः । योनिः । सूर्यः । ते । चक्षुः । वातः । प्राण इति प्र—अनः । चन्द्रमाः । श्रोत्रम् । मासाः । च । अर्धमासा इत्यर्ध—मासाः । च । पर्वाणि । ऋतवः । अङ्गानि । संवत्सर इति सं—वत्सरः । महिमा ( १ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे पञ्चमाष्टके सप्तमप्रपाठके पञ्चविंशोऽनुवाकः ॥ २५ ॥

---

( अथ पञ्चमकाण्डे सप्तमप्रपाठके पञ्चविंशोऽनुवाकः । )

---

एवमाज्याहुतिसाधनभूताश्चतुर्दशानुवाकगता मन्त्रा उक्ताः ।

( अश्वमेधब्राह्मणोक्ताभिः पशुरितिमन्त्राभिधानम् )

अथ यद्विहितमश्वेमधब्राह्मणे—"द्यौस्ते पृष्ठं पृथिवी सधस्थमित्यश्वमनुमन्त्रयते" इति, तं मन्त्रमस्मिन्पञ्चविंशानुवाके पठति—

द्यौस्ते पृष्ठं पृथिवी सधस्थमात्माऽन्तरिक्षꣳ समुद्रो योनिः सूर्यस्ते चक्षुर्वातः प्राणश्चन्द्रमाः श्रोत्रं मासाश्चार्धमासाश्च पर्वाण्यृतवोऽङ्गानि संवत्सरो महिमा ॥ , इति ॥

हेऽश्व येयं द्यौः सा ते तव पृष्ठमुपरिभागः । या च पृथिवी सा यजमानादिभिः सह तवावस्थानहेतुः । यच्चान्तरिक्षं तत्तवाऽऽत्मोदरभागः । योऽयं समुद्रः स त्वदीययोनिः ।'अप्सुयोनिर्वा अश्वः' इति श्रुत्यन्तरात् । यः सूर्यः स विराड्रूपस्य तव चक्षुः । यो वातः स तव प्राणः । यश्चन्द्रमाः स तव श्रोत्रम् । मासाः पक्षाश्च तव पर्वाणि । वसन्ताद्यृतवस्तव हस्तपादाद्यङ्गानि । संवत्सरस्तव युद्धजयादिरूपो महिमा ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये पञ्चमकाण्डे सप्तमप्रपाठके पञ्चविंशोऽनुवाकः ॥ २५ ॥

---

( अथ पञ्चमाष्टके सप्तमप्रपाठके षड्विंशोऽनुवाकः । )

---

अग्निः पशुरासीत्तेनायजन्त स एतं लोकमजयद्यस्मिन्नग्निः स ते लोकस्तं जेष्यस्यथावजिघ्र वायुः पशुरासीत्तेनायजन्त स एतं लोकमजयद्यस्मिन्वायुः स ते लोकस्तस्मात्त्वाऽन्तरेष्यामि यदि नावजिघ्रस्यादित्यः पशुरासीत्तेनायजन्त स एतं लोकमजयद्यस्मिन्नादित्यः स ते लोकस्तं जेष्यसि यद्यवजिघ्रसि ( १ ) ॥

( यस्मिन्नष्टौ च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां पञ्चमाष्टके
सप्तमप्रपाठके षड्विंशोऽनुवाकः ॥ २६ ॥

---

यो वा अयथादेवतं त्वामग्न इन्द्रस्य चित्तिं यथा वै वयो वै यदाकूता-द्यास्ते अग्ने मयि गृह्णामि प्रजापतिः स्तेगान्वाजं कूर्मान्योक्रं मित्रावरुणा-विन्द्रस्य पूष्ण ओजं आनन्दमहरग्नेर्वायोः पन्था क्रमैर्यास्तेऽग्निः पशुः षड्विंशतिः ॥ २६ ॥

यो वा एवाऽऽहुतिमभवन्पथिभिरवरुध्याऽऽनन्दमष्टौ
पञ्चाशत् ॥ ५८ ॥

हरिः ॐ ।

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां पञ्चमाष्टके
सप्तमः प्रपाठकः ॥ ७ ॥

---

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां पञ्चमाष्टकः ॥ ५ ॥

---

( अथ पञ्चमाष्टके सप्तमप्रपाठके षड्विंशोऽनुवाकः । )

---

अग्निः । पशुः । आसीत् । तेन । अयजन्त । सः । एतम् । लोकम् । अजयत् । यस्मिन् । अग्निः । सः । ते । लोकः । तम् । जेष्यसि । अथ । अवेति । जिघ्र । वायुः । पशुः । आसीत् । तेन । अयजन्त । सः । एतम् । लोकम् । अजयत् । यस्मिन् । वायुः । सः । ते । लोकः । तस्मात् । त्वा । अन्तः । एष्यामि । यदि । न । अवजिघ्रसीत्यव—जिघ्रसि । आदित्यः ।

( अश्वमेधब्राह्मणोक्ताग्निः पशुरितिमन्त्राभिधानम् )

पशुः । आसीत् । तेन॑ । अयजन्त । सः । एतम् । लोकम् । अजयत् । यस्मि॑न् । आदित्यः । सः । ते । लोकः । तम् । जेष्यसि । यदि॑ । अवजिघ्रसीत्यंव—जिघ्रंसि ( १ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे पञ्चमाष्टके सप्तमप्रपाठके षड्विंशोऽनुवाकः ॥ २६ ॥

---

हरिः ॐ ।

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे पञ्चमाष्टके सप्तमः प्रपाठकः ॥ ७ ॥

---

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहिता-पदपाठे पञ्चमाष्टकः ॥ ५ ॥

---

( अथ पञ्चमकाण्डे सप्तमप्रपाठके षड्विंशोऽनुवाकः । )

---

अथ यदुक्तमश्वमेधब्राह्मणे—" अग्निः पशुरासीदित्यवघ्रापयेत् " इति, तमिमं मन्त्रमस्मिन्षड्विंशानुवाके पठति—

अग्निः पशुरासीत्तेनायजन्त स एतं लोकमजयद्यस्मिन्नग्निः स ते लोकस्तं जेष्यस्यथाव जिघ्र वायुः पशुरासीत्तेनायजन्त स एतं लोकमजयद्यस्मिन्वायुः स ते लोकस्तस्मात्त्वाऽन्तरेष्यामि यदि नावजिघ्रस्यादित्यः पशुरासीत्तेनायजन्त स एतं लोकमजयद्यस्मिन्नादित्यः स ते लोकस्तं जेष्यसि यद्यवजिघ्रसि ॥, इति ॥

हेऽश्वायमग्निर्देवः पुरा कस्मिंश्चिज्जन्मनि त्वमिवाश्वमेधयागहेतुरश्वाख्यः पशुरासीत् । तेनाग्निरूपेण पशुना केचिद्यजमाना अयजन्त । स च पशुरग्निर्देवो भूत्वा लोकमेतमजयत् । यस्मिँल्लोके सोऽग्निरिदानीं तिष्ठति स एव तत्रापि

लोको भविष्यति। त्वं च तं लोकं जेष्यसि। अथैवं सति त्वमुत्सुकः सन्निद-मुदकमवजिघ्र। एवं वाय्वादित्यवाक्ययोरपि योजनम्। वायुवाक्ये तु व्यतिरे-कोपन्यासः। यद्युदकं नावजिघ्रसि तर्हि तस्माद्वायुलोकात्त्वामन्तरेष्यामि त्वमन्तरितस्तस्माल्लोकाद्भ्रष्टो यथा भवसि तथा करिष्यामि। आदित्यवाक्ये त्वग्निवाक्यवदन्वयः। यद्युदकमवजिघ्रसि तर्हि तमादित्यलोकं जेष्यसि॥

अत्रास्य प्रपाठकस्य विनियोगसंग्रहः—

गायत्र्यादिभिराग्नेयमन्त्रैः पञ्च चितीः स्पृशेत्।
अग्ने देवानिहेत्याद्या नाचिकेतचितीरिताः॥ १॥
गायत्र्याद्याः पञ्च मन्त्रा इहाऽऽग्नेया यथाक्रमम्।
सौरी चित्रवती चित्रं देवानामित्यसौ भवेत्॥ २॥
त्वामग्ने वृषभं दध्यादृत्येकं चिनिरश्वके।
संवत्सरस्येति दध्यात्प्राजापत्यामिहेष्टकाम्॥ ३॥
येन देवा उखामिन्धे दध्यादूर्यानिसंज्ञिकाः।
शतायुधायेति पञ्चमन्त्रैः पञ्चेष्टका इमाः॥ ४॥
इन्द्रस्य वज्रिणीर्दध्यादग्नाविष्णू घृताहुतिः।
चित्तिं जुहोमि चाग्ने तं सप्त ते त्रीञ्जुहोति हि॥ ५॥
अग्ने यशेत्युपादध्याद्राष्ट्रभृत्संज्ञकेष्टकाः।
सुवर्णपञ्चभिर्हुत्वा तेजस्तिस्रो दधाति हि॥ ६॥
यास्ते तिस्रो जुहोत्येवं तच्चा यामीति होमकः।
यदाकूतादिति प्रोक्तैर्मन्त्रैराकूतिहोमकः॥ ७॥
यास्ते स्पर्शश्चतस्रेति मन्त्रात्कूर्मं दधाति हि।
मयीत्यग्निग्रहो गायत्र्याद्याः पूर्वमुदीरिताः॥ ८॥
ताभिः पञ्चेष्टका दध्यादग्निकाण्डमितीरितम्।
स्तेगानित्यश्वमेधाङ्गमन्त्राः षोडशसु श्रुताः॥
अनुवाकेषु काडं यत्पञ्चमं य(त)द्धि सुस्थितम्॥ ९॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये पञ्चमकाण्डे सप्तमप्रपाठके षड्विंशोऽनुवाकः॥ २६॥

---

( अश्वमेधब्राह्मणोक्ताग्निः पशुरितिमन्त्राभिधानम्। )

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥ १ ॥

इति श्रीमद्विद्यातीर्थमहेश्वरापरावतारस्य श्रीमद्राजाधिराजपरमेश्वरस्य श्रीवीरबुक्कमहाराजस्याऽऽज्ञापरिपालकेन सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीय तैत्तिरीयसंहिताभाष्ये पञ्चमकाण्डे सप्तमः प्रपाठकः ॥ ७ ॥

---

इति श्रीमद्विद्यातीर्थमहेश्वरापरावतारस्य श्रीमद्राजाधिराजपरमेश्वरस्य श्रीवीरबुक्कमहाराजस्याऽऽज्ञापरिपालकेन सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये पञ्चमः काण्डः ॥ ५ ॥

---

मूलक्रमेण पञ्चमाष्टके—प्र० ७ अ० १२०
भाष्यक्रमेण पञ्चमकाण्डे—प्र० ७ अ० १२०
मूलक्रमेणाऽऽदितः समष्ट्यङ्काः—अष्ट० ५ प्र० ३३ ण० ४६८
भाष्यक्रमेणाऽऽदितः समष्ट्यङ्काः—का० ५ प्र० ३३ अ० ४६३

समाप्तोऽयं श्रीमत्सायणाचार्यविरचितभाष्यसमे-
तायाः सपदपाठायाः कृष्णयुर्वेदीयतैत्तिरी-
यसंहितायाः पञ्चमः काण्डः ॥ ५ ॥